अखिलभारतीय–प्राच्यविद्यासम्मेलनम्

शतवर्षमहोत्सवग्रन्थमाला–३८

पूज्यश्रीराघवेन्द्रयतिकृता

# न्यायमुक्तावली

(पुनर्मुद्रणम्)


प्रधानसंपादकः

आचार्यः श्रीनिवासः वरखेडी

कुलगुरु

संपादकः

आचार्यः मधुसूदनः पेन्ना

संचालकः संशोधन–प्रकाशनविभागः




राष्ट्रहिताय संस्कृतम्


कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः

रामटेकम्, जि. नागपुरम् (महाराष्ट्रम्)

तथा

न्यू भारतीय बुक कॉर्पोरेशन, नव देहली

2020

अखिलभारतीय–प्राच्यविद्यासम्मेलनम्
शतवर्षमहोत्सवग्रन्थमाला – 38

पूज्यश्रीराघवेन्द्रयतिकृता

# न्यायमुक्तावली

(पुनर्मुद्रणम्)

प्रधानसंपादकः
आचार्यः श्रीनिवासः वरखेडी
कुलगुरु

संपादकः
आचार्यः मधुसूदनः पेन्ना
संचालकः संशोधन–प्रकाशनविभागः




कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः
रामटेकम्, जि. नागपुरम् (महाराष्ट्रम्)
एवं

न्यू भारतीय बुक कॉरपोरेशन, दिल्ली

| | | |
|---|---|---|
| शीर्षकम् | – | न्यायमुक्तावली |
| लेखकः | – | पूज्यश्रीराघवेन्द्रयतिः |
| प्रधानसंपादकः | – | आचार्यः श्रीनिवासः वरखेडी<br>कुलगुरु, क.का.सं.वि., रामटेकम् |
| संपादकः | – | आचार्यः मधुसूदनः पेन्ना<br>संचालकः संशोधन–प्रकाशनविभागः<br>क.का.सं.वि., रामटेकम् |
| संपादकमण्डलम् | – | डॉ. दिनकर मराठे, क.का.सं.वि., रामटेक<br>डॉ. वीना गाणु, नागपुर. |
| प्रकाशनवर्षम् | – | २०२० |
| आवृत्तिः | – | प्रथमा |
| मूल्यम् | – | 520.00 |
| आय.एस.बी.एन. | – | 9788183154161 |
| मुखपृष्ठम् | – | श्री. उमेश पाटील, क.का.सं.वि., रामटेकम् |
| प्रकाशकः | – | कुलसचिवः,<br>कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः,<br>प्रशासकीयभवनम्, मौदामार्गस्य, रामटेकम्. |

एवं

न्यू भारतीय बुक कॉरपोरेशन
२०८, द्वितीय तल, प्रकाशदीप बिल्डिंग,
४७३५/२२, अंसारी रोड, दरिया गंज,
नई दिल्ली – ११०००२
फोन नं. : २३२८०२१४, २३२८०२०९



एस. के. आफॉसेट, दिल्ली

## PREFACE

It is indeed a matter of great pleasure and pride for Kavikulaguru Kalidas Sanskrit University, Ramtek to have this rarest opportunity of hosting the 50th session of All India Oriental Conference at Nagpur. This AIOC-50th session at Nagpur will be forever remembered by all as the year 2019 also happens to be the year of Centenary Celebration of AIOC. The premier objective with which the great scholars of yester years had contemplated and established this national academic event called All India Oriental Conference has been achieved through these years with scores of young scholars contributing significantly to the treasure house of knowledge through their valuable research work.

The research of yore and of the present should be properly recorded so as to make it easily available to all lovers of knowledge and wisdom in the years to come. With this objective, we have contemplated to commemorate the 100th year of this grand event of 50th session of AIOC by way of publishing 100 monographs on different subjects in four languages viz., Sanskrit, Hindi, Marathi and English. It is no doubt a herculean task but still worth of it, for the reason that these 100 monographs will inspire many young scholars to take upon a fresh study and research of the oriental subjects with more vigour and zeal.

The AIOC Centenary Publication Series includes wide variety of subjects like Literature, Language, Veda, Indian Philosophy, Sanskrit Grammar, Law, Children Literature, Yoga, Astronomy and Astrology, Ayurveda, Pali, Prakrit, Jain, Buddhism, Education, Library Science, Poetics, Aesthetics, and Indology. It also includes reprint of some rare texts of academic importance which have gone out of print are not easily available. We wish to mark this centenary celebrations with this series that connects the glory of the past and aspirations of future. I place on record my sincere gratitude to all the authors of these monographs who have kindly contributed to the richness of this

series.

I am confident that the books published in these series will definitely inspire the lovers of Oriental Learning in general and of Sanskrit Language and Literature in particular.

On this occasion, we have published a memorable book of all the speeches of Section-Presidents of all previous sessions of AIOC. It is indeed a very capacious addition to any collection. I with all respect thank two eminent scholars of our times - Prof. Gautam Patel, President and Prof. Saroja Bhate, General Secretary, the torch bearers of AIOC who have not only encouraged us in this venture but also made all efforts to provide these valuable historical speeches for us. I thank all executive members of AIOC and my colleagues of the varsity for making this event a grand success.

My words fall short in describing the painstaking efforts and scholarly commitment of my esteemed colleague Prof. Madhusudan Penna, local secretary of this session in bringing out this series.

I also take this opportunity to profusely thank Shri. Subhash Jain and Shri Dipak Jain, the proprietors of New Bharatiya Book Corporation, New Delhi for their enthusiastic approach and timely work with all precision and grace.

Let us all sanctify ourselves in the eternal flow of wisdom by reading these books and recommending these to others also!

सरस्वती श्रुतिमहती महीयताम्

Ramtek
10th January 2020

Prof. Srinivasa Varakhedi
Vice Chancellor, KKSU

**Kavikulaguru Kalidas Sanskrit University**
**All India Oriental Conference**

**100th Year 50th Session**
**10th-12th January, 2020**

**Chief Patron**
Hon'ble Nitin Gadkari
Minister of Road, Transport & Highways of India

**Patron**
Prof. Srinivasa Varakhedi
Vice Chancellor, KKSU, Ramtek

**AIOC President**
Prof. Gautam Patel
Chairman, Sanskrit Seva Samiti, Ahmedabad.

**AIOC General Secretary**
Prof. Saroja Bhate
Professor of Sanskrit (Retd.), Pune University, Pune

**AIOC Local Secretary**
Prof. Penna Madhusudan
Dean, KKSU, Ramtek

**Additional Local Secretary**
Dr. Harekrishna Agasti
Dr. Kalapini Agasti
Dr. Dinakar Marathe
Dr. Parag Joshi

**Organising Committee**
Prof. C.G. Vijayakumar, Registrar (I/c) & Dean, KKSU, Ramtek
Prof. Nanda Puri, Dean, KKSU, Ramtek
Prof. Krishnakumar Pandey, Dean, KKSU, Ramtek
Prof. Laita Chandratre, Dean, KKSU, Ramtek
Dr. Ramachandra Joshi, Finance Officer, KKSU, Ramtek
Dr. Umesh Shivahare, Controller of Examination, KKSU, Ramtek
Dr. Dipak Kapade, Librarian, KKSU, Ramtek
Dr. Renuka Bokare, PRO, KKSU, Ramtek

Shri. Rajivranjan Mishra, Technical Head, KKSU, Ramtek
Shri. Pravin Kalambe, Security Officer, KKSU, Ramtek

## Reception Committee

Prof. Srinivasa Varakhedi, Chairperson Reception Committee & VC, KKSU
Parampujya Govindagiri Swamiji, Rishikesh
Prof. P.T. Chande, Former VC, KKSU
Prof. Uma Vaidya, Former VC, KKSU
Prof. Vijendra Kumar, VC, National Law University, Nagpur
Prof. Rajnish Shukla, VC, National Hindi University, Wardha
Prof. Vinayak Kane, VC, RTM Nagpur University, Nagpur
Shri. Krupal Tumane, Member of Parliament
Shri. Girishji Vyas, Member of Legislative Council
Shri. Chandrashekhar Bawankule, Guardian Minister, Nagpur
Prof. Vishram Jamdar, Director, VNIT, Nagpur
Dr. Bhushankumar Upadhyay, Commissioner of Police, Nagpur
Shri. Vijay Phanshikar, Editor, The Hitavada, Nagpur
Shri. Rajkumar Tirpude, Tirpude Group of Insitutions, Nagpur
Shri. Mohabbat Singh, Tuli International, Nagpur.
Shri. Chandragupta Varnekar, Principal Retd., Nagpur
Shri. Suresh Sharma, Baidyanath, Nagpur
Shri. Prabhakar Rao Mundle, Dharampeth Educational Institutions, Nagpur

## Executive Committee

Prof. G. U. Thite,
Vice President

Dr. Brijeshkumar Shukla,
Treasurer

## Members

Dr. Rajni Satish Chandra Jha
Prof. Shukla Ramakant
Dr. Behera Ranjit
Dr. Meena Shukla
Dr. Nirmala Kulkarni
Dr. Roy Gauri Nath
Dr. Tripathi Uma Rani
Dr. Pushpa Jha
Dr. Basu Ratna
Dr. Mithilesh Kumar
Prof. Singh Prasoon Dutta
Shri. Mishra Arun Ranjan
Dr. Mishra Baidyanath
Dr. Tripathi Rajendra Rasraj
Shri. Harshdev Madhav
Dr. Kamdev Jha
Dr. Parinita Deshpande
Dr. Jha Udayanath (Ashok)

श्री राघवेन्द्रयतिकृत-

# न्यायमुक्तावलिः

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मक-

श्रीलक्ष्मीहयग्रीवाय नमः

श्रीगुरुभ्यो नमः ॥

हरिः ॐ ॥

# अथ प्रथमोऽध्यायः

**प्रणम्य रमणं लक्ष्म्याः पूर्णवोधगुरूनपि ।**
**न्यायमुक्तावलिं कुर्मो विदुषां कण्ठभूषणम् ॥**

ज्ञानार्थं ब्रह्मरुद्रेन्द्रादिभिरर्थितो भगवान्नारायणः व्यासत्वेनावतीर्य उत्सन्नान्वेदान् व्यञ्जयन् तदर्थनिर्णयाय ब्रह्मसूत्रसन्दर्भात्मकं शास्त्रं प्राणिनां हिताय प्रणिनाय। तदेतन्न्यायनिबन्धनात्मकशास्त्रस्य विषयादिमत्तासाधनेन आरम्भणीयत्वं साधयितुं तदुपयुक्ततया न्यायानुसन्धानात्मकविचारमननापरनामक जिज्ञासाकर्तव्यत्वं साधयितुं इदं सूत्रम्।

**॥ ॐ अथातो ब्रह्मजिज्ञासा ॐ ॥ १ ॥**

इति। एतदादिपञ्चाधिकरण्याः अध्यायपादपीठत्वात् शास्त्रमात्रे तदन्येषां प्रायः शास्त्राध्यायपादेषु अन्तर्भावः टीकायां प्रतिनयं स्पष्टः। अनन्तरसङ्गतिश्च अनेकविधा। यथोक्तम्।

**आक्षेपिक्यातिदेशिक्यौ उपोद्धातापवादते ।**

**प्रसङ्गश्चेत्यादिरूपा सा चानन्तर्यलक्षणा[1] ॥ इति ।**

अस्यैव आदित्वात् नात्र पूर्वसङ्गतिः ।

**विपयो विशयश्चैव पूर्वपक्षस्तथोत्तरः ।**

**प्रयोजनं च पञ्चैतान् प्राञ्चोऽधिकरणं विदुः ॥**

इत्युक्तेः पञ्चावयवी यथाग्रन्थं प्रकाश्यते । पौर्वापर्ये सङ्गति-श्च गुरुपादप्रसादतः ।

" तद्विजिज्ञासस्व तद्ब्रह्म " (तै. ३-१) इत्यादौ श्रुता जि-ज्ञासा विषयः । न कर्तव्या उत कर्तव्या इति सन्देहः । त-द्बीजं टीकायां प्रतिनयं व्यक्तम् । न कर्तव्येति पूर्वःपक्षः विष-यादेरभावात् । अनात्मनः[2] असत्यत्वात् । परात्मनश्चेष्टादिलि-ङ्गसिद्धत्वात् । परमात्मनश्च स्वात्मान्यस्य मानाभावेन अभा-वात् । वेदान्तानहं पौरुषेयत्वा- पौरुषेयत्वयोः आप्तोक्तत्वगुणा-भावेन प्रामाण्याभावात् । स्वतः प्रामाण्येपि कार्यपरत्वेन सि-द्धरूपब्रह्माबोधकत्वात् । सिध्दार्थबोधकत्वेपि अद्वैतिरीत्या अ-खण्डस्वात्ममात्रपरत्वप्रतीतेः । स्वात्मनश्च अहंधीसिद्धतया स-न्देहाभावेन विषयत्वायोगात् । देहादिभिन्नत्व अणुत्वादेरपि अ-नात्मतया असत्यत्वात् । सत्यपि तज्ज्ञाने अपवर्गस्य अन्य-स्य वा फलस्य अनुपलम्भेन तस्य तत्फलत्वायोगात् । विष-यप्रयोजनयोरभावे अधिकारिसम्बन्धयोः सुतरामभावात् । अ-स्तु वा अन्य विषयः । तथापि न जिज्ञासा फलवती । न ता-

[1] चं. प्र. 256 (सां)



[2] सु. 12-(10-26)

वब्रह्मज्ञानं तस्याः फलम्। तस्य कर्मणा ज्ञानमातनोतीत्यादिना कर्मणैव सिद्धेः। तस्य स्वतोऽपुमर्थत्वाच्च। नापि तद्द्वारा ब्रह्मप्रसादः फलम्। तस्यापि "तत्कर्म हरितोपं यदि"त्यादिना[1] कर्मणैव सिद्धेः। स्वतोऽपुमर्थत्वाच्च। नापि तद्द्वारा मोक्षः फलम्। तस्यापि अपाम सोमममृलभङता अभूमेत्यादिना कर्मणैव सिद्धेः। मिथ्या[2]भूतबन्धनिवृत्तिरूपमोक्षस्य प्रसादनैरपेक्ष्याच्च। अस्तु वा मोक्षरूपं फलमपि ज्ञानप्रसादद्वारा। तथापि तस्याः नाधिकारी। मुमुक्षुमात्रस्याधिकारित्वे स्त्रीशद्रादेरप्यधिकारप्राप्त्या स्त्रीशूद्रब्रह्मबन्धूनां त्रयी न श्रुतिगोचरेत्यादिविरोधात्। अन्यस्य च तव्द्यावृत्ताधिकारस्याभावादिति ॥ सिद्धान्तस्तु ॥ अनात्मपरात्मस्वात्मनां अविषयत्वेपि जिज्ञास्ये श्रुतेन यौगिकेन ब्रह्मशब्देन अवयवशक्त्या “अथ कस्मादुच्यते ब्रह्मेति बृहन्तोह्यस्मिन् गुणा" इत्यादिश्रुत्या च अन्यत्रासम्भावितदेशकालगुणापरिच्छेदवस्तुवाचिना जीवान्यविष्ण्याख्यवस्तुसिद्धया तस्य च सगुणनिर्गुणाल्पगुणत्वादिना विप्रतिपत्तेः सन्दिग्धतया विषयत्वसम्भवात् [3]तज्ज्ञानोत्थतत्प्रसादजन्य मुक्त्याख्यफलवत्वात्तदिच्छोरधिकारिणः सत्त्वेन तत्सम्बन्धस्यापि सत्त्वान्नाद्यः पक्षो युक्तः। नापि द्वितीयः। श्रवणं मननं चेति भाष्योक्तस्मृत्या श्रवणादिरूपजिज्ञासाया एव ज्ञाने प्रधानसाधनत्वेन कर्मणस्तदङ्गत्वात् तस्य स्वतोऽपुमर्थत्वेपि प्रसादद्वारा

[1]भा. 4-29-53 3

[2]सु. 25-20



[3]जिज्ञासोत्थज्ञानजात्तत्प्रसादादेव मुच्यते (अ. व्या.)

मोक्षहेतुत्वेन पुमर्थत्वाच्च। कर्मणात्वधम इति स्मृत्या ज्ञानजन्यप्रसादस्यैव मुक्तिहेतुत्वाच्च। बन्धस्यतु अक्षादिमानसिद्धत्वेन मोक्षस्य प्रसादसापेक्षत्वात्। कर्मणा अमृतत्वोक्तेश्च अमृतो वाव सोमपो भवति यावदिन्द्र इत्यादिना गौणत्वात्। नापि तृतीयः। मुमुक्षुमात्रस्यानधिकारित्वेपि भक्तिमान्परमे विष्णावित्यादिस्मृत्या अध्ययनशमदमादिमतो अधिकारिविशेषस्य सम्भवाच्च कर्तव्या जिज्ञासेति॥ तत्र भाष्यटीकयोः मोक्षस्य कर्मजन्यत्वशङ्कासमाध्योरनुक्तावपि जिज्ञासोत्थज्ञानजात् तत्प्रसादादेव मुच्यते इत्यनुव्याख्यानस्थैवकारेण सूचितत्वादविरोध इति। अत्र पूर्वोत्तरपक्षयोः शास्त्रानारम्भारम्भौ फले॥१॥

**॥ॐ जन्माद्यस्य यतः ॐ॥२॥**

पूर्वोक्त [1]विशिष्टाधिकारिक मोक्षफलक जीवान्यधर्मिक गुणपूर्णत्वप्रकारक जिज्ञासाक्षेपेण पूर्वपक्षोत्थानादाक्षेपिकी सङ्गतिः। प्रागुक्तजिज्ञास्यब्रह्मणो लक्षणमुच्यते इति वा पूर्वाधिकरणेन सङ्गतिः। तैत्तरीये श्रुतं "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्मे"ति (तै. ३-१)। यत्प्रयन्ति प्रलय इत्यर्थः। यदभि स्वेच्छया संविशन्ति मुक्तावित्यर्थः। तत्र तद्ब्रह्मेत्युक्तं ब्रह्म किं जीवो विष्णुर्वेति सन्देहः। पूर्वपक्षस्तु॥ बृहजातिजीवकमलासन-शब्दराशिष्वित्युक्तेः ब्रह्मशब्दस्य जीवे यौगिकार्थस्यायोगेन रूढत्वात् विष्णौ तु रूढेरभावात् गुणपु-

[1] चं 113 (सां)

र्त्यभावापातेन अयौगिकत्वायोगाच्च योगाद्रूढेर्बलीयस्त्वात यतो वा इति पूर्ववाक्योक्तकारणत्वस्य अदृष्टद्वारा जीवेपि सम्भवादत एव जात्यादेरत्रासम्भवात् आत्मा वा अरे द्रष्टव्य इत्यादि मनन-विधायक वाक्यान्तरे जीवे प्रसिध्दात्मपदप्रयोगाच्च जीव एवेदं ब्रह्म तस्य च अहंधीसिद्धत्वान्न जिज्ञासा कार्येति। सिद्धान्त-स्तु[1]॥ यतो वा इत्यादिपूर्ववाक्योक्त जगज्जन्मादिकारणत्वस्य "य उ त्रिधातु पृथिवीं उत्तद्यामि" त्यादिना विष्ण्वेकनिष्ठत्वात् अदृष्टद्वारा जीवकारणतापरत्वे जातादि पदस्वारस्यात् इमानीति सर्वनाम्नः सङ्कोचकाभावात् अभिसंविशन्तीत्युक्त मुक्तप्राप्यत्व-स्य सर्वथाऽयोगात् इतरव्यपदेशादिति द्वितीये (२-१-२२) जी-वकर्तृतायाः निरसिष्यमाणत्वाच्च जन्मादिकारणत्वबाधकेन रू-ढेस्त्याज्यत्वात् आत्मा वा अरे इत्यत्र जिज्ञास्ये श्रुतात्मशब्द-स्य स्वशब्दादिति (ब्र. सू. १-३-१) वक्ष्यमाणन्यायेन विष्णुवा-चित्वात तदेव ब्रह्म परमं कवीनामिति विद्वद्रूढिसत्त्वात् तस्याश्च अज्ञरूढितो वलवत्वात् योगरूढिभ्यां गुणपूर्णो विष्णुरेव ब्रह्मेति तस्यसन्दिग्धत्वात्कर्तव्यैव तज्जिज्ञासेति। वर्णकान्तरं[2] तु ब्रह्म-शब्दः प्रसिद्धजीवपरः उतार्थान्तरपर इति सन्देहे अन्त्ये तस्या-र्थस्य तद्वाचितायाः तत्र तात्पर्यस्य च कल्प्यत्वाद्गौरवम्। आद्ये तु लाघवं जीवस्याकल्प्यत्वात् बृहजातिजीवेत्यभिधानात् शक्ते-रपि क्लृप्तत्वात् अबाधेन तात्पर्यस्यापि सिद्धत्वात् जीवपर एवेति प्राप्ते "यन्नदुःखेन संभिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोप-

[1] चं. 116 (सां)



[2] चं. 124 (सां)

नीतं च सुखं स्वर्गपदास्पदमि"[1] ति श्रुतेः स्वर्गपदस्य चन्दनादिरूपप्रसिध्दार्थत्यागेन अप्रसिध्दार्थपरत्वोपपत्तिरिति सिध्दान्त इति वा अलौकिकविशेष्यपरत्वे गौरवात् प्रसिद्धविशेष्यपरत्वे लाघवात् तदनुसारेण जीवे सम्भवद्गुणपूर्तिरेव प्रवृत्तिनिमित्तं न तु सिध्दान्त्यभिमतगुणपूर्ती तात्पर्यमिति जीवपर एवेति प्राप्ते कारणत्वेनैव बाधकेन अलौकिकविशेष्यपरत्वं ततश्च सङ्कोचकाभावात् सर्वगुणपूर्तिरेव प्रवृत्तिनिमित्तमित्यर्थान्तरपर एवेति सिद्धान्त[2] इतीदमेकम् । अन्यत्तु पूर्वसूत्रे जिज्ञासोत्थज्ञानजन्यप्रसादद्वारा मोचकत्वाद्विष्णोः जिज्ञासा कार्येति प्रागभिहितमयुक्तम् । तथात्वे बन्धकत्वात्तज्जिज्ञासा न कार्येत्यपि स्यात्[3] । न चायमबन्धकः जीवस्याबद्धत्वस्वबद्धत्वयोरयोगेन अन्यबद्धत्वे वाच्येऽन्यस्य चेतनस्याचेतनस्य वा ईशाधीनत्वेन पुनरीश्वरस्य बन्धकत्वेनाजिज्ञास्यता । अन्याधीनत्वे स्वानधीनकृताद्बन्धान्मोचकत्वं नेशस्येति न तज्जिज्ञासा कार्येति प्राप्ते अप्रसन्नस्य बन्धकत्वं प्रसन्नस्य तु मोचकत्वमिति तत्प्रसादहेतुज्ञानजननाय तज्जिज्ञासा कार्येति सिध्दान्त इति । अत्राद्यं टीकाभिप्रेतं अन्त्ये तु सुधाभिप्रेते । तत्राप्यन्त्यमुपासनापादे ध्येयम् । आद्ये ब्रह्मशब्दस्य यतो वा इति वाक्य एव पूर्वपक्षे विष्णुपरत्वं नाभिप्रेतम् । द्वितीये तु सर्वत्रापीति भेदः । अन्त्ये मुक्तिरस्य यत इति[4] सूत्रे विन्यसितव्ये जन्मादीति सृष्टिहेतुत्वोक्तिर्मोचकत्वसम्भावनार्थेति

[1]चं. 105 (सां)

[2]सुधाभिप्रायः (चं, 126 नि)



[3]चं. 126 (सां)

[4]चं. प्र. 127 (नि)

ध्येयम् । अत्र जिज्ञासाकर्तव्यत्वं फलं स्पष्टम् ॥ २ ॥

**॥ ॐ शास्त्रयोनित्वात् ॐ ॥ ३ ॥**

उक्तलक्षणस्य रुद्रादावतिव्याप्तिमाशङ्क्य निरस्यते इति सङ्गतिः । यतो वा इत्यादिवाक्योक्तं जगत्कारणत्वं विष्णोरन्यस्यापि वेति सन्देहः । अन्यस्यापीति पूर्वपक्षः । अनुमानेन रुद्रादावपि जगत्कारणत्वस्य सुसाधकत्वात् । तथाहि । क्षित्यादिकं सकर्तृकं कार्यत्वात् घटवदित्यनुमानेन कर्तृमात्रसिध्दावपि तस्यानुमानस्य नावेदविदिति स्वप्रामाण्यनिषेधकश्रुत्युक्ते विष्ण्वाख्ये कर्तर्यैव पर्यवसानेन पाशुपताद्यागमोक्ते शिवादिरूपकर्तर्यैव पर्यवसानाद्वा शिवो जगज्जन्मादिकर्ता सर्वज्ञत्वात् व्यतिरेकेण कुलालवदित्यनुमानेन शिवादिकारणत्वसिद्धिः न च सर्वज्ञत्वमप्रसिद्धं पाशुपताद्यागमेन तत्सिद्धेरित्यागमसहायानुमानाव लम्बेन वा कार्यत्वाद्यनुमानेन[1] वा नित्यज्ञानेच्छाप्रयत्नवतो निल प्रयत्नवतो वा कर्तुः सिद्धेः । तस्य च सिध्दान्तिना विष्णुत्वानङ्गीकारात् संहर्तृत्वादिना रुद्रादिशब्दोक्ते तस्मिन्नेव पर्यवसानमिति केवला- नुमानावलम्बेन वा एकः पूर्वपक्षः । न चात्र विष्णुकारणत्वे परोदाहृतश्रुतिविरोधः । तासामुक्तानुमानविरोधेन विष्णुकारणतामात्रपरत्वादिति । अपरस्तु । सर्वज्ञशिवादिप्रणीततया अनाशङ्कितदोषेण पाशुपताद्यागमेन रुद्रादेरपि जगत्कारणत्वप्रतीतेः रुद्रादिर्जगत्कर्ता । नचापौरुषेयत्वेन स्वतः प्रामाण्यकेन वेदेन विष्णोरपि जगत्कारणत्वप्रतीतेस्तद्वि-

1 च. 155 (सा)

रोधः । द्वयोरपि कालादिभेदेन कर्तृत्वस्याविरोधात् । वेदे आगमे चेदं सर्वमसृजतेति विष्ण्वादेः सर्वकर्तृत्वोक्तेः तत्तत्कालसृज्य-सर्वपरत्वेन योग्यतापरत्वेन वा उपपत्तेः । वेदे शिवस्य आगमे च विष्णोः कारणतानिषेधस्य उदितहोमादिनिन्दायाः अनुदित-होमादिस्तुतिपरत्वमिव विष्ण्वादिकर्तृताविधिपरत्वसम्भवात् इ-त्यागमावलम्बी । एवं च सर्वजगज्जन्मादिकर्तृत्वं लक्षणं चेद-सम्भवः कतिपयकर्तृत्वं चेदतिव्याप्तिरिति न लक्षणं युक्तमिति पूर्वपक्षफलम् । सिद्धान्तस्तु । [1]चक्षुरादेः रसगन्धादाविवोक्ता-नां अवेदमूलानुमानानां "नावेदविन्मनुतेदं बृहन्तं" "औपनिषदः पुरुष" इत्यादिश्रुत्या जगत्कारणे प्रामाण्यनिषेधात् शशादीनां विषाणित्वादावपि प्रयोक्तुं शक्यत्वेन अतिप्रसक्त्या अर्थासाधक-त्वात् आद्यः पूर्वपक्षो न युक्तः । तथा प्रमाणत्वेनाङ्गीकृतश्रुति-परिगृहीतया ऋग्यजुस्सामाथाश्च भारतं पञ्चरात्रकमित्यादिस्मृ-त्या दुरागमाप्रामाण्यस्योक्तत्वा- दागमावलम्ब्यपि नेति विष्णो-रेव जगत्कारणत्वं । अतो लक्षणं नातिव्याप्तमिति सिध्दान्ते फ-लम् । स्मृतिनयादगतार्थत्वमस्य तत्रैव वक्ष्यते । अत्र पूर्वपक्षद्वयं यथाक्रमं भाष्यानुव्याख्यानमूलमितिबोध्यम् ॥ ३ ॥

## ॥ ॐ तत्तु समन्वयात् ॐ ॥ ४ ॥

कारणत्वस्य शास्त्रैकसमधिगम्यत्वान्नातिव्याप्तिरिति पूर्वाधिकरणफलाक्षेपाद्वा पूर्वाधिकरणसिद्धं कारणत्वेन शास्त्रगम्यत्वं विष्णोरन्यस्य वेति विशेषविचाराद्वा अन-

[1] चं. 156 (मि)

न्तरसङ्गतिः। अत्र शास्त्रयोनित्वं विष्णोरेवान्यस्यापि वेति सन्देहः। रुद्रादेरपि कारणत्वेन शास्त्रैकगम्यत्वमितिपूर्वःप- क्षः। [1]शैवाद्यागमाद्वेदव्याख्यानरूपान्मानान्त- राविरुद्धात् रुद्रादेरपि कारणत्वे वेदस्य तात्पर्यनिश्चयात्। काव्यव्याख्या- नादिव काव्यस्य व्याख्यानतो विशेषप्रतिपत्तिरित्युक्तेः। न च तस्याप्रामाण्यमुक्तमिति वाच्यं प्रमाणभूतव्याख्येयव्या- ख्यानप्रामाण्ये मानान्तराविरोधे हेत्वन्तरापेक्षाभावात्। इह च मानान्तराविरोधो नैषातर्केणेत्यादिना सिद्धः॥ न चैवं [2]पञ्चरात्रादिना विष्णोरपि कारणत्वे वेदतात्पर्यनिश्चयापत्तिः। तथापि देशादिभेदेन पूर्वोक्तदिशा कारणत्वोपपत्त्या विष्णुरेव कर्तैत्यस्य असिद्धेः॥ उपक्रमादीनां बलाबलनिर्णयायोगेन वेदतात्पर्या- निश्चायकत्वात् इत्येको न्यायविवरणोक्तः॥ अन्यस्तु [3]वेदादिशास्त्राद्रुद्रादेः कारणत्वं तावद्भाति॥ तत्र शास्त्रतात्पर्यं च अबाधादेव सिद्धम्॥ न च विष्णोः- कारणत्वसाधकं रुद्रादेस्तन्निषेधकं वाक्यमेव बाधकम्। वैपरीत्यस्यापि सम्भवेन द्वयोस्तुल्यबलतया द्वयोरपि कर्तृत्वे च कालादिभेदेन विष्णोः कारणत्वस्य रुद्रादेस्तदभावस्य प्रतिपादनेन तद्वाक्यस्योपपत्तेरिति वेदजन्यापातप्रतीत्यव- लम्बी भाष्योक्तः॥ यद्वा शैवाद्यागमस्याप्रामाण्योक्त्या न वेदतात्पर्यनिर्णायकत्वमिति वाच्यम्॥ वेदेऽपि रूद्रादेः का-

[1]चं. 169

[2]चं 170 (सां)

[3]चं 173 (सां)

रणत्वप्रतीतेरिति आपातप्रतीतिसध्रीचीन[1] आगमावलम्ब्येक एव पूर्वः पक्षः। अत्र द्वौ पूर्वपक्षाविति आद्यकल्पः। मतः अन्त्यष्टीकाभिमतः॥ सिद्धान्तस्तु॥ वेदे परस्परमापाततो विरोधप्रतीतेरेकवाक्यत्वसिद्धये तात्पर्येऽवश्यं निश्चये शैवाद्याग-मस्योक्तरीत्याप्रामाण्यात् मानन्तराविरुद्धपि उपक्रमाद्यननुगुणे आपातप्रतीतेर्थे तात्पर्यानिर्णायकत्वेन च तव्याख्यानत्वायोगात् आपातप्रतीतेश्च अज्ञानमूलत्वेनानिर्णायकत्वात् व्याख्यान-स्यापि उपक्रमादिभिरेव[2] तात्पर्यं निश्चित्य तेन वेदतात्पर्यस्य निश्चेतव्यत्वेनावश्यकैरुपक्रमादिभिरेव मूलग्रन्थेषुक्तरीत्या सुशकबलाबलत्वनिर्णयर्वेदतात्पर्यस्य निश्चेतव्यत्वेन तैर्विष्णुरेव जगत्कारणत्वेन मुख्यतोऽशेषसच्छास्त्रतात्पर्यविषय इति सिध्यतीति आगमावलम्बी प्रतीत्यवलम्बी चेति द्वावपि पूर्वप-क्षावयुक्तौ। अतएवान्त्योप्ययुक्त इति लक्षणं नातिव्याप्तमिति फलम्॥ ४॥

**॥ ॐ ईक्षते शब्दम् ॐ ॥५॥**

॥ॐ गौणश्चेन्नात्मशब्दात् ॐ॥ ॥ॐ तन्निष्ठस्य मोक्षो-पदेशात् ॐ॥ ॥ॐ हेयत्वावचनाच्च ॐ॥ ॥ॐ स्वाप्ययात् ॐ॥ ॥ॐ गतिसामान्यात् ॐ॥ ॥ॐ श्रुतत्वाच्च ॐ॥

मुख्यवृत्या सर्वशास्त्रतात्पर्यविषयो ब्रह्मेति पूर्वोक्ताक्षेपेण पू-र्वपक्षोत्थानादाक्षेपिकी सङ्गतिः। मुख्यतः सर्वशास्त्रयोनित्वं ब्र-

[1] चं. 175,(सां)

[2] चं. 176,(नि)

ह्मणो युक्तं नवेति सन्देहः। न युक्तमिति प्राप्तम्। [1]यतो वाचो निवर्तन्त (ते. २-४-१) इत्यादिश्रुतिभिः तस्यावाचकत्वोक्तेः। न च पुरिशयं पुरुषमीक्षत (प. प्र. ५-५) इति ब्रह्मणः ईक्षणीयत्वोक्तेः औपनिषदस्य च शब्देतरेणेक्षणायोगात् शब्देनेक्षणं वाच्यत्वं विना अयुक्तमिति वाच्यम्।

ईक्षणश्रुतेर्गौणात्मपरत्वात् तस्य च वाच्यत्वात् शुद्धात्मनोप्यवाच्यस्य लक्षणया शब्देनेक्षणोपपत्तेश्च "अवचनेनैव प्रोवाच" इति श्रुतेर्वचनवृर्त्तिं विना लक्षणयोपदिदेशेत्यर्थात्। न च लक्षणापक्षे किमस्य पदस्य लक्ष्यमिति प्रश्ने वाच्ये लक्षकपदान्तर एव प्रयोक्तव्ये तदर्थं वाच्यसम्बन्धितया ज्ञानस्यापेक्षितत्वात्तदर्थं लक्षकान्तरपदप्रयोगेऽनवस्थेति वाच्यम्। वाच्यत्वपक्षेपि वाचकस्य गृहीतसम्बन्धस्यैव बोधकत्वात्। सम्बन्धग्रहस्य च सम्बन्धिग्रहाधीनत्वात्। सम्बन्धिनो ब्रह्मण औपनिषदत्वाच्छास्त्रान्तरेणैव तद्बोध इत्यनवस्थातौल्यान्मुख्यवृत्त्येत्ययुक्तम्। यदपि सर्वशास्त्रयोनित्वं ब्रह्मण इति तदपि न। अनन्ता वै वेदा इति श्रुतेर्वेदानामानन्त्येन स्वल्पायुज्ञानादियुतैः पुरुषैरनन्तवेदस्वरूपस्यैव दुर्ग्रहणत्वेन सर्वशास्त्रं ब्रह्मपरमित्यस्य दुर्ज्ञानित्वादिति॥ सिद्धान्तस्तु॥ "आत्मवात्मानं पश्येत्" (बृ. ६-४-२३) "यस्यानुवित्तः प्रतिबुद्ध आत्मा तस्य लोकः स उ लोक एवे"त्यादौ (बृ.६-४-१३) ईक्षणीयस्य आत्मशब्दतन्निष्टमोक्षोपदेशादिभिः शुद्धात्मत्वात् तस्य च ल-

[1] चं. 209

क्षणयेक्षणीयत्वे प्रागुक्तानवस्थानात्। स्वप्रकाशतया नित्यसिद्धे लक्षणेत्यस्य शास्त्रवैयर्थ्यापातेनायोगात् वाचकत्वपक्षे यौगिकपदानां वाक्यतुल्यतया पृथक्सङ्गतिग्रहानपेक्षत्वेन अनवस्थाभावात् यतोवाच इत्यादिश्रुतेः साकल्येन वागविषयत्वेनोपपत्तेः। वेदानामानन्त्येपि "सर्वैवेदा युक्तय" इति गतिसामान्यश्रवणात् सर्वज्ञसूत्रकृन्निर्णीतार्थकशाखादृष्टान्तेन शाखान्तरेपि शाखात्वेनैतदर्थकत्वस्यैवा -नुमानादवगमात् मुख्यतः सर्वशास्त्रयोनित्वं विष्णोर्युक्तमिति फलं स्पष्टम्॥ अर्थद्वयसमर्थनार्थत्वेपि एकसंशब्दार्थसाधनार्थत्वादधिकरणैक्यं ध्येयम्॥ ५॥

सर्वे वेदा यत्पदमामनन्तीति (कठ. १-२-१५) श्रुत्युक्तस्यापि समन्वयस्य बाधकोद्धारादिना स्थापनार्थमयमध्यायशेपः सफलः॥ अत्र समन्वयसूत्रप्रतिज्ञातसमन्वयहेतौ वाच्यत्वे ईक्षतिनयोक्ते अध्यायशेषेण प्रतिज्ञातसमन्वय उपपाद्यते। वैदिकशब्दानां तत्रान्यत्रोभयत्रान्यत्रैवप्रसिद्धभेदेन चतुर्विधानां मध्ये ब्रह्मणि प्रसिध्दानां समन्वयस्यावक्तव्यत्वात्। इतरेषां च नामलिङ्गभेदेन प्रत्येकं द्वैविध्यान्महामल्लभङ्गन्यायेन आदावन्यत्रप्रसिद्धस्य तत्रापि साक्षाद्धर्मिवाचित्वेन प्राधान्यादाद्ये नाम्नः धर्मद्वारा धर्मिबोधकलिङ्गानां द्वितीयपादे उभयत्र प्रसिध्दानां द्विविधानामपि तृतीये समन्वयः। अन्यत्रैव प्रसिद्धशब्दसमन्वयस्य महाप्रयत्न साध्यत्वेप्यसर्वाधिकारिकतया प्रथमं दुर्बोधतया

चान्त्ये तत्समन्वय उच्यत इति पादानां भेदः क्रमश्च॥

अन्यत्रप्रसिध्दादीनामसाङ्कर्य रूढयौगिकतया नामलिङ्गभेद इ-

त्यादि चन्द्रिकातोऽवसेयम् ॥ (चं.२३२-२४१)

**॥ ॐ आनन्दमयोभ्यासात् ॐ ॥ ६ ॥**

॥ ॐ विकारशब्दान्नेति चेन्न प्राचुर्यात् ॐ ॥ ॥ ॐ तद्धेतु-व्यपदेशाच्च ॐ ॥ ॥ ॐ मान्त्रवर्णिकमेव च गीयते ॐ ॥ ॥ ॐ नेतरोनुपपत्तेः ॐ ॥ ॥ ॐ भेदव्यपदेशाच्च ॐ ॥ ॥ ॐ कामाच्च नानुमानापेक्षा ॐ ॥ ॥ ॐ अस्मिन्नस्य च तद्योगं शास्ति ॐ ॥

सर्वापेक्षितानन्दप्रदोपासनाविषयपूर्णानन्दत्वरूपमहागुणस्य प्रथमं वाच्यत्वाद्वा आत्मशब्दाद्गौणात्मनिरासः प्रागुक्तो युक्तः ॥ तस्य अब्रह्मणि गौणात्मन्या -नन्दमयादौ एतमान-न्दमयमात्मानमिति श्रवणादिति पूर्वोक्ताक्षेपेण पूर्वपक्षप्रवृत्तेः आक्षेपिकी वा सङ्गतिः । तैत्तरीये । स वा एप पुरुषोऽन्नरसमय (तै.२-४) इत्यादिना श्रुता गुणिसामान्य वाचकाः अन्नम-यप्राणमयमनोमयविज्ञानमयानन्दमयाः आनन्दविज्ञानादि गुणसामान्यवाचकाः शब्दाः विषयः । तदर्थः किं चतुर्मु-खादिर्विष्णवन्यः कश्चिदथ विष्णुरिति सन्देहः । विष्णोरन्य इति पूर्वः पक्षः ॥ तथाहि । अन्नमयादीनां विकारार्थमय-ड्प्रत्यययुक्तत्वात ब्रह्मणश्च निविकारोऽक्षरः शुद्ध इत्युक्त्या निर्विकारत्वात् तदनभिमानित्वाच्च । प्राचुर्यार्थत्वेपि तस्य विजातीयाल्पत्वनिरूप्यत्वेन ब्रह्मणि दुःखादिलेशाप्रसक्त्या तदयोगात् तादात्म्यार्थस्य मयटो वैय्यर्थ्येन पराहतत्वात् अन्नात्पुरुष (तै.२-३) इति अन्नविकारं पुरुषशब्दोक्तं देहं प्रकृत्य स वा एष पुरुषोऽन्नरसमय इत्युक्तत्वात् तस्येदमेव शिरः

अयं दक्षिणः पक्षः अयलभङ्मुत्तरः पक्षः अयमात्मा इदं पुच्छं प्रतिष्ठेति शिरोबाह्वाद्यवयवानां प्रत्यक्षत्वेन निर्देशाच्च अन्नमये मयटः विकारार्थत्वेऽवश्यंभाविनि द्वैविध्यायोगेन सर्वत्र विकारार्थत्वस्यैव न्याय्यत्वाच्च। किञ्च अन्योन्तर आत्मा प्राणमय इत्यादिनैतेऽन्यान्यत्वादिना तस्यैष एव शारीर आत्मेति शरीरशरीरिभावेन चोच्यन्ते। एते च पञ्च कोशाः ब्रह्म तु एकमेवाद्वितीयमित्यादेः निर्भिन्नमेकं च। अशरीरः प्रज्ञात्मेत्युक्तेरशरीरं च। आनन्दमये च तस्य प्रियमेव शिरः मोदो दक्षिणः पक्षः प्रमोद उत्तरः पक्षः आनन्द आत्मा ब्रह्म पुच्छं प्रतिष्ठेति ब्रह्मण आनन्दमयपादाख्यावयवतयोक्तेः। आनन्दमयो न ब्रह्म द्वयोर्ब्रह्मत्वविरोधात्। अवयवावयवि-नोरक्यायोगात्। तस्मात् कोशा एव वा सर्वविकारात्मत्वेन प्रकृति र्वा विकाराभिमानित्वात् जीवो वा अन्यो वा यः कश्चिद्भाष्योक्तदिशा एतैः शब्दैरुच्यते। न सर्वथा विष्णुरिति॥

सिद्धान्तस्तु॥ अन्नमयादयः पश्चापि ब्रह्मैव। येऽन्नंब्रह्मोपासते ये प्राणं ब्रह्मोपासते आनन्दं ब्रह्मणो विद्वान् विज्ञानं ब्रह्म चेद्वेद अस्ति ब्रह्मेति चेद्वेद इति पञ्चस्वपि प्रत्येकं ब्रह्मशब्दश्रवणात् विज्ञानानन्दमययोस्तदभ्यासाच्च। अन्योन्तरआत्मा प्राणमयः एतमन्नमयमात्मानमित्येवंरूपेण पञ्चस्वप्यात्मशब्दाभ्यासाच्च। तथान्नमये अद्यतेऽत्ति च भूतानीत्यादिना सर्वोपजीव्यत्वस-र्वसंहर्तृत्वज्येष्टत्वोपासक -प्राप्यात्वादिलिङ्गम्। प्राणमये च प्राणं देवा अनुप्राणन्तीत्यादिना सर्वदेवादिचेष्टकत्वं सर्वायू-रूपमोक्षहेतुज्ञानविषयत्वमित्यपि लिङ्गम्। मनोमये च यतो

काचो निवर्तन्त इत्यादिना अवाङ्मनसगोचरत्वभयाभावरू-पमुक्तिहेतुवेदनविषयत्वादिलिङ्गम्। विज्ञानमये च विज्ञानं देवाः सर्वे ब्रह्म ज्येष्ठमुपासते इत्यादिना सर्वदेवोपास्यत्व ज्येष्ठत्व मुक्तिहेतुत्वोपासक -प्राप्यत्वादिलिङ्गम्। आनन्दमये च सोऽकामयतेत्यादिना सङ्कल्पपूर्वकं स्रष्टृत्वं सर्वान्तर्यामित्वं मुक्तिहेतुज्ञानविषयत्वमित्यादि लिङ्गम्। तथा को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यादित्यानन्दशब्दि-तपूर्णानन्दत्वरूपानन्दमयत्वे विश्वचेष्टकत्वस्य हेतुत्वम्। पञ्चानामपि स य एवंविदित्युक्तब्रह्मविदा एतमन्नमयमात्मा-नमुपसङ्क्रामतीति फलत्वेन प्राप्यत्वोक्तेः। ब्रह्मवित्प्राप्यत्वं श्रुतमिति पञ्चस्वपि लिङ्गबाहुल्यात् ब्रह्मविदाप्नोतिपरमिति उक्तब्रह्मणि सत्यं ज्ञानमनन्तमिति मन्त्रवर्णोक्तलक्षणस्य एतैः शब्दैर्व्याख्यानेन ब्रह्मप्रकरणत्वात्। भृगुर्वै वारुणिरित्यादि भृगुवल्लीसमाख्यानात्[1]। शन्नोमित्रादिभिः वाक्यै स्तैरेवह-रिमस्तुवत्। मुक्तगीतावसानैस्तु स्तुतस्तेन जनार्दन इति स्मृत्या (तै.भा.१-१) ब्रह्मपरत्वेन निर्णीतोपनिषद्रूपस्थानम-ध्यपतितत्वाच्च। ब्रह्मात्मशब्दादेर्भाष्योदाहत -श्रुत्यादिभिः विष्णवेकनिष्ठत्वाद्भृगुवल्लयाः समाख्यानत्वस्य मूलग्रन्थेषु समर्थनात्। न च मयट्प्रत्ययायोगः। तस्य सजातीयजीव-गतसुखाल्पत्वनिरूप्यतया प्राचुर्यार्थत्वेनोपपत्तेः। उक्तंच। विजातीयसमानाधिकरणाल्पं यथा तथा सजातीयभिन्ना-

[1] चं 290 लि

धिकरणाल्पं निरूपकमिति[1]। अन्यत्वान्तरत्वाद्युक्तिरपि अधिष्ठानभूतकोशानामन्यत्वात् शरीरत्वाद्ब्रह्मणो बहुरूपत्वात् विशेषवत्वात् अनन्योप्यन्यशब्देनेत्यादिस्मृतिबलायुज्यते[2]। कथं तर्हि स वा एष इति देहपरामर्श इति चेन्न। आत्मन आकाश इत्यादावन्नात्पुरुषइत्यन्ते वाक्ये हरेरप्याकाशादि-नियामकरूपस्य प्रादुर्भावरूपजनेरुक्तेः। पुरुषपदेन हरेरपि प्रकृततया तत्परामर्शात्। यद्वक्ष्यति "कारणत्वेन चाकाशा-दिवि"त्यादि (ब्र.सू.१-४-१५)। प्रकृतान्नमयदेहव्यावृत्यर्थमेव रसशब्देन स इति व्यवहितात्मपरामर्शिना तच्छब्देन च विशेषणात् अन्यथैषोन्नमय इत्येतावता पूर्तेः। तस्येदमेव शिरः इति प्रत्यक्षनिर्देशस्य वस्त्रप्रावृतजानुनीदङ्गान्वितिवदुपपत्तेः। आनन्दमयतदवयवयोर्द्वयोरपि पूर्णत्वरूपब्रह्मत्वस्य अन्यत्र समर्थनेनावयवत्वविरोधाभावाच्च। अतः साधकसत्त्वादा-धकाभावाच्च पञ्चाप्यनिरुद्धादिब्रह्मरूपाण्येव कोशस्थानीति । प्रयोजनं तु ब्रह्मण आनन्दमयावयवत्वात् अवयविनं विनाऽवयवजिज्ञासाऽयोगादिति जिज्ञासाक्षेपसमाधाने ॥ ६ ॥ ॥

**ॐ अन्तस्तद्धर्मोपदेशात् ॐ ॥७॥**

॥ ॐ भेदव्यपदेशाच्चान्यः ॐ ॥

अदृश्येऽनात्म्य इति श्रुतस्यानन्दमयधर्मस्यादृश्यत्वस्य अन्तस्थे श्रवणात्तस्य चाविष्णुत्वात्सोपि न विष्णुरिति पूर्वाक्षे-

[1] च 275 नि

[2] ब्र. सू. भा. 1.1.16

पात्सङ्गतिः । अन्तः प्रविष्टं कर्तारमेतमन्तश्चन्द्रमसि मनसा चरन्तम् । सहैव सन्तं न विजानन्ति देवा इति तैत्तरीये (तै.आ.३.-११) अदृश्यत्वादिगुणयुक्तोऽन्तस्थः श्रुतः । देवा अपि न जानन्ति किम्वन्य इति कैमुत्यलब्धत्वाददृश्यत्वस्य सोऽन्तस्थः किं विष्णुरुत इन्द्रादिरन्य इति सन्देहः । इन्द्रादिरिति पूर्वः पक्षः । इन्द्रो राजा ब्रह्मेन्द्रमग्निमित्यादिइन्द्रश्रुतेः । सप्त युञ्जन्ति रथमेकचक्रमिति सूर्यलिङ्गात् अपां नेतारमिति वरुणलिङ्गा त्वष्टारं रूपाणि विकुर्वन्तमिति त्वष्टृश्रुतेः । अदृश्यत्वादिविष्णुलिङ्गानां निरूढेन्द्रादिश्रुतिलिङ्गेभ्यो दुर्बलत्वात् । विष्णुलिङ्गानां बहुत्वेपि श्रुतेः स्वभावप्रयुक्तप्राबल्यस्य बलवत्वा "त्तयोः स्वभावो [1]बलवा" नित्युक्तेः निरवकाशत्वेन लिङ्गानामपि बलीयस्त्वे तदुत्तरश्रुतिलिङ्गोभयानुरोधेन इन्द्रादेविष्ण्वैक्यमस्तु । तावतापि विष्णुलिङ्गानामनुपहितरूपाभिप्रायेणोपपत्त्या कल्पितभेद इन्द्रादिरेवान्तस्थ इति ॥ सिद्धान्तस्तु ॥ अन्तः मनसा चरन्तं यस्याण्डकोशं शुष्ममाहुः ब्रह्मान्वविन्दद्दशहोता इति श्रुतसमुद्रस्थत्वब्रह्माण्डवीर्यत्वादिब्रह्मलिङ्गानां भाष्योक्तश्रत्यादिनाऽनवकाशत्वात् इन्द्रस्यात्मा वायोरात्मानं अन्तरादित्य इत्यादिना अस्मिन्नेव प्रकरणे अन्तस्थस्येन्द्रादिभिर्भेदव्यपदेशेनैक्यायोगाच्च इन्द्रादिशब्दानामैश्वर्यादिप्रवृत्तिनिमित्तस्य विष्णावपि सत्त्वादन्यगतस्य तदधीनत्वेन तदधीनत्वन्यायाच्च । महायोगेन इन्द्रं मित्रं वरुणमग्निमाहुरित्यादिश्रुत्या विद्वद्रूढ्या च सप्ताश्वत्वाद्य-

[1] वि. त. नि. 7

न्यलिङ्गानां च [1]शास्त्रदृष्टयेतिन्यारे विष्णावपि वृत्तिसम्भवेनान्तस्थो विष्णुरिति ! फले तु पूर्वाक्षेपसमाधी । ॥७॥

**॥ ॐ आकाशस्तल्लिङ्गात् ॐ ॥८॥**

अधिकाशङ्कां कृत्वा पूर्वन्यायस्यातिदेशकी वा पूर्ववैषम्येण पूर्वपक्षोत्थानात् प्रत्युदाहरणरूपा वा सङ्गतिः ॥ छान्दोग्ये आद्येऽध्याये आम्नायते (छां. १-९) अस्य लोकस्य का गतिरित्याकाश इति होवाचेत्यादिशालावत्यप्रश्नोत्तरत्वेन श्रुतआकाशशब्दः किं भूताकाशवाची उत विष्णुवाचीति सन्देहः । आकाशशब्दस्य आकाशे रूढत्वात् भूताकाशमेवेति प्राप्तम् । न च विष्णुलिङ्गविरोधः श्रुतितो लिङ्गस्य दुर्बलत्वात् । न च लिङ्गस्य निरवकाशत्वान्निरवकाशलिङ्गेन रूढिबाधः पूर्वत्रेव सिद्ध इति नास्योत्थितिरिति शंक्यम् । इन्द्रादिगतैश्वर्यादेरीशप्रसादलब्धत्वेन तदधीनत्वादितिन्यायेन इन्द्रादिशब्दानामीशवाचित्वेपि अचेतने तत्प्रसादाभावेन आकाशपदप्रवृत्तिहेतोर्विवरत्वस्य तदनधीनत्वादतद्गतत्वाच्चेत्यधिकाशङ्कयोत्थानाद्वा । येन लिङ्गेन पूर्वत्र सिध्दान्तो न तेनैवात्र किंत्वन्येन । एवं च प्राक् तेन लिङ्गेन वैष्णवत्वस्य भाष्योक्तश्रुत्यदिना निश्चयेप्यत्र तदनिश्चयात् निरूढाकाशश्रुत्या भूताकाश एवेति पूर्वाक्षेपः ।

एवमग्रेपि ॥ सिद्धान्तस्तु ॥ स एष परोवरीयानुद्गीथः स एषोऽनन्त इति परोवरीयस्त्वोद्गीथत्वानन्तत्वलिङ्गानां परस्मादुत्तमंप्रोक्तमितिस्मृत्या[2] परोमात्रयेतिश्रुत्या (ऋ. ७.९९-१) विष्णो-



[1]चं 307 (नि)

[2]परस्मादुत्तमं प्रोक्तं परो इति ततः परम् । परोवरं परं तस्मात्प्रोक्तं पारोवरीयकम् ॥

र्नुकमितिश्रुत्या (ऋ.१-१५४-१) च विष्ण्वैकनिष्ठत्वात्तद्बलेन श्रुतेर्लौकप्रसिद्धित्यागेन विष्णुवाचित्वावश्यंभावादाकाशो विष्णुरेव। न च निमित्ताभावः। नभो ददाति श्वसतां मार्गं यन्नियमाद्द इति स्मृत्या (भाग.३-३०-४३)चेतनस्येशाधीनत्वे सुतरां जडस्येति लोकन्यायाच्च[1] तदधीनत्वेन विवरत्त्वस्य तत्पदनिमित्तस्येशगतत्वाभावेपि तत्प्रति स्वातन्त्र्येण तदधीनत्वादिति वक्ष्यमाणन्यायेन सर्वभूतगुणैर्युक्तमित्यादिस्मृत्या तद्गतत्वेन च मुख्यतो विष्णुवाचित्वोपपत्तिरिति। अत्रायमाकाशोऽन्यश्चेद्यदेप आकाश आनन्दो नस्यादित्युक्तोपि विष्णोरन्य इति तदाक्षेपसमाधाने पूर्वोत्तरपक्षफले ॥ ८ ॥

**॥ ॐ अत एव प्राणः ॐ ॥ ९ ॥**

अत्राप्यातिदेशिकी वा [2]पूर्ववैषम्येणपूर्वपक्षोत्थानात् प्रत्युदाहरणरूपा वा आकाशाद्वायुरिति श्रौतक्रमेण विचारणाद्वा सङ्गतिः। तद्वैत्वंप्राणो अभव इति तैत्तरीये (तै.आ.३-१४) भर्ता सन् भ्रियमाण इत्यनुवाके श्रुतः प्राणः किं मुख्यवायुरुत विष्णुरिति सन्देहः। प्राणशब्दस्य मुख्यवायौ रूढत्वात् प्राणो मुख्यवायुरेवेत्यस्य पूर्वन्यायेन अत्रत्यनिरवकाशलिङ्गेन निरासेपि प्राणपदस्य विष्णौ रूढेरभावात्तत्प्रवृत्तिनिमित्तप्राणनाख्यजीवनहेतुत्वस्य "तत्प्राणे प्रपन्न उदतिष्ठत्"(ऐ.२-१-४) "यत्प्राप्तिर्यत्परित्याग" (ब्र. सू. भा. २-४-९)

---

(सामसंहिता)

[1]चं 332 (सां)

[2]चं 341 सां

इति श्रुतिस्मृतिभिर्वा सुधोक्तदिशा [1]कुलालशरीरस्य घटं प्रतीव मुख्यप्राणशरीरभूतवायोर्जीवनं प्रत्यन्वयव्यतिरेकदर्शनेन प्रत्यक्षेणावगतान्वयव्यतिरेकाभ्यां वा मुख्यवायुगतत्वेन योगस्याप्यभावदिति न प्राणो विष्णुरिति विशेषशङ्कयोत्थानाद्वा [2]पूर्ववन्निरवकाशलिङ्गाभावादिति वा पूर्वपक्षः ॥ सिद्धान्तस्तु ॥ अद्भ्यः सम्भूत इति पूर्वानुवाके ह्रीश्च ते लक्ष्मीश्च पत्न्याविति श्रुतेन श्रीलक्ष्मी पतित्वरूपनिरवकाशलिङ्गेन[3] लोकप्रसिद्धेस्त्याज्यत्वात्। श्रीश्च त इति युष्मच्छब्देनोक्तस्य तद्वैत्वंप्राण इति अत्रापि युष्मच्छब्देन प्रत्यभिज्ञानेन [4]तयोरनुवाकयोभिन्नार्थत्वशङ्कानुदयात् भर्तासन्नित्यनुवाके तमेवमृत्युममृतं तमाहुरित्यादिना अमृतत्वादिलिङ्गश्रवणात् तत्प्राणइति श्रुतेः(ऐ.२-१-४) प्राणस्तथेत्यत्रत्यन्यायेन (ब्र.सू.१-१-२८) वैष्णवत्वात् वायुवृत्तेर्मुख्यप्राण देहत्वमिव मुख्यप्राणस्यापि विष्णुदेहत्वेनान्वयव्यतिरेकयोरपि तदीयतया तस्यैव जीवनहेतुत्वात् वायुगतस्यापि तदधीनत्वेन तदधीनत्वन्यायात् प्राणस्य प्राण इत्यादौ (तल.१-२) प्रयोगाच्च योगरूढिभ्यां विष्णुरेव प्राणपदवाच्य इति । ह्रीश्च ते लक्ष्मीश्च पत्न्याविति भाष्योक्तश्रुत्यन्तरबलात् ह्रीरत्र श्रीरेवेति ध्येयम् ॥ प्रयोजनं तु महान्भोग इति महाभोगशब्दितपूर्णानन्दत्वमुखेनानन्दमयाक्षेपः तत्समाधिश्च ॥ ९ ॥

[1]चं 345 नि

[2]चं 347 सां 2.3.

[3]सु 150 नि



[4]चं 350 नि ; सु 149

## ॥ ॐ ज्योतिश्चरणाभिधानात् ॐ ॥ १० ॥

पूर्ववैषम्येण पूर्वपक्षोत्थानात्प्रत्युदाहरणरूपा वा श्रौतक्रमाद्वा सङ्गतिः। वि मे कर्णा पतयतो वि चक्षुर्वी३दं ज्योतिर्हृदय आहितं यत्। वि मे मनश्चरति दूर आधीः किंस्विद्वक्ष्यामीत्यग्निसूक्ते (ऋ.६-९-६) श्रुतं ज्योतिः किमग्निः उत विष्णुरिति सन्देहः। अग्निरिति पूर्वः पक्षः। ज्योतिश्रुतेरग्नौ रूढत्वात् तस्य तमोविरोधिमात्रवाचित्वाप हृदयगुहनिहितत्वालङ्गेन त्वामग्ने तमसीत्यग्निशब्दसान्निध्याच्च अन्यत्रास्यायोगात्। न च पूर्ववदनवकाशलिङ्गेन श्रुतिबाधात नास्योत्थितिरितिवाच्यम्।

वैषम्यात्। प्राणश्रुतेर्वायुसूक्ताननुग्रहात् अस्यास्तु [1]प्रकरणरूपेणाग्निसूक्तेन अनुगृहीतत्वात्। न च श्रुतेर्भूतपरत्वे आकाशनयन्यायेन देवतापरत्वे च अन्तर्नयन्यायेन विष्णौ सावकाशत्वात् तस्यास्तथात्वे तद्युक्तसूक्तस्यापि तथात्वात् निरवकाशलिङ्गेन तयोर्बाध इति वाच्यम्। गुहास्थत्वादिलिङ्गस्यापि सावकाशतया ताभ्यां तद्बाधात्। सूक्तस्य वैष्णवत्वे इदमग्निसूक्तं इदं वायुसूक्तमित्यादिव्यवस्थाया "अभिव्यक्ते"-(ब्र.सू.१-२-२९)रित्यादिन्यायसिद्धत्वेपि इदमनिसूक्तं न विष्णुसूक्तमिति लोकप्रसिद्धययोगेन सूक्तस्य निरवकाशत्वाच्चेति ॥ सिद्धान्तस्तु॥ वि मे कर्णा पतयत इत्यादिनोक्तापरिच्छिन्नवैभवत्वरूपस्य कर्णादिविदूरत्वलिङ्गस्य परोमात्रयेतिश्रुत्या विष्ण्वैकनिष्ठत्वेनान्यत्रानवकाशत्वात् प्रकाशत्वरूपे ज्योतिःप-

[1] च. 364 सौ

दप्रवृत्तिनिमित्तस्य विष्णौ सत्त्वात् अन्यगतस्य तदधीनत्वात् तद्देवा ज्योतिषां ज्योति(बृ. ६-४-१६)रित्यादी प्रयोगाच्च। तस्य च ज्योतिःपदस्य ज्योतिषैकेषामिति (ब्र.सू. १-४-१४) वक्ष्यमाणदिशा वैष्णवत्वात्। विष्णुसूक्तं नेति प्रसिद्धेरज्ञान-मूलत्वेन[1] तयोः सावकाशयोः निरवकाशलिङ्गेन बाधात्। योगरूढिभ्यां ज्योतिःपदवाच्यो विष्णुरेव सूक्तं च तत्प-रमिति। फलन्तु हृदय आहितत्वमुखेन यो वेद निहितं गुहायामित्युक्तानन्दमयाक्षेपस्तत्समाधिश्चेति ॥ १० ॥

**॥ ॐ छन्दोभिधानान्नेति चेन्न तथा चेतोर्पणनिगदात्तथा हि दर्शनम् ॐ ॥ ११ ॥**

पूर्वसिध्दान्ताक्षेपेण वा पूर्ववषैम्येण वा पूर्वपक्षप्रवृत्तेः स-ङ्गतिः। छान्दोग्ये तृतीयेऽध्याये "गायत्री वा इदं सर्वं भूतं य-दिदं किञ्च वाग्वै गायत्रीति" श्रुता गायत्री किं वर्णसमावेशरू-पाच्छन्दः उत विष्णुरिति सन्देहः। छन्दोविशेष इति पूर्वःप-क्षः। गायत्रीशब्दस्य तत्र रूढत्वात्। न च विष्णुलिङ्गैः पूर्वत्रे-वात्रापि श्रुतिबाधः स्यादित शंक्यम्। विष्णौ प्रसिद्धशब्दत्यागेन अप्रसिद्धगायत्रीपदप्रयोगे प्रयोजनाभावात्। पूर्वत्रैकज्योतिः श्रु-तेलिङ्गेनान्यत्र प्रसिद्धिबाधेपि इह "वाग्वै गायत्री" "येयं पृथि-वीति" वाक् पृथिव्याद्येनेकश्रुतिबाधायोगात विष्णौ गायत्रीपद-स्य रूढेरभावात् योगस्य चामुख्यत्वात् गायत्र्याः वेदविशेष-त्वेन नित्यतया ईशाधीनत्वस्यायोगेन तदधीनत्वन्यायस्याप्य-

---

1 च. 368 नि 3

नवतारात् अत एव प्राग्विष्णुवाचितया निर्णीतज्योतिःश्रुतेः अत्रोत्तरवाक्ये "अथ यदतः परो दिवो ज्योतिर्दीप्यत" इति श्रवणात्तद्बलेन प्राक् श्रुता गायत्री विष्णुरिति निरस्तम् । तया बहुश्रुतिबाधायोगात् "तेजो वै ब्रह्मवर्चसं गायत्री"ति ज्योतिःपर्यायतेजःशब्दस्य गायत्र्यां प्रयोगेण तत्रैव सावकाशत्वाच्च । तबलेन प्राचीनज्योतिपोपि गायत्रीत्वस्यैव न्याय्यत्वात् । यद्वा विष्णुत्वेप्यग्रेतनज्योतिपः त्रिपादस्यामृतंदिवीति गायत्र्या द्युस्थत्वोक्त्या दिवःपरत्वेनोक्तज्योतिपो गायत्रीतोऽन्यत्वात् प्राक्तनस्य ज्योतिषः कर्णादिविदूरत्वेन विष्णुत्वेपि अत्रत्यस्य तदेतद्दृष्टं च श्रुतं चेति तद्विरुद्धदृष्टत्वादिश्रवणेनाविष्णुत्वात् न तया ज्योतिः श्रुत्या गायत्री विष्णुरिति । सिद्धान्तस्तु ॥ "ततो ज्यायांश्च पूरुषः" "यद्वैतद्ब्रह्म" "एतामेवं ब्रह्मोपनिषदं वेदेति" पुरुषब्रह्मादिश्रुतीनां गायति च त्रायतिचेत्युक्ताशेषवेदोच्चारणाख्यगानवाणकर्तृत्वस्य पादोऽस्य विश्वा भूतानीत्यादिनोक्तभूतादिपादत्वस्य एतामेव नातिशीयन्त इत्युक्तसर्वोत्त मत्वादेर्लिङ्गस्य च बाहुल्यात् तत्पदप्रवृत्तिनिमित्तगुणवत्तयोपासनार्थमप्रसिद्धपदप्रयोगोपपत्तेः । बहुभिः श्रुतिलिङ्गैर्बहूनां शब्दानां प्रसिध्दार्थत्यागसम्भवात् । गायति च त्रायतिचेत्युक्त्याऽङ्गरूढितो बलवता श्रौतयोगेन अनादिगुणादीनां गुण्याद्यधीनत्वमिव स्वभावजीवकमाणी[1]त्यादिश्रुत्यपेक्षयाऽनादिनित्यस्यापि ईशाधीनत्वसम्भवेन तदधीनत्वन्यायाच्च महायोगेन सर्वच्छन्दोभिधो ह्येप इति पौ-

---

[1] स्वभावजीवकर्माणि द्रव्यं कालः श्रुतिः क्रिया । यत्प्रसादादिमे सन्ति यदुपेक्षया ॥ त.प्र.

राणिकरूढ्या च गायत्री विष्णुरित्यग्रेतनं प्राक्तनं च ज्योतिः स एव द्युस्थत्वदिवः परत्वादृश्यत्वदृष्टत्वाद्युपदेशभेदस्य त्रिसप्त-लोकविवक्षया आकारभेदेन चोपपत्तेरिति ॥ फलेतु प्राचीनज्यो-तिषो विष्णुत्वाक्षेपतत्समाधी वा अस्यां हीदं सर्वं प्रतिष्ठितमित्यु-क्तस्थितिहेतुत्वमुखेन जन्मादिसूत्राक्षेपतत्समाधी वेति ॥ ११ ॥

**॥ ॐ प्राणस्तथानुगमात् ॐ ॥ १२ ॥**

॥ ॐ न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमाह्य-स्मिन् ॐ ॥

॥ ॐ शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॐ ॥

॥ ॐ जीवमुख्यप्राणलिङ्गान्नेति चेनोपासात्रैविध्यादाश्रित-त्वादिह तद्योगात् ॐ ॥

अत्र श्रुतिलिङ्गबाहुल्येन पूर्वसिध्दान्तन्यायेन पूर्वपक्षप्रवृत्ते-रापवादकी सङ्गतिः। ऐतरेये "ता वा एताः शीर्षञ्छ्रियः श्रि-ताश्चक्षुःश्रोत्रं मनो वाक प्राणं" (ऐ. २-१-४) इत्यादिना बहुस्थ-लेषु श्रुतः प्राणः किं मुख्यवाय्वादिरुत विष्णुरिति सन्देहः। वा-य्विन्द्रजीवा इति पूर्वः पक्षः ॥ तच्छ्रुतिलिङ्गनां बाहुल्यात्। त-थाहि। चक्षुः श्रोत्रादिभिः सह पाठः ता अहिंसंतेत्यादिनोक्तानि प्राणविवादो देहादुक्रमणप्रवेशौ ततो देहपातोत्थाने प्राणसंवाद-श्चेत्यादीनि मुख्यप्राणलिङ्गानि तत्सहचरितप्राणश्रुतिश्च तथा "तं यच्छतं वीण्यभ्यार्चदिति" (ऐ. २-२-१) श्रुतशतायुष्ट्वं तत्सहप-ठितपुरुपश्रुतिः "प्राणो वंश" (ऐ. ३-२-१) इति चक्षुरादीन् प्रति



वंशत्वमित्यादि जीवलिङ्गानि इन्द्रो वै वृत्रं हत्वेत्याद्युक्तवृत्रहनन-

महाव्रतयाजित्वलिङ्गानि "तमिन्द्र उवाच प्राणोवाहमस्म्यृष" (ऐ. २-२-३) इतीन्द्रप्रयुक्ताहंश्रुतिश्चेति श्रुतिलिङ्गबाहुल्यं श्रूयते। न-चैतानि विष्णौ सर्वं सम्भवतीति। सिद्धान्तस्तु॥ एतद्ब्रह्मैत-त्सत्यं (ऐ. २-१-१), तं प्रपदाभ्यां प्रापद्यत (२-१-४), ब्रह्मेमं पु-रुष (२-१-४), अः इति ब्रह्मे (२-३-८) त्यादिश्रुतीनां "तं देवाः प्राणयन्त (ऐ. २-१-५), तं भूतिरिति देवा उपासाञ्चक्रिरे (२-१-८), सर्वे वेदा (२-२-२) इति, प्राणो ह्येष य एप तपति (२-२-१), प्राणस्त्वं प्राणः सर्वाणि भूतानि (२-२-३) आपिपीलिकाभ्यः प्रा-णेन बृहत्या विष्टब्धानी" त्यादिना (ऐ. २-१-६) श्रुतानां देवोपदे-श्यत्व सर्ववेदप्रतिपाद्यत्व सूर्यमण्डलस्थत्व सर्वान्तर्यामित्व स-र्वव्यापित्वलिङ्गानां च भाष्याद्युक्तवचनान्तरबलेन विष्ण्वेकनिष्ठ-त्वात् प्रागुक्तश्रुत्यादितोपि बाहुल्याच्च। प्रागुक्तश्रुतिलिङ्गानां त-त्तदन्तर्यामिस्थतया सावकाशत्वात्। उदासीनवदास्तामित्यस्य (बृ. भा. २-१-४) बाह्यरूपविषयत्वेनाविरोधात्। इन्द्रप्रयुक्ता-हंशब्दस्यापि अहं मनुरित्यादौ वामदेवप्रयुक्ताहंशब्दवल्लक्षणया वा "सर्वान्तर्यामिको विष्णुः सर्वनाम्नाभिधीयते। एषो हं त्वमसौ चे" त्यादिस्मृत्या (ब्र. सू. भा. १-१-१७) मुख्यवृत्त्या वा अन्त-र्यामिपरत्वात् प्राणो विष्णुरेवेति। फले तु अत एव प्राण इत्यु-क्तप्राणस्य विष्णुत्वाक्षेपसमाधी॥ १२॥ इति श्रीमद्राघवेन्द्रय-तिकृतायां न्यायमुक्तावल्यां आद्येऽध्याये प्रथमः पादः॥

# अथ द्वितीयः पादः

श्रीगुरुभ्यो नमः ॥ एवमनन्तवेदगताशेषनाम्नां तत्तद्वाक्यगताशेपलिङ्गैः वैष्णवत्वेऽभिहिते तत्र विप्रतिपन्नलिङ्गानां समन्वयोन पादे निरूप्यते ॥

**॥ ॐ सर्वत्र प्रसिद्धोपदेशात् ॐ ॥ १ ॥**

॥ ॐ विवक्षितगुणोपपत्तेश्च ॐ ॥ ॥ ॐ अनुपपत्तेस्तु न शारीरः ॐ ॥ ॥ ॐ कर्मकर्तृव्यपदेशाच्च ॐ ॥ ॥ ॐ शब्दविशेषात् ॐ ॥ ॥ ॐ स्मृतेश्च ॐ ॥ ॥ ॐ अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॐ ॥ ॥ ॐ सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॐ ॥

पूर्वोत्तरपादान्यायनययोर्नावश्यं सङ्गत्यपेक्षा । अपेक्षायां तु पूर्वाक्षेपादाक्षेपिकी । ऐतरेये "चत्वारः पुरुषा इति बाध्व" इति खण्डे (ऐ. ३-२-३) तस्यैतस्यासावादित्योरस इत्युपक्रमेण एतं ह्येव बह्वृचा महत्युक्त्थे मीमांसंत इत्यादिना उक्थाग्निमहाव्रतपृथिवीद्युवाय्वाकाशौषधिवनस्पति चन्द्रनक्षत्रेषूक्त्वा सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षत इत्यादिना सर्वभूतगतः कश्चिदाम्नायते । स सर्वत्र श्रुतः किमादित्यजीवौ विष्णुर्वेति सन्देहः । पूर्वपक्षः ॥ प्रागसकृच्छ्रुतादित्यपदोक्तस्यैव एतमितिपरामर्शात् तस्य च तस्यैतस्येतिपदेन प्रस्तुतसंवत्सरं परामृश्य रस इति तत्सारत्वाख्यलिङ्गोक्त्यादित्यपरत्वात चित्रं देवानामिति सौरमन्त्रोदाहरणात् आदित्ये एतमिति विशिष्यादित्येऽनुक्तत्वलिङ्गाच्च आदि-

त्य एव सर्वगत इति। चक्षुर्मयः श्रोत्रमय इत्यादिना वक्ष्यमाण-ज्ञानकरणतया प्रसिद्धचक्षुरादिसम्बन्धरूपजीवलिङ्गा- द्भूतेष्वे-तमिति भूतपदोपादनबलाद्भूतादन्यत्राभावप्रतीत्या प्राप्ताल्पौक-स्त्वलिङ्गाच्च। वक्ष्यमाणपरामर्शित्वस्याप्येतच्छब्दे तत्र तत्र द-र्शनात्। सर्वे जीवा वा। न तु विष्णुः उक्तश्रुतिलिङ्गानामयो-गात्। सर्वभूतगतत्वे तद्गतसुखदुःखादिभोगप्राप्तेश्चेति प्राप्तम्॥ सिद्धान्तस्तु। एतमेव ब्रह्मेत्याचक्षत इति ब्रह्मशब्दस्य "तदेव ब्रह्म परमं कवीनामि". (महाना. उ.)त्यादौ विष्णौ प्रसिद्ध-त्वात्। जात्यादेर्ब्रह्मपदामुख्यार्थस्य विष्णोर्ब्रह्मपदमुख्यार्थस्य सत्त्वेन एतमेवेत्यवधारणायोगात् तद्बलेन ब्रह्मपदेनात्र मुख्या-र्थस्यैवग्राह्यत्वात्। स योतोऽश्रुतोऽगतोऽमत इत्यादिनोत्तरवा-क्येनोक्तानां कार्त्स्न्येनाश्रुतत्वादिलिङ्गानां च सत्त्वात्। “अह-मात्मा गुडाकेश सर्वभूताशयस्थित" (भ. गी. १०.२०) इति स्मृति सामाख्यानाच्च साधकसत्त्वात्। संवत्सरो वै प्रजापति-रित्यादेः संवत्सरपदस्य विरिञ्चिपरतया तत्सारत्वस्य अन्तर्नय-न्यायेनादित्यश्रुतेः सर्वगतत्वादेव अल्पस्थानेपि स्थितेः विष्णा-वल्पस्थानत्वरूपाल्पौकस्त्वस्य व्योमवदुपपत्तेः। भूतपदस्य त-थोपासनार्थत्वात्। संभोगप्राप्तेश्च सामर्थ्यवैशेष्येण सुपरिहरत्वेन "भूतेष्वि"त्यनेन चादित्यस्थत्वस्याप्युपपत्तेः। चक्षुरादिस्वामि-त्वादिरूपचक्षुर्मयत्वादेरपि संभवेन बाधकानामभावात् अणो-र्जीवस्यादित्यस्य वा सर्वगतत्वाद्ययोगेन परपक्षे बाधकभावा-च्च पृथिव्यादौ सर्वत्रोच्यमानो विष्णुरेवेति॥ फलं तु भूतेष्वे-

तमेव आदित्यादिक मेव नान्यदित्येवकारेण विष्णोर्भूतादन्य-त्रैव सत्त्वेन प्रतीत्या ब्रह्म तत. मपश्यदिति (ऐ. २-४-३) पूर्वनयनिर्णयश्रुत्युक्तव्याप्तत्वाख्यसर्वगतत्वमयुक्तमिति पूर्वाक्षेप-स्तत्समाधिश्चेति ॥ १ ॥

**॥ ॐ अत्ता चराचरग्रहणात् ॐ ॥ २ ॥**

॥ ॐ प्रकरणाच्च ॐ ॥

अत्र पूर्ववषैयेण पूर्वपक्षोत्थानात् प्रत्युदाहरणरूपा संग-तिः। वाजसनेये तृतीयेध्याये "स यद्यदेवासृजत तत्तदत्तुम-ध्रीयत सर्वं वा अत्तीति तददितेरदितित्वमि" ति (बृ. ३-२-५) श्रुतम्। अत्र सर्वं वा अत्तीत्यनेन लब्धोऽत्ता किमदितिर्देवमाता अथ विष्णुरिति संदेहः। (पूर्वः पक्षः) अदितिरेवेति प्राप्तं तद-दितेरित्यादिश्रुतेः अदितित्वलिङ्गाच्च। आदित्यशब्दपर्यायसवि-तृश्रुतेरन्तर्नयविषयवाक्ये श्रुतायाः वैष्णवत्तासिद्ध्या आदित्यश्रु-तेः पूर्वत्र विष्णुपरत्वेप्यत्र तदसिद्धया श्रुतेर्निरवकाशत्वात्। लिं-गस्याप्यत्तृत्वरूपतयाऽनश्नन्निितिश्रुत्या अनत्तुर्विष्णोरयोगादिति द्वयोनिरवकाशत्वाद्वा श्रुतेरंतर्नयन्यायेन सावकाशत्वेप निरव-काशलिंगानुगृहीतत्वाद्वेति ॥ सिद्धांतस्तु ॥ सर्वं वा अत्तीत्यु-क्तसर्वात्तृत्वरूपसंहतत्वस्य "यमप्येति भुवनं सांपराये" (घृत. सू.), "स्रष्टा पाता तथैवात्तेत्यादि" (स्कान्द पु.)श्रुतिस्मृतिभिः विष्ण्वेकनिष्ठत्वात् तस्यैवादितिपदप्रवृत्तिनिमित्तत- यादितित्व-लिंगस्य अदितिश्रुतेश्च विष्णौ सावकाशत्वात् नैवेह किंचना-ग्र आसीन्मृत्युनैवेदमावृतमासीदित्यनवकाशब्रह्मप्रकरणाच्च वि-

ष्णुरेवात्तेति । अनशनश्रुतिगतिस्तु वक्ष्यते ॥ फलं तु श्रुतिलिंग-बलाददितेः संकुचितसर्वोत्तृत्वे विष्णोस्तदन्यकतिपयात्तृत्वस्यैव सिद्धांतिना लक्षणत्वेन वाच्यत्वाददतिव्याप्तिरिति वा अदितेरेवा-संकुचितसर्वात्तृत्वमिति वा जन्मादिसूत्राक्षेपस्तत्समाधिश्चेति ॥ २ ॥ ॥

**॥ ॐ गुहांप्रविष्टावात्मानौ हि तद्दर्शनात् ॐ ॥ ३ ॥**

॥ ॐ विशेषणाच्च ॐ ॥

अत्र प्रागुक्तात्तृत्वविशेषस्य कर्मफलभोक्तृत्वस्य चिंतना-द्वा पूर्वाक्षेपेण पूर्वपक्षोत्थानाद्वा संगतिः । काठके तृतीयवल्ल-यां "ऋतं पिबंतौ सुकृतस्य लोके गुहां प्रविष्टा" वितिश्रुतवा-क्ये ऋतं पिबंतावित्युक्तौ कर्मफलभोक्तारौ किं जीवेश्वरौ किं वा ईश्वररूपविशेषौ इति संदेहः । पिबन्ताविति द्विवचनश्रुते-र्द्वित्ववाचित्वात् तस्य चाभेदेऽयोगात् कर्मबन्धविधुरे कर्मफ-लभोक्तृत्वस्याप्ययोगात् । छत्रिन्यायेन सजातीयौ भोक्तृजीवे-श्वरावेवेति प्राप्ते ब्रूमः । गुहां प्रविष्टावित्युक्तगुहानिविष्ठत्वलिंग-स्य "यो वेद निहितं गुहायां" (तै. उ. २-१), "गुहाहितं ग-व्हरेष्ठं पुराण" मित्यादिना विष्णोरेव प्रसिद्धत्वात् । यः सेतुरी-जानानामक्षरं बह्मतत्परम् । अभयं तितीर्षतां पारमित्युत्तरवा-क्ये श्रुतात्परत्वविशेषणयुक्तब्रह्मशब्दात् "एषसेतुर्विधृति (छा. ८-४-१)रित्यादिश्रुत्यन्तरसिद्धसेतुत्वाभयत्वादिलिंगाच्च । "आ-त्मान्तरात्मेति हरिरेक एव द्विधा स्थित" (बृ. संहिता) इत्या-दिस्मृतेरेकस्यापि रूपविशेषेण द्वित्वोपपत्तेः । "शुभं पिबत्यसौ

नित्यं नाशुभं स हरिः पिबे" (पाद्म. पु.)दित्यादेः कर्मफलभोक्तृत्वस्य संभवादनशनश्रुतेरशुभभोक्तृत्वाभावपरतयोपपत्तेः । ऋतंपिबंतावीश्वररूपविशेषावेवेति ॥ फले तु पूर्वोक्तसर्वात्तृत्वाक्षेपसमाधी तत्प्रकारश्च चन्द्रिकोक्तः ॥ ३ ॥

**॥ ॐ अंतर उपपत्तेः ॐ ॥४ ॥**

॥ ॐ स्थानादिव्यपदेशाच्च ॐ ॥ ॥ ॐ सुखविशिष्टाभिधानादेव च ॐ ॥ ॥ ॐ श्रुतोपनिषत्कगत्यभिधानाच्च ॐ ॥ ॥ ॐ अनवस्थितेरसम्भवाच्च नेतरः ॐ ॥

अत्र चक्षुरंतस्थस्याभयस्यान्यत्वे प्राचीनोप्यभयत्वेनोक्तोन्यः स्यादिति पूर्वोक्ताक्षेपात्संगतिः । छांदोग्ये चतुर्थेध्याये "य एषोंतरक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्मेति" श्रुतोक्ष्यन्तस्थ आत्मा किमग्निरुत विष्णुरिति संदेहः । अग्निरिति पूर्वः पक्षः । य एष आदित्ये पुरुषः सोहमस्मि स एवाहमस्मीति गार्हपत्याख्याग्निना स्वात्मनः आदित्यस्थत्वोक्तेरादित्यश्चक्षुर्भूत्वेत्यादि श्रुत्या अक्ष्यादित्ययोरेकदैवत्यत्वात् अथहाग्नयः समूदिर इत्यग्निश्रुतिबाहुल्याच्च । न च "स यश्चायं पुरुषे यश्चासावादित्ये स एक" (तै. २-२१) इत्यादिसमाख्याबलादग्नि -प्रयुक्तोऽहंशब्दः तत्स्थविष्णुपर इति वाच्यम् । सोहमस्मि स एवाहमस्मीत्यभ्यासेन समाख्याबाधात् । अपहते पापकृत्यामुपवयंतं भुंजाम इत्याद्यर्थवादबलेनात्यलौकिक -विष्णुग्रहणे अपूर्वत्वमित्यस्यापि बाधादिति ॥ सिद्धांतस्तु ॥ एतदमृतमित्यादिनोक्तामृतत्वादेः परिश्रियंते विद्युतवृष्टि-

श्चन्द्रमा आदित्योऽग्निः, भयादग्निस्तपतीत्यादिना मृत्यादिमत्यग्नावयोगात्। ब्रह्मात्मशब्दयो र्विष्णोरन्यत्रानवकाशात् तद्यदस्मिन् सर्पिर्वोदकं वा सिंचति वर्त्मनी एव गच्छतीत्युक्ताक्षणोऽसंगत्वापादकत्व संयद्वामत्वादिलिंगात् कं ब्रह्म खं ब्रह्मेत्युक्तब्रह्मप्रकरणात् स एनान् ब्रह्म गमयति इत्युपसंहारे श्रुतैतद्विद्यानां ब्रह्मगत्याख्यलिंगश्रवणेन प्रकरणविच्छेदायोगादग्निप्रयुक्ताहंशब्दस्य च पादान्त्यप्राणनयन्यायेन अन्तर्यामिपरत्वेन अभ्यासार्थवादयोरपि तन्निष्ठत्वात् अग्नेरपि जीवत्वेन प्रेरकजीवांतरापेक्षायामनवस्था -पत्तेश्च स्वतन्त्रो विष्णुरेवाक्षिस्थ इति ॥ फले तु अयमक्षिस्थो विष्णोरन्यश्चेत् तस्यैवादित्यस्थत्वात् यश्चासावादित्य इत्युक्तोपि स एवेत्यानन्दमयोप्यन्य इति तदाक्षेपसमाधी ॥ ४ ॥

**॥ ॐ अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॐ ॥५ ॥**

॥ ॐ न च स्मार्तमतद्धर्माभिलापात् ॐ ॥ ॥ ॐ शारीरश्चोभयेपि हि भेदेनैनमधीयते ॐ ॥

अत्रामृतत्वमुखेन आक्षेपात् आक्षेपिकी संगतिः। वाजसनेये पंचमेऽध्याये "एष त आत्मा अन्तर्याम्यमृत" (बृ. ५-७-३) इतिश्रुतः अन्तर्यामी किं प्रकृतिजीवौ वा उत विष्णुरिति संदेहः। प्रकृतिरित्येकः पूर्वःपक्षः। यस्य पृथिवी शरीरमित्यादिना श्रुतपृथिव्याधात्मकत्वरूपपृथिव्यादिशरीरकत्वस्य सर्वोपादाने प्रकृतौ संभवात्। शरीरपदस्य "पूर्वपक्षस्य शरीर" मित्यादौ स्वरूपेपि संभवात्। "त्यासां कार्येषु कारण" मित्यादिना कारण-

स्य कार्यस्थत्वेन यः पृथिव्यां तिष्ठन्नित्यादेरप्युपपत्तेः। कार्यकारणयोर्भेदाभेदेन तादात्म्यतत्स्थयोरविरोधात्। कार्यस्य कारणाधीनत्वेन यः पृथिवीमन्तरो यमयतीत्यादेः गौणत्वेनोपपत्तेरिति। पृथिव्यादि तत्तदभिमानिजीवा एव वा तत्तदन्तर्यामीत्यन्यः। तान्प्रति पृथिव्यादेः स्थूलशरीरत्वात्। एवं च प्रकृत्यादिरेवात्रामृतोन्य इति प्राचीनामृतत्वं नाक्षिस्थस्य विष्णुत्वसाधकभिति। सिद्धांतस्तु॥ यं पृथवी न वेद यः पृथिवीमन्तरो यमयतीत्यादिनोक्तस्य कात्स्र्त्येन पृथिव्यादिदेवाविदितत्वस्य बाह्यापेक्षां विना रममाणत्वरूपांतरत्वस्यच लिंगस्य "न ते विष्णो जायमानः" (ऋ. ७-९९-२) "स योऽतोऽ श्रुतोऽगतोऽमतोऽदृष्टः सर्वेषां भूतानामन्तरपुरुष" इत्यादिश्रुत्या (ऐ.३-२-४) विष्ण्वेकधर्मत्वात् पृथिव्यादेः जडत्वे अप्रसक्तनिरासप्रसंगात यमित्यस्य वैयर्थ्याच्च। शरीरत्वस्य शीर्यत इति शरीरमिति योगेन वा शरीरवदीशनिम्यत्वेन गौण्या वृत्या वा युक्तत्वेन यः पृथिव्यामित्यादेः क्लेशेनानेयत्वात्। प्रकृतिजीवयोः त्रिगुणत्वसंसारित्वाद्यसाधारणधर्माभावात् "य आत्मनोन्तरो विज्ञानादन्तरो विविक्त" इति जीवादन्तर्यामिणो भेदव्यपदेशाच्च अन्तर्यामी विष्णुरेवेत्यमृतत्वमपि तस्यैवेति। फले तु पूर्वाक्षेपसमाधी॥ ५॥

**॥ ॐ अदृश्यत्वादिगुणको धर्मोक्तेः ॐ ॥ ६ ॥**

॥ ॐ विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॐ ॥ ॥ ॐ रूपोपन्यासाच्च ॐ ॥

अत्र "यं पृथिवी न वेद" इत्युक्तादृश्यत्वादेरप्राचीनहेत्वाक्षेपा-

त्संगतिः । आथर्वणे "द्वे विद्ये वेदितव्ये" इत्युपक्रम्य "अथ परा यया तदक्षरमधिगम्यते" "यत्तदद्रेश्यमग्राह्यमगोत्रमवर्ण" मित्यादिनोक्तादृश्यत्वादिगुणकं अक्षरात्संभवतीह विश्वमिति विश्वकारणतया श्रुतमक्षरं किं चिदचित्प्रकृतिविरिंचिरुद्राः उत विष्णुरिति संदेहः । "यथा पृथिव्यामोषधय" इत्युपादानदृष्टान्तबलेनाबाधे अन्तरङ्गत्यागायोगेन च अक्षरादितिश्रुतोपादानत्वरूपकारणत्वलिंगात् जडप्रकृतिरित्येकः पूर्वः पक्षः ॥ "कूटस्थोऽक्षर उच्यत" इति स्मृतावक्षरपदस्य श्रीतत्त्वे प्रयोगादुपादानाभि मानित्वेन उपादानत्वस्यापि संभवाच्चित्प्रकृतिरित्यन्यः ॥ "स ब्रह्मविद्यामि" त्युपक्रमे ब्रह्मशब्दाच्चतुर्मुखो वा कर्तारमीशमित्युत्तरत्रेशपदश्रवणाद्रुद्रोवेत्यपरौ । न चाक्षरादिशब्दा विष्णौ सावकाशाः । अक्षरात्परतः पर इत्युत्कर्षावधितया निर्देशेनोक्ताक्षरस्य निकृष्टत्वेन विष्णुत्वायोगात् । अत एव च कारणत्वमात्रे अक्षरात्सम्भवतीति पञ्चमीति प्रत्युक्तम् । चित्प्रकृतिपक्षे अक्षरात्परत इति पञ्चम्योः सामानाधिकरण्येन पक्षान्तरेषु वैय्यधिकरण्येनोपपत्तेरिति ॥ सिद्धान्तस्तु ॥ "अथ परा यया स हरिर्वेदितव्यः" "सा विद्या तन्मतिर्यये"(भा. ४)त्यादिश्रुतिस्मृतिभिः विष्ण्वेकनिष्ठऋगादिपरविद्याविषयत्वरूपतद्धर्मात् । "यदा पश्यः पश्यते रुग्मवर्ण" मिति रूपोपन्यासात् । "अन्येषां विमिश्राणि व्यमिश्रय" दित्यादिश्रुत्या मिश्ररूपत्वेन शुद्धरूपस्य तदेकनिष्ठत्वात् । अक्षरत्रयमीरितमितिस्मृत्या (स्कान्द पु.) परावधित्वेनोक्ताक्षरस्यान्यत्वेनाविष्णुतया पराव-

धित्वेन निर्देशस्याबाधकत्वात्। पृथिव्यादिदृष्टान्तस्य कारणत्वमात्रे तात्पर्यसम्भवात्। ब्रह्मेशादिशब्दस्य विष्णावेव मुख्यत्वात्। जडपक्षे यः सर्वज्ञ इत्युक्तसार्वज्ञरूपविशेषणायोगात्। "तस्मादेद्ब्रह्म नामरूपमन्नं च जायत" इति "जुष्टं यदा पश्यत्यन्यमीशमि" ति ब्रह्मरुद्रयोरक्षराद्भेदव्यपदेशाच्च। अदृश्यत्वादिगुणकं परतः परत्वेन श्रुतमक्षरं विष्णुरेवेति॥ फले तु अदृश्यत्वादिगुणयुक्तानन्दमयाक्षेप तत्समाधी॥६॥

**॥ॐ वैश्वानरः साधारणशब्दविशेषात् ॐ॥७॥**

॥ॐ स्मर्यमाणमनुमानं स्यादिति ॐ॥ ॥ॐ शब्दादिभ्योन्तः प्रतिष्ठानान्नेतिचेन्न तया दृष्ट्युपदेशादसम्भवात्पुरुषविधमपि चैनमधीयते ॐ॥ ॥ॐ अत एव न देवता भूतं च ॐ॥ ॥ॐ साक्षादप्यविरोधं जैमिनिः ॐ॥ ॥ॐ अभिव्यक्तेरित्याश्मरथ्यः ॐ॥ ॥ॐ अनुस्मृतेर्बादरिः ॐ॥ ॥ॐ सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति ॐ॥ ॥ॐ आमनन्ति चैनमस्मिन् ॐ॥

अत्र प्राचीनादृश्यत्वादिगुणमध्यश्रुतसर्वगतत्वाक्षेपात्सङ्गतिः। छान्दोग्ये पञ्चमेध्याये "अभिविमानमात्मानं वैश्वानरमुपास्ते"(छां. ५-१८-१) इति वाजसनेये च सप्तमेऽध्याये "अयमग्निर्वैश्वानरोयोऽयमन्तः पुरुषो येनेदमन्नं पच्यत" इति (बृ. ७-९-१) वैश्वानरविद्यागतः तथा "वैश्वानरमृत आजातमग्नि"(ऋ. ६-७-१)मित्यादि सूक्तगतो वैश्वानरः किं भूतादिर्भिमानिदेवता वा विष्णुर्वेति सन्देहः।

वैश्वानराग्न्यादिशब्दानां अग्नावेव लोकप्रसिद्धेः। छान्दोग्ये "वैश्वानरे तद्धुतं भवति" (छां. ५-२४-४) "हृदयं गार्हपत्य" (छां. ५-१८-२) इत्यादिना श्रुत होमाधारत्वगार्हपत्याद्यङ्गकत्वस्य काण्वश्रुतौ पाचकत्वादेश्च लिङ्गस्य श्रवणात्। तेषां च विष्णौ मुख्यत्वे लोकव्यवहारविरोधात्। सर्वविद्याया वैष्णवत्वापत्या इयमग्निविद्या इयमन्यविद्येत्यादि व्यवस्थायोगाच्च। वैश्वानरो भूतं देवता वा। न च सिध्दान्तीयलिङ्गसमाख्याप्रकरणानां बाहुल्यात् निरवकाशत्वाच्च अग्निरेवेत्यनिर्णयः इति शङ्कयम्। श्रुतेः स्वभावतो बलवत्वात् तावतापि अभिविमानपदेन अभितो विगतं मानं मर्यादा यस्येत्युक्तसर्वगतस्य वैश्वानरस्य अनिर्णये प्राचीनं सर्वगतमितिश्रुतमक्षरमपि विष्णुरेवेति सिध्दान्त्यभिमतनिर्णयायोगः इति पूर्वःपक्षः॥ सिद्धान्तस्तु। आत्मानमितिश्रुतात्मशब्दादभिविमानमित्युक्तसर्वगतत्वलि-ङ्गादहं वैश्वानरोभूत्वेति स्मृतिसमाख्यानात् "को न आत्मा किं ब्रह्मे" ति विचारपूर्वकमुपक्रम्यैतद्विद्याया अधीतत्वेन ब्रह्मप्रकरणात्। शीर्ष्णो द्यौः समवर्ततेति पुरुपसूक्तोक्तस्य व्द्यादिजनकशीर्ष्णाद्यवयवस्यैव मूर्धैव सुतेजा इत्यर्थतोऽत्र विद्यायामुक्त्या पुरुषसूक्तसमाख्यानाच्च निरवकाशसाध-कसद्भावात्। वैश्वानरादिशब्दानां अग्न्यादिलिङ्गानां च तथोपासनार्थतया ईशे सावकाशत्वाद्विष्णौ मुख्यानामपि शब्दानां अनन्यगतिकतया शब्दाधीनहानादिव्यवहारसिद्ध्यर्थ-मन्यत्रव्यवहाराविरोधात्। अग्न्यादिविद्यादिभिः ब्रह्मोपासनया

अग्न्यादावेव विष्णोः व्यक्तत्वानुस्मरणीयत्वप्राप्यत्वरूपनिमित्तैः विद्यादिव्यवस्थोपपत्तेः । बाधकाभावाद्वैश्वानरो विष्णुरेवेति प्राचीनोपि स एवेति ॥ फले तु पूर्वाक्षेपसमाधी ॥ ७ ॥ इति श्रीराघवेन्द्रयतिकृतायां न्यायमुक्तावल्यां आद्येऽध्याये द्वितीयः पादः ॥

## अथ तृतीयः पादः

एवं अन्यत्रप्रसिध्दाशेषनामलिङ्गसमन्वयं महामल्लभङ्गन्यायेन पूर्वमुक्त्वा अत्र उभयत्रप्रसिद्धनामलिङ्गसमन्वयः क्रियते ॥

**॥ ॐ द्युभवाद्यायतनं स्वशब्दात् ॐ ॥ १ ॥**

॥ ॐ मुक्तोपसृप्यव्यपदेशात् ॐ ॥ ॥ ॐ नानुमानमतच्छब्दात् ॐ ॥ ॥ ॐ प्राणभृच्च ॐ ॥ ॥ ॐ भेदव्यपदेशात् ॐ ॥ ॥ ॐ प्रकरणात् ॐ ॥ ॥ ॐ स्थित्यदनाभ्यां च ॐ ॥

पूर्वेण नावश्यं सङ्गत्यपेक्षेत्यवोचाम । आथर्वणे "यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः । तमेवैकं जानथात्मान"मिति (मुं. २-२-५) श्रुतं द्युभ्वाद्यायतनं किं विष्णुः उत रुद्रादिरिति सन्देहः । रुद्रः प्रधानं वायुः जीवो वेति पूर्वः पक्षः । "रुद्रो वाव लोकाधारः" "प्राणानां ग्रन्थिरसि रुद्रो माविशान्तकः" (महाना.) "रुद्रः प्राणेश्वरः कृत्तिवासाः पिनाकी" (घृत सू.) "यदूर्ध्वं गार्गि दिवो यदर्वाक् पृथिव्या यदन्तरा द्यावा पृथिवी इमे यद्भूतञ्च भवच्च भविष्यच्चेत्याचक्षते आकाश एव तदोतं च प्रोतं चेति" (बृ. ५-८-७) "वायुना वै गौतम सूत्रेणायं

लोकः परश्च लोकः सर्वाणि च भूतानि सन्दृब्धानी"ति (बृ. ५-७-२) यथाक्रमं त्रिषु समाख्यानात्। "स एषोन्तश्चरते बहुधा जायमान" इति (मुं. ४-६) जायमानत्वरूपलिङ्गाच्च। लोकाश्च लोकिनश्च विष्णावेव ओताश्चेति विष्णुसमाख्यातोपि बहुरुद्रश्रुतिलिङ्गोपेतत्वेन रुद्रसमाख्यायाः प्राबल्यात्। निरवकाशजायमानत्वलिङ्गेन विष्णुसमाख्याया बाधाच्च। न च "अथ परा यया तदक्षरमधिगम्यत" इति परविद्याविषयत्वरूपविष्णुलिङ्गमप्यनवकाशमिति वाच्यम्। एवं हि द्वयाविरोधेन जीवेशाभेदोऽस्तु पूर्वोक्तदिशा विष्णुलिङ्गस्य जीव इव जीवलिङ्गस्य विष्णावयोगादिति ॥ सिद्धान्तस्तु ॥ आत्मानमित्यात्मशब्दादमृतस्यैष सेतुरिति मुक्तप्राप्यत्वरूप अनवकाशविष्णुलिङ्गाद्रुद्राद्यसाधारणभस्मधरोग्रादिशब्दाभावात्। समाख्यागत -रुद्रादिशब्दानां "रुजं द्रावयते यस्मादि"त्यादि(ब्रह्माण्ड०) स्मृत्या वैष्णवत्वात्। जायमानत्वस्याप्यजायमानो बहुधा विजायत इति श्रुत्यन्तरबलात्प्रादुर्भावाख्यजनिसम्भवेन च विष्णुनिष्ठत्वात्। द्वे विद्ये वेदितव्य इति परविद्याविषयतया प्रकृतेशस्यैव जुष्टं यदा पश्यत्यन्यमीशमिति जीवेन भेदव्यपदेशेन तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्योभिचाकशीतीति जीवेशयोः कर्मफलोपजीवनतद्रहितावस्थानरूपभेदकोक्त्या च तयोरैक्यायोगाद्विष्णुरेव द्युम्वाद्यायतनमिति ॥ फले तु द्युभ्वाद्यायतनस्य ब्रह्मान्यत्वे अदृश्यत्वादिगुणकाक्षरमप्यन्यदिति तदाक्षेपसमाधी ॥ १ ॥

**॥ ॐ भूमासम्प्रसादादध्युपदेशात् ॐ ॥ ३ ॥**

॥ ॐ धर्मोपपत्तेश्च ॐ ॥

"स एवाधस्तात्स एवोपरिष्टात्स पश्चात्स पुरस्तात्स दक्षिणतः स उत्तरतः स एवेदं सर्वं" (छा. ७-२५-१) "यत्र नान्यत्पश्यति नान्यच्छ्रुणोति नान्यद्विजानाति स भूमा स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि" (छो. ७-२४-१)। स एवाधस्तात्स उपरिष्ठादित्यादिना श्रुतस्य सर्वगतत्वादेर्भूमधर्मस्य "ब्रह्मैवेदममृतं पुरस्तात् पश्चाद्ब्रह्म दक्षिणत" (मुं. ४-१३) इत्यादिना द्युभ्वाद्यायतने श्रुतत्वात्तदाक्षेपेण पूर्वपक्षोत्थानात्सङ्गतिः। "यो वै भूमा तत्सुखमिति" (छां. ७-२३-१) छान्दोग्ये सप्तमेऽध्याये श्रुतो भूमा किं मुख्यप्राण उत विष्णुरिति सन्देहः ॥ प्राणो भूमेति पूर्वपक्षः ॥ नाम वाक् मनः सङ्कल्प चित्त ध्यान विज्ञान बलान्नाप् तेज आकाश स्मराशा प्राणेषु प्रत्येकं प्रश्नप्रत्युक्तिपूर्वमुत्तरोत्तराधिक्यमुक्तवा प्राणादूर्ध्वमस्ति प्राणाद्भुय इति प्रश्नस्य भूमा वाव प्राणाद्भूयानिति प्रत्युक्तेश्चाभावेन भूम्नः प्राणादनन्यत्वात् विष्णुर्वाव देवेभ्यो भूयानिति समाख्यायाः प्राणो वा आशाया भूयानिति उपक्रमात् दुर्बलतया तेन तद्बाधात्। उत्क्रान्तप्राणानिति प्राणे श्रुतस्योत्क्रमणलिङ्गस्य सर्वगते विष्णावयोगेन "अत एव प्राण" (ब्र.सू. १-१-२३) इति न्यायेन प्राणश्रुतेः विष्णाववकाश इत्यस्याप्ययोगादिति ॥ सिद्धान्तस्तु ॥ निरुपपदसुखपदोक्तपूर्णसुखत्वस्य सर्वेषां नामादीनां उपरि सर्वाधिकत्वेनाम्न्तत्वस्य स एवाधस्तादित्यादिनोक्त सर्वगतत्वादिधर्माणां च "विश्वशम्भुवं विश्वतः पर" मित्यादिश्रुतिभिः (महाना.उ.) ब्रह्मै-

कनिष्ठत्वात् विष्णावणुत्वस्यापि वक्ष्यमाणत्वेनोत्क्रमणक्रियाया अपि युक्तत्वात्। प्राणो भूमा च विष्णुरेवेति प्राणभूम्नोरभेदेन वा प्राणस्य वायुत्वेपि प्रश्नप्रत्युक्तयध्याहारेण ततो भेदेन वा भूमा विष्णुरेवेति। फले तु सुखमित्युक्तपूर्णसुखत्वमुखेनानन्नदमयाक्षेपसमाधी ॥ २ ॥

**॥ ॐ अक्षरमम्बरान्तधृतेः ॐ ॥ ३ ॥**

॥ ॐ सा च प्रशासनात् ॐ ॥ ॥ ॐ अन्यभावव्यावृत्तेश्च ॐ ॥

पूर्वत्रैकप्रकरणस्थोः सर्वगतत्वोत्क्रमणयोः विरोधनिरासोऽत्रत्वेकवाक्यस्थयोः अणुत्वमहत्वयोर्विरोधो निरस्यत इति सङ्गतिः। काण्वशाखायां पञ्चमेऽध्यायेऽष्टमब्राह्मणे "एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमित्यादिना (बृ. -८-८) श्रुतमक्षरं किं चित्प्रकृतिरुत विष्णुरिति सन्देहः। अक्षर शब्दस्य येत्वक्षरमनिर्देश्यमित्यादौ (भ.गी. १२-३) श्रीतत्वे प्रयोगादिविनाशित्वरूपनिमित्तसत्तवात् अहं सोममाहनसं बिभर्मीति श्रुत्यन्तरे श्रीतत्वधर्मतया श्रुतस्य चन्द्राद्याधारत्वस्येह सूर्याचन्द्रमसौ विधृतौ तिष्ठत इति श्रवणाददृष्टं द्रष्टृश्रतमित्यादिनोक्तादृश्यत्वादेश्च ये त्वक्षरमित्यादिस्मृत्या श्रीतत्त्वेदि सम्भवान्न तदश्नाति किञ्चनेत्युक्तानशनस्य "अत्ते"(ब्र.सू.१-२.९)त्यत्रातृत्वेनोक्तविष्णावयोगात्। किञ्चनेत्युक्त्या गुहानयोक्तन्यायेन (ब्र.सू. १-२-११) अशुभानशनपरत्वस्याप्ययोगात्। श्रीतत्त्वे च स्वतन्त्राशनाभावादिनोपपत्तेः। चित्प्रकृतिरेवेदं अक्षरमिति पूर्वः पक्षः ॥ सिद्धान्तस्तु ॥ यद्भूतं

च भवच्च भविष्यच्चेत्याचक्षते आकाश एव तदोतमिति आकाशाख्यप्रकृतेः सर्वाधारत्वमुक्त्वा एतस्मिन्खल्वक्षरे गार्गि आकाश ओतश्च प्रोतश्चेति तदाधारत्वस्यैतस्य वा अक्षरस्य प्रशासने गार्गीत्यादिनोक्तस्या- सङ्कुचितविषयत्वानन्यायत्तत्वरूपप्रकर्षयुक्तसर्वशासनलिङ्गस्यास्थूलमनण्वि त्यादिनोक्तस्यान्यानपेक्षप्राकृतस्थौल्याद्यभावस्य स्थौल्यादिविरुद्धाणुत्वमहत्वादेर्वा लिङ्गस्य एको दाधार भुवनानि सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशेति अस्थूलोऽनणुरमध्यमो मध्यमो व्यापकोऽव्यापक इत्यादिश्रुत्या विष्वेकनिष्ठत्वात् "अनित्यत्वं देहानि" रित्यादिश्रुत्या[1] चतुर्विधनाशहीने विष्णावेवाक्षरपदप्रवृत्तिनिमित्तपौष्कल्यात्तस्मादक्षरं तस्मादक्षरमितिप्रयोगाच्चाक्षरं विष्णुरेव अनशनश्रुतिस्तु जीवस्वभावभृतोपजीवनाशिननिषेधपरा अणुत्वमहत्वादिकं चाचिन्त्यशक्तियुक्तत्वाद्युक्तमिति सर्वाधारत्वे सत्यन्यैकाश्रितत्वलिङ्गेनाकाशोत्र श्रीतत्त्वमिति ध्येयम् ॥ फले त्वदृश्यत्वादियुतस्याक्षरस्य विष्ण्वन्यत्वे प्राचीनं तादृशाक्षरमपि तथेत्यदृश्यत्वनयाक्षेपसमाधी ॥ ३ ॥

**॥ ॐ ईक्षतिकर्मव्यपदेशात्सः ॐ ॥ ४ ॥**

अत्र सदेवेति सच्छब्दार्थस्यान्यत्वे सदायतना इत्युक्तसर्वाधारत्व -स्याप्यन्यनिष्ठत्वात् प्रागुक्ताम्बरान्तधृतिरपि तस्यैवेत्याक्षेपात्सङ्गतिः । छान्दोग्ये षष्ठेऽध्याये "सदेवसोम्येदमग्र" इत्युपक्रम्य (छां. ६-२-१) "तदैक्षत बहुस्यां प्रजायेये"त्यादिना का-

[1] गी. ता. 2-17

रणत्वादिनोक्तं सत्पदवाच्यं किं ब्रह्म उत प्रधानं इति सन्देहः। प्रधानमिति पूर्वः पक्षः। बहु स्यामिति तेजःप्रभृतिबहुभावश्रवणात् तस्य परिणम्यमाने प्रधान एव योगात् "निर्विकारोक्षरः-शुध्द" इत्यादिश्रुतेः ईशे निर्विकारे तदयोगात्। नचात्र स्वरूपबहुभाव एवोक्तः न तेज आद्यात्मना बहुभाव इति वाच्यम्। तत्तेजोऽसृजतेति वाक्यशेषविरोधात्। न हि स्वरूपबहुभावं सङ्कल्प्य तेजःप्रभृति सर्जनं युक्तम्। ईक्षणं तु प्रधानस्य ज्ञानहेतुसत्वगुणयोगेन वा कार्योन्मुखत्वेन वा अभिमानिन ईक्षितृत्वेन वा गौणमिति। सिद्धान्तस्तु ॥ तदैक्षतेत्युक्तेक्षितृत्वस्य मुख्यसम्भवे अमुख्यस्य ग्रहणायोगात्। अभिमानिनयन्यायेन तेजःप्रभृतीनां देवतात्वेन तदात्मना बहुभावस्य प्रधानेप्ययोगात् नियामकस्वरूपबहुभावस्य नियम्यसृष्टिसापेक्षत्वेन स्वरूपबहुभावसङ्कल्पेपि नियम्यतेजःप्रभृतिसर्जनस्य सङ्गतत्वात् एकस्यापीश्वरस्य गुहानयन्यायेन बहुत्वस्य द्युभ्वादिनयोक्तन्यायेन जननस्य च सम्भवात्। मुख्येक्षितृत्वेन लिङ्गेन कारणत्वादिना सत्पदवाच्यं ब्रह्मैवेति ॥ फले तु सदेवेत्यवधारणेन प्रधानस्यैव कारणत्वप्रतीत्या ईशे तदभावादित्यादिना चन्द्रिकोक्तदिशा जन्मादिसूत्राक्षेपसमाधी ॥ ४ ॥

**॥ ॐ दहर उत्तरेभ्यः ॐ ॥५ ॥**

॥ ॐ गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च ॐ ॥ ॥ ॐ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॐ ॥ ॥ ॐ प्रसिद्धेश्च ॐ ॥ ॥ ॐ इतरपरामर्शात्स इति चेन्न असम्भवात् ॐ ॥ ॥ ॐ

उत्तराच्चेदाविर्भूतस्वरूपस्तु ॐ ॥ ॥ ॐ अन्यार्थश्च परामर्शः ॐ ॥ ॥ ॐ अल्पश्रुतेरिति चेत्तदुक्तम् ॐ ॥

अत्र "उभेऽस्मिन्द्यावापृथिवीत्यादिना हृत्पद्मस्थस्य सर्वाधारत्वश्रवणात् तस्य विष्ण्वन्यत्वे इमाः प्रजाः सदायतना इत्यादिना तथोक्तं सदप्यन्यदिति पूर्वाक्षेपेण पूर्वपक्षोत्थानात्सङ्गतिः। छान्दोग्ये अष्टमाध्यायाद्यखण्डे "यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोस्मिनन्तर आकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमिति तं चेद्ब्रुयुर्यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोस्मिन्नन्तर आकाशः किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यमिति स ब्रूयात् यावान्वाऽयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः उभेऽस्मिन् द्यावापृथिवी अन्तरेव समाहिते"त्यादिना (छां. ८-१-१) सर्वाधारत्वेन श्रुतं हृत्पद्मस्थं किमाकाशः जीवो वा विष्णुर्वेति सन्देहः। आकाश एव न तु ब्रह्मेति पूर्वः पक्षः॥ गगने प्रसिध्दस्यैवाकाशशब्दस्य हृत्पद्मस्थे प्रयोगात्। न च तस्य सर्वाधारत्वाख्यलिङ्गश्रवणात् आकाशस्तल्लिंगादितिन्यायेन ब्रह्मवाचित्वमिति वाच्यम्। पद्मकोशप्रतीकाशं हृदयमिति प्रकृते तस्यान्ते सुषिरं सूक्ष्म तस्मिन्सर्वं प्रतिष्ठितमिति श्रुत्यन्तरे (महाना. उ) सुषिरशब्दिताकाशस्यैव हृत्पद्मस्थत्वसर्वाधारत्वयोरुक्तया तत्समाख्याविरोधात्। आकाशस्यैव ब्रह्मत्वे तत्स्थस्यान्वेष्टव्यत्वोक्तेरयोगाच्च। न चाकाशस्य प्रसिध्दाकाशत्वेपि तत्स्थतया परम्परया हृत्पद्मस्थं ब्रह्मेति वाच्यम्। वाक्यान्वयायोगात्। किं तदत्र विद्यत इति प्र-

श्चे ब्रह्म विद्यत इत्येव वाच्ये यावान्वेत्यादिनान्तर्हृदयाकाशस्य बाह्याकाशतौल्योक्तेरसङ्गतत्वात् सुपिरश्रुतिविरोधापत्त्या यावानिति वाक्ये सर्वाधारतयोक्ताकाशस्य ब्रह्मत्वाङ्गीकारेणापि तद्वाक्यसङ्गत्युक्त्ययोगाच्च। प्रागुक्तमेव दहराकाशं बाह्याकाशतुल्यतया विशिष्य तत्र द्यावापृथिव्यादिकं विद्यत इति उभेऽस्मिन्नित्यादिनोच्यत इत्युक्तेरेव सङ्गतत्वेन द्यावापृथिव्यादेरेवाकाशान्तस्थत्वौचित्यात्। अतः साक्षात् हृत्पद्मस्थमाकाशं परम्परया तु द्यावापृथिव्यादिकमित्येकः। जीवो वा दहराकाशान्तस्थ इत्यन्यः। दहराकाशस्थे य आत्माऽपहतपाप्मेति वाक्यशेषे आत्मशब्दप्रयोगात् तस्यैष आत्मेत्युत्तरवाक्ये प्राक्सम्प्रसादपदेन प्रस्तुतं जीवमेष इति पुल्लिङ्गे तच्छब्देन परामृश्य आत्मत्वविधानेन जीवार्थत्वात्। दहरस्थत्वलिङ्गाच्च तस्य सर्वगते विष्णावयोगात्। व्योम्नोंऽशस्यापूर्णत्वेन अंशतोऽल्पौकस्त्वयोगेपि ब्रह्मणोंशस्यापि पूर्णत्वेन व्योमवत्समाधानायोगाच्च यावान्वेत्यादिवाक्यान्वयस्य ब्रह्मपक्षेपि सामान्यादिति ॥ सिद्धान्तस्तु ॥ हृदयस्थदहराकाशान्तस्थतया हृत्पद्मस्थं ब्रह्मैव। य आत्मा अपहतपाप्मेत्युत्तरवाक्ये श्रुतापहतपाप्मत्वविजरत्वविमृत्युत्व- विशोकत्वादिलिङ्गेभ्यः तेषां च "स एष सर्वेभ्यः पाप्मभ्यः उदितः" (छां. १-६-७) "योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति" (बृ. ५-५-१) इत्यादिना विष्ण्वेकनिष्ठत्वात्। तथा "अहरहर्गच्छन्त्यः एतं ब्रह्मलोकं न विन्दन्ती"ति (छां. ८-३-२) सुप्तप्राप्यत्वलिङ्गात् तस्य च "सता सौम्य तदा सम्पन्नो भवती"ति (छां.

६-८-१) वाक्ये ईक्षतिनयन्यायेन ब्रह्मधर्मतया श्रवणात्। ब्रह्म-लोकमिति हृत्पद्मस्थे ब्रह्मलोकपदेप्रयोगेण ब्रह्मैव वा सर्वाश्रय-त्वादिना लोकपदोक्तमिति ब्रह्मपदश्रवणात्। तथा "अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके" (छां. ८-५-३) इत्यरण्याख्य सुधासमु-द्राश्रयलोके प्रयुक्तस्य ब्रह्मलोकपदस्य हृत्पद्म प्रयोगेण तत्स्थ-स्य सुधासमुद्राश्रयलोकवत्वलिङ्ग श्रवणात्। तस्य च "अरश्च ह वैण्यश्च सुधासमुद्रौ" इत्यादि भाष्योक्त श्रुत्या विष्णुधर्मत्वात्। तथा "अयमात्मा स सेतुर्विधृतिः एषां लोकानां असंभेदाये"ति (छां. ८-४-१) हृत्पद्मस्थे श्रुतसर्वाधारत्वलिङ्गात्। तस्य च अक्ष-रादिनये विष्णुधर्मत्वेन निर्णयात्। तथा "य एषोऽन्तर्हृदय आ-काशः तस्मिन् शेते सर्वस्य वशी" इत्यादि (बृ. ६-४-२२) का-ण्वश्रुति समाख्यानात्। तस्याश्च सर्वेश्वरत्वादि विष्णुमहिमोक्त्या वैष्णवत्वात्। तथा "दहरं विपापं परवेश्मभूतं हृत्पुण्डरीकं पु-रमध्यसंस्थं तत्रापि दह्रं गगनं विशोकः तस्मिन् यदन्तः तदु-पासितव्य" मिति (महाना. उ.) विष्णुपरतया प्रसिद्ध तैत्तिरी-यसमाख्यानाच्च। साधकाभावाज्जीवादी अपहतपाप्मत्वादीनाम् "अशनायादिकानन्ये तत्प्रसादात्तरन्ति हि" (पाद्म. पु.) इत्या-देः स्वातन्त्र्येणासम्भवात्। "स तत्र पर्यैती"त्यादि वाक्ये (छो. ८-१२-३) च मुक्तस्यैव सत्यकामत्वाद्युक्तेः। तस्य च हृत्पद्म-स्थत्वायोगात्। "एष आत्मा" (छां ८-३-४) विधेयापेक्षया पु-ल्लिङ्गेनैतच्छब्देन परञ्ज्योतिरिति प्रस्तुतस्य "ॐ आत्मा प्रक-रणात् ॐ" (ब्र. सू. ४-४-३) इत्यत्र ब्रह्मतया निर्णेष्यमाणस्य

ज्योतीरूपब्रह्मण एव परामर्शेन हृत्पद्मस्थात्मत्वविधानात्। अ-ल्पौकस्त्वस्य सर्वत्रेति नये (ब्र. सू. १-२-१) विष्णावपि साधितत्वात्। अचिन्त्यशक्त्यादिना पूर्णस्याप्यल्पौकस्त्वोपपत्तेः। शरीरपुण्डरीकयोः ब्रह्मप्रति पुरत्ववेश्मत्वोक्त्यैव आकाशस्थस्य अन्वेष्टव्यस्य ब्रह्मत्वसिद्धौ कीदृशं तदिति भावेन "किं तदत्रे" ति प्रश्ने तस्य ब्रह्मणो हृदये यावानयं बाह्याकाशः तावान् सर्वोप्यस्ति तस्मिन् द्यावापृथिव्यादिकमस्ति इत्याकाशादि सर्वाश्रयत्वादिकमुच्यत इति यावानित्यादि वाक्यान्वयोपपत्तेः। परपक्ष एव आकाशस्थं किमिति पृष्टे आकाशस्य बाह्याकाशतौल्योक्त्यनुपपत्तेः। मन्दिरे मणिमालेतिवत् सुपिरस्थेशस्य सर्वाधारत्वाशयेन सुपिरश्रुत्युपपत्तेश्च बाधकाभावाच्चेति॥ फलं तु चन्द्राद्याधारत्वमुखेन अक्षराधिकरणाक्षेपः तत्समाधिश्चेति॥५॥

**॥ ॐ अनुकृतेस्तस्य च ॐ ॥६॥**

॥ ॐ अपि स्मर्यते ॐ ॥

पूर्वत्र एष आत्मेत्येतच्छब्दस्य ज्योतिःशब्दित ब्रह्मपरामर्शित्वेपि विधेयात्मापेक्षया पुंस्त्वं युक्तम्। इह तु तदेतदिति शब्दयोर्द्वयोः प्राक्तनेशपरत्वे क्लीबत्वमयुक्तमिति पूर्ववैषम्येण शङ्कनात्सङ्गतिः। काठके "तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखं कथं नु तद्विजानीयां किमु भाति न भाति वा" इति (का. २-२-१२, १४) श्रुतं ज्ञानार्थं प्रार्थितत्वरूपं आनुकूल्येन गृह्यमाणत्वं किं ज्ञानिसुखस्य उत विष्णोरिति सन्देहः॥ पूर्वपक्षस्तु॥ "तद्विजानीयां"मिति तच्छब्दस्य पूर्वार्धोक्तसुखपरामर्शात् तस्य

च "तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषां" इति पूर्वत्र प्रकृतसन्निहितज्ञानिसुखपरामर्शितदेतच्छब्दबलेन प्रत्यभिज्ञाज्ञापकसुखपदेन च ज्ञानिसुखत्वात् "एको वशी" (का. २-२-१२)त्यादिना ईशस्य प्रकृतत्वेपि व्यवधानात् द्वयोर्नपुंसकत्वायोगाच्च ज्ञानिसुखस्यैवेति। सिद्धान्तस्तु। "न तत्र सूर्यो भाती"ति "तमेव भान्तमनुभाति सर्व" इति "तस्य भासा सर्वमिदं विभाती"ति (का. २-२-१५) श्रुतानां सूर्याद्यप्रकाश्यत्व सूर्यादि प्रकाशनहेतुत्व सर्वजगत्प्रकाशकत्वानां लिङ्गानां "न तद्भासयते सूर्यः" (भ. गी. १५-६) "अहं तत्तेजो रश्मीत्" (चतुर्वेदशिखा) "यदादित्यगतं तेजः" (भ.गी. १५-१२) इत्यादि वचनैः ईशैकनिष्ठत्वात्। तत्रेत्यादेः सन्निहित "तद्विजानीया"मित्येतत्परामर्शित्वस्वारस्यात् "तदेत"दित्यत्र ईशपरामर्शित्वेपि "यदनिर्देश्यं परमं सुखं कथन्नु तद्विजानीयाँ" इत्यानुकूल्येन गृह्णन्ति विज्ञानार्थं प्रार्थयन्त इति यावत् तदनिर्देश्यं सुखम् एतत् प्रस्तुतात्मरूपम् इति योजनायां तदेतच्छन्दयोरपि क्लीबतोपपत्तेः। चेतनश्चेतनानामिति ईशस्यापि सन्निधानेन प्रकृतत्वादीशस्यैवेति॥ फलं तु अनिर्देश्यमित्यादिनोक्तादृश्यत्वमुखेन अदृश्यत्वनयाक्षेपस्तत्समाधिश्च ॥ ॥६ ॥

**॥ ॐ शब्दादेव प्रमितः ॐ ॥७ ॥**

॥ ॐ हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॐ ॥

अत्र "विश्वेदेवा उपासते" इत्यस्य (का. २-२-३) उपास्यत्वोक्त्या तज्ज्ञानादेव मोक्षावगमात् "तमात्मस्थं येऽनु प-

श्यन्ति" इत्युक्तस्य (का. २-२-१२) विष्णुज्ञानादेव मोक्ष इत्यस्य आक्षेपात्सङ्गतिः । काठके "अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ईशानो भूतभव्यस्य" (का. २-१-१२) इत्युक्तेशानः किं मुख्यवायुः उत विष्णुरिति सन्देहः । वायुरिति पूर्वः पक्षः । "ऊर्ध्वं प्राणमुन्नयति अपानं प्रत्यगस्यति मध्ये वामनमासीनं विश्वेदेवा उपासते" इति (का. २-२-३) प्राणादिव्यवस्थापकत्व मध्यमत्व सर्वदेवोपास्यत्वानां श्रवणात् तेषां च "एवमेव एष प्राणः इतरान् प्राणान् पृथक्पृथगेव सन्निधत्ते" इति (षड्व. ३-४) "अथेममेव नाप्नोद्योऽयं मध्यमः प्राणः" इति (बृ. ३-६-२१) वाजसनेये तृतीये वाजसनेये चतुर्थे "अयं वाव शिशुः योऽयं मध्यमः प्राणः" (बृ. ४-२-१) इति शिशुब्राह्मणे । "कुविदङ्ग नमसा" (ऋ. ७-९१-१) इत्यादि श्रुतिभिः वायुधर्मत्वावगमात् । विष्णावक्षरनये अणुत्वोक्तावपि इह श्रुताङ्गुष्ठमात्रत्वायोगाच्च । तस्य ततोऽधिकपरिमाणराहित्यार्थत्वात् । न च हृदयापेक्षयोपपत्तिः । विकल्पासहत्वात् । यत्किञ्चिदङ्गुष्ठमितत्वे निर्धारणायोगेन उपासनानुपपत्त्या तदुक्तिवैयर्थ्यात् । तत्तदङ्गुष्ठमितत्वे पश्वादेस्तदभावेन तदन्तस्थस्य तत्त्वायोगादिति ॥ सिद्धान्तस्तु ॥ वामनमिति श्रुतवामनश्रुतेः "एष उ एव वामनिः एष हि सर्वाणि वामानि नयति" (छां. ४-१५-३) "उपेन्द्रो वामनः प्रांशुः" (विष्णु. स. ना.) इत्यादिश्रुतिस्मृतिभिः एकदेशविकृतं अनन्यवद्भवतीति न्यायेन विद्वत्प्रसिद्ध्या च योगरूढिभ्यां विष्ण्वेकनिष्ठत्वेन अन्यत्रानवकाशात् । प्राणनियामकत्वस्य अन्तर्यामिनयन्यायेन



(ब. सू. १-२-१८) सर्वनियामके हरौ युक्तत्वात् । "यद्देवान् प्रा-

णयो नव" (ते. आ. ३-१४) इति विशिष्य च श्रुत्यन्तरे वैष्णवत्वोक्तेः मध्य इति मध्यशब्दोर्ध्वशब्दसाहचर्येण मध्यदेशवाचितया मध्यमोक्त्यभावेन मध्यदेशेऽवस्थानस्य विष्णावपि योगात्। सर्वदेवोपास्यत्वस्यापि सर्वजिज्ञास्यत्वपर्यायतया तस्य दहरनये सिद्धत्वात् एवं सावकाशतया स्वतश्च दुर्बलानां स्वतो निरवकाशतया बलवत्या श्रुत्या बाधात् अङ्गुष्ठमात्रत्वस्य च तत्तदङ्गुष्ठमितरूपविशेषस्य व्यक्त्यात्मना अङ्गुष्ठमात्रत्वाद्वा तादृशस्थानहृदयगतस्य तत्रस्थानिनि ईशे उपचाराद्वा युक्तत्वात् प्राण्यन्तरस्याङ्गुष्ठाभावेपि शास्त्रस्य मनुष्याधिकारित्वेनादोषात् अयमीशानो विष्णुरेवेति। फलं तु उपास्यत्वमुखेन जिज्ञासासूत्राक्षेपः तत्समाधिश्च ॥ ७ ॥

**॥ ॐ तदुपर्यपि बादरायणः सम्भवात् ॐ ॥ ८ ॥**

॥ ॐ विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॐ ॥ ॥ ॐ शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम् ॐ ॥ ॥ ॐ अत एव च नित्यत्वम् ॐ ॥ ॥ ॐ समाननामरूपत्वाच्चावृत्तावप्यविरोधोदर्शनात्स्मृतेश्च ॐ ॥ ॥ ॐ मध्वादिष्वनाधिकारं जैमिनिः ॐ ॥ ॥ ॐ ज्योतिषि भावाच्च ॐ ॥ ॥ ॐ भावं तु बादरायणोऽस्ति हि ॐ ॥

पूर्वत्र मनुष्याधिकारत्वादित्युक्तिः तिर्यगाद्यपेक्षयैव देवादीनां तु अधिकारोऽस्त्येव इत्यत्रोच्यत इति सङ्गतिः। "विश्वेदेवा उपासत" इत्युपासकत्वेन श्रुतदेवानां उपासनादौ अधिकारोऽस्ति न वेति सन्देहः। नास्तीति पूर्वः पक्षः॥ तत्तत्पदवि-

शिष्टानां देवानां उत्पत्तिविनाशवत्वे इन्द्रादिपदप्राप्तेः पूर्वं पश्चाच्च इन्द्रादिदेवानामभावेन तदुद्देशेन द्रव्यत्यागात्मकयागादिरूपकर्मविरोधस्य तत्तद्देवताबोधकानादिनित्यवेदाप्रामाण्यस्य च आपातात्। पूर्वं पश्चात् इन्द्रान्तरस्वीकारेण तेषां प्रवाहतोऽनादिनित्यत्वाङ्गीकारेपि एकनामरूपत्वे मानाभावेन नानानामरूपवत्त्वात् एकरूपार्थबोधकवेदाप्रामाण्यानिवारणाच्च। अनादिनित्यत्वेऽवश्यं स्वीकार्यं तादृशानां तत्फले मोक्षेऽर्थिताभावात्। किंच वसुत्वादिफलकमधुविद्यादिषु वस्वादीनामधिकारायोगेन सर्वविद्यासु अनधिकारात् मोक्षफलकास्वपि "नैव दैवपदं प्राप्ताः ब्रह्मदर्शनवर्जिताः" इत्यादेः तेषां सिद्धज्ञानतया मोक्षहेतुज्ञानार्थं अधिकारायोगादिति ॥ सिद्धान्तस्तु ॥ देवानामपि विशिष्टबुद्ध्यादिमत्वात् शूद्रवत् अपर्युदस्तत्वात् आद्यन्तवन मोक्षेऽथित्वस्यापि सम्भवात् तेषां उत्पत्तिविनाशवत्वेपि "ते ह ना महिमानः सचंत यत्र पूर्वं साध्यास्सन्ति देवाः" "धाता यथा पूर्वमकल्पयत्" (पुरुष सू.) "यथैव नियमः काले सुरादि नियमस्तथा" इत्यादिवचनैः प्रमाणभूतवेदस्य अनादिनित्यत्वान्यथानुपपत्या च प्रवाहतोऽनादिनित्यत्वात् तेषां च यथापूर्वमिति श्रुत्या अनादिनिधनेत्यादि स्मृत्या समाननामरूपत्वेन वेदप्रामाण्यानापत्तेः। मधुविद्यादेः वसुत्वादिफलकत्वेपि वस्वादीनां ज्ञाने मोक्षे च अतिशयार्थं तत्र अर्थित्वसम्भवात् अस्ति ब्रह्मविद्यायां अधिकार इति ॥ फलं तु विश्वेदेवा उपासत इत्यादेः पूर्वोक्तस्याप्रामाण्यं तत्समाधिश्च ॥ ८ ॥

**॥ ॐ शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॐ ॥ ९ ॥**

॥ ॐ क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॐ ॥ ॥ ॐ संस्कारपरामर्शात्तदभावाभिलापाच्च ॐ ॥ ॥ ॐ तदभावनिर्धारणे च प्रवृत्तेः ॐ ॥ ॥ ॐ श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च ॐ ॥

अत्र पूर्वसिध्दान्तन्यायेन पूर्वपक्षप्रवृत्तेः आपवादिकी सङ्गतिः। शूद्रादेः ब्रह्मविद्यायामधिकारः अस्ति उत नेति सन्देहः। विशिष्टबुद्धयादिमत्वात् देवादिवत् शूद्रस्यापि अस्ति वेदविद्यायामधिकारः इति पूर्वः पक्षः। न च "उपनयीत तमध्यापयीत" इत्युपनीतस्यैव अध्ययनविधानात् शूद्रस्य च अनुपनीततया अध्ययनहीनत्वात् तद्वतएव "अध्ययनमात्रवतः" (व. सू. ३-४-१२) इति तृतीये अधिकारत्वोक्तेः उक्तं न युक्तमिति वाच्यम्। वैदिक संवर्गविद्याश्रोतारं पौत्रायणं प्रति "अह हारे त्वा शूदे"ति (छां. ४-२-३) वर्णावरे रूढ शूद्रपदेन रैक्वस्य संबोधनेन विदुरादेः वेदार्थावधारणादिरूपेण च लिङ्गेन, शूद्रेपि उपनयनाध्ययनयोर्वा, अनुपनीतस्यैवाध्ययनमिति वा, अनधीयानस्य लिखितनिरीक्षणादिनैव वा, अर्थज्ञानस्य कल्पनादिति ॥ सिद्धान्तस्तु ॥ "अयमश्वतरीरथः" इति वाक्यशेषोक्तरथवत्त्वस्य “यत्र वेदो रथस्तत्र न वेदो यत्र नो रथः" इति स्मृत्या (ब्रह्मवैवर्त पु.) रथस्य वेदव्याप्तत्वेन शूद्रे तदभावेन अभावात् क्षत्रिये तस्य स्वाभाविकत्वाच्च। तेन पौत्रायणस्य क्षत्रियत्वावगमेन बाधकेन शूद्रशब्दस्य स्वार्थस्य त्याज्यतया हंसकृ-

तानादरेण जातशोकेन मुनिं प्रति आद्रवणस्य वाक्यशेषे श्रवणेन शुचा द्रवणरूपयोगेन उपपत्त्या शूद्राधिकारासाधकत्वात् नास्ति शूद्रस्याधिकारः । अध्ययनस्य उपनयनसापेक्षत्वात् शूद्रस्य च "नाग्निर्न यज्ञो न व्रतानि च शूद्रस्य" इति श्रुत्या (पैङ्गि श्रु.) उपनयनसंस्काराभावाच्च । "तदब्राह्मणो विवक्तुमर्हति" (छां. ४-५-५) इति सत्यकामस्य अशूद्रत्वं निर्धार्यैव तदुपनयने गौतमस्य प्रवृत्तत्वेन तद्रूपाल्लिङ्गात् । "श्रवणे त्रपुजतुभ्यां श्रोत्रपरिपूरणं अध्ययने जिह्वाच्छेदः अर्थावधारणे हृदयविदारणम्" (गौतमधर्मसूत्र) इति शूद्रस्य वेदश्रवणादेनिषिद्धतया विशिष्टबुद्ध्यादिमत्वे सति अनिषिद्धत्वरूपस्य अधिकारप्रयोजकस्याभावात् । लिखितनिरीक्षणेनापि अर्थावधारणायोगात् । विदुरादेजन्मान्तरोत्पन्नज्ञानत्वेन इतरशूद्रवैलक्षण्याच्च नास्ति शूद्रे वेदविद्याधिकार इति ॥ फलं तु शूद्रस्य देवादिवत् विशिष्टबुद्ध्यादिन्यायेन अधिकारे सति तन्निषेधकश्रुत्यादिविरोधप्राप्त्या मनुष्याधिकारित्वं शास्त्रस्य सामान्यतः उक्तं तत्प्रमाणविरुध्दमिति पूर्वपक्षे सिध्दान्ते सामान्योक्तेः शूद्रेतरविषयत्वान्न विरोधः ॥ ९ ॥

**॥ ॐ कम्पनात् ॐ ॥ १० ॥**

अत्र वज्रशब्दस्य पूर्वत्र शूद्रशब्दस्येव वाक्यशेषे क्लृप्तयोगाभावात् योगवृत्त्या न विष्णुवाचित्वमिति शङ्कनात्प्रत्युदाहरणसङ्गतिः । "यदिदं किञ्च जगत्सर्व प्राण एजति निःसृतम् । महद्भयं वज्रमुद्यतं य एतद्विदः अमृतास्ते भवन्ति ।" इति (का. २-३-२) काठके श्रुतो वज्रः किं इन्द्रायुधं उत विष्णुरिति सन्देहः ।

इन्द्रायुधमिति पूर्वः पक्षः ॥ वज्रशब्दस्य तत्र रूढत्वात्। वाक्यशेषे पूर्वत्रेव विष्णौ क्लृप्तयोगाभावात् "वर्जनाद्वज्र". मिति (ब्र. वै. पु.) स्मृतेश्च वज्रश्रुतितः दुर्बलत्वात्। क्लृप्तरूढित्यागेन यौगिकतया विष्णुग्रहणे च अर्थान्तरेपि योगस्य सुवचत्वेन शब्दार्थाव्यवस्थाप्रसङ्गाच्च उद्यतत्वलिङ्गाच तस्य च "उद्यतायुधदोर्दण्डाः" (महाभारत) इत्यादि स्मृतौ "तेनेन्द्रो वज्रमुदयच्छत्" इति श्रुतौ च आयुधे प्रसिद्धत्वात् श्रुतिलिङ्गाभ्यां च मुक्तिहेतुवेदनत्वादि ब्रह्मलिङ्गानां बाधादिति ॥ सिद्धान्तस्तु ॥ "जगत्सर्वं प्राण एजति"-प्राणनिमित्तं कम्पते-इति श्रुतसर्वचेष्टकत्वस्य "को ह्येवान्यात्कः प्राण्यात्" (ते. २-७) इत्यादि श्रुतिस्मृतिभिः विष्णोरन्यत्रानवकाशात्। वज्रश्रुतेश्च श्रुत्युपबृह्मकस्मृत्युक्तेन निरवकाशयोगेन "आयुधानामहं वज्रं" इति (भ.गी. १०-२८) प्रयोगाच्च विष्णौ सावकाशत्वात्। योगस्य स्मार्तत्वादेव अव्यवस्थानापत्तेः। उद्यतत्वलिङ्गस्य च उत्पूर्वस्य यते रूपतया उत्कृष्टप्रयत्नवत्वरूपतया विष्णावपि सम्भवात् इदं वज्रं विष्णुरेवेति ॥ फलं तु विष्णोः मुक्तिहेतुवेदनत्वाक्षेपः तत्समाधिश्च ॥ १० ॥

**॥ ॐ ज्योतिर्दर्शनात् ॐ ॥ ११ ॥**

अत्र पूर्वत्रेव निरवकाशलिङ्गात् ज्योतिःशब्दस्य "विष्णुरेव ज्योति"रिति श्रुतिप्रसिध्दार्थत्यागेन पूर्वपक्षप्रवृत्तेः आपवादिकी सङ्गतिः। काण्वश्रुतौ पठेऽध्याये "योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः" इति (वृ. ६-३-७) श्रुतं ज्योतिः किं जीवः उत ब्रह्मेति सन्देहः। जीव इति पूर्वः पक्षः। "स समानस्सन् उभौ

लोकावनुसञ्चरति" (बृ. ६-३-७) "सवाऽयं पुरुषो जायमानः शरीरमभिसम्पद्यमानः पाप्मभिः संसृज्यते। स उत्क्रामन् म्रियमाणः पाप्मनो विजहाती ति (बृ. ६-३-८) कर्मायत्तलोकसञ्चरणादि जीवलिङ्गबाहुल्यात्। किञ्च किं ज्योतिरयं पुरुषः इति प्रश्ने (बृ. ६-३-२) "आदित्येनैव ज्योतिषाऽऽस्ते" इत्यादिना आदित्यचन्द्राग्निवागात्मसु पूर्वपूर्वास्तमये उत्तरोत्तरस्य ज्ञानहेतुत्वरूपज्योतिष्ट्वमुक्त्वा "कतम आत्मा" इति प्रश्ने (बृ. ६-३-७) योयमित्यस्योक्तत्वात् आदित्यादिज्योतिष्ट्वेनोक्तस्य च न तत्र सूर्यो भातीत्यादेः विष्णुत्वायोगेन जीवत्वावश्यं भावाच्च। आत्मशब्देन परमात्मग्रहणे सति अस्तमयादिहीनात्मज्योतिष्ट्वस्य जीवे सार्वकालिकत्वेन आदित्येनैव ज्योतिषेत्यादौ अवधारणायोगादिति ॥ सिद्धान्तस्तु ॥" विष्णुरेव ज्योतिः विष्णुरेव ब्रह्म" (चतुर्वेदशिखा) इति श्रुत्या ज्योतिःशब्दस्य विष्ण्वेकवाचित्वात्तस्य हृद्यन्तर्ज्योतिरिति उपक्रमे "अत्रायं पुरुषः स्वयं ज्योति" रिति (बृ. ६-३-९) उपसंहारे च श्रुतत्वेन ताभ्यां विष्णुपरत्वेन निर्णीतवाक्यमध्यपतितत्वेन जीवलिङ्गानां अन्तर्णीतण्यर्थकत्वकल्पनया हरौ सावकाशत्वात् लोकद्वयसञ्चारस्य जीवमादाय ईशस्यैव स्वातन्त्र्येणोपपत्तेः आत्मशब्दितेशस्य ज्योतिष्ट्वेपि जीवस्य बाह्यज्योतिप्राधान्यज्ञापनाय आदित्येनैवेत्यवधारणोपपत्तेः विष्णुरेवेदं ज्योतिरिति ॥ फलं तु हृदयाहितत्वमुखेन ज्योतिश्चरणेति सूत्राक्षेपः समाधिश्चेति ॥

**॥ ॐ आकाशः अर्थान्तरत्वादिव्यपदेशात् ॐ ॥ १२ ॥**

अत्र “बहिः कुलायादमृतश्चरित्वे” ति (बृ. ६-३-१२) पूर्व-ज्योतिषि श्रुतामृतत्वस्य इहाकाशे “तदमृत”मिति श्रवणात् तस्य च अन्यत्वात् पूर्वोक्तमपि आदित्याक्षेपात् आक्षेपिकी सङ्गतिः । छान्दोग्ये “आकाशे वै नामरूपयोर्निर्वहिता ते यदन्तरा तदमृतम्” इत्यन्तिमखण्डे (छा. ८-१४-१) श्रुताकाशः किं प्रसिध्दाव्याकृताकाशः किं वा ब्रह्मेति सन्देहः । पूर्वपक्षस्तु वै नामेति निपातद्वयस्य प्रसिध्दार्थत्वात् तस्य च "आकाशो वे नाम" प्रसिद्धः खल्वाकाशः "नामरूपयोर्निर्वहिते ति उद्देशान्वये आकाशो नामरूपयोनिर्वहिता वै नाम तस्य नामरूपनिर्वहितृत्वं प्रसिद्धमिति विधेयान्वये वा द्वेधापि स्वरूपेण नामरूपावकाशदानात् तन्निर्वाहकतया च लोके अवकाश एव प्रसिद्धेः ईशे अप्रसिद्धेः अवकाश एव अयमाकाश इति ॥ सिद्धान्तस्तु ॥ "ते यदन्तरा" इति वाक्ये ते नामरूपे विना यदस्तीत्युक्तस्य कात्स्न्यैन शब्दागोचरत्वादिरूपनामत्वस्य तथा निर्वाह्यतया प्रकृतप्राकृतरूपराहित्यस्य च लिङ्गस्य "यतो वाचो निवर्तन्ते" (ते. २-४) "अरूपमस्पर्श" (का. ३-१५) इत्यादि श्रुतिभिः "अनामा सोऽप्रसिध्दत्वात् अरूपो भूतवर्जनात्" (ब्राह्म पु.) इत्यादिस्मृत्या च विष्ण्वेकधर्मत्वात् तब्रह्मेत्युक्तब्रह्मशब्दात् तदमृतमित्युक्तामृतत्वलिङ्गाच्च साधकसत्त्वात् प्रसिध्दार्थकनिपातद्वयस्य च "आकाश इति होवाच" इति श्रुतौ (छां. १-९-१) स्वरूपेण "एकोदाधार भुवनानि विश्वे"त्यादि श्रुतौ (ऋ. सं. १-१५४-४) नामरूपनिर्वहितृत्वेन च विष्णौ प्रसिद्धत्वात् वेदप्रसिद्धेः अन्तरङ्गतया वेदे

ग्राह्यत्वेनाबाधकत्वात् अयमाकाशो विष्णुरेवेति ॥ फलं तु नाम-रूपनिर्वोढुत्वाख्यसाधारत्वमुखेन द्युभ्वादिनयाक्षेपः तत्समाधि-श्च ॥ तल्लिङ्गादित्यत्र अनवकाशलिङ्गेन लोकरूढित्यागोक्ताव-पीह चै नामेत्याभ्यां विशेषाशङ्कया पुनरारम्भः ॥ १२ ॥

**॥ ॐ सुषुप्त्युत्क्रान्त्योर्भेदेन ॐ ॥ १३ ॥**

अत्र प्रागाकाशशब्दस्य श्रौतप्रसिद्धया ईशे सम्भवेपि इह त-दभावात् स्वप्नद्रष्टुत्वं युक्तमिति वा आकाशस्य जडत्वेन तत्र ई-शलिङ्गस्य ईशभेदेनायोगेपि इह जीवस्य ईशभेदेन तल्लिङ्गं नेतुं शक्यते इति वा पूर्ववैषम्येण शङ्कनात्सङ्गतिः । काण्वश्रुतौ अ-ष्टमेऽध्याये "स वा एष एतस्मिन् सम्प्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्या द्रवति स्वप्नायैव स यत्तत्र किञ्चित्पश्यति अनन्वागतस्तेन भवत्यसङ्गोह्ययं पुरुषः" इति (बृ. ६-३-१५) श्रुतस्वप्नादिद्रष्टा किं जीवः अथ ईश इति स-न्देहः । श्रुतस्वमादि द्रष्टत्वस्य लोके जीव एव प्रसिद्धत्वात् जीव इति पूर्वः पक्षः ॥ श्रौतप्रसिद्ध्यभावे लोकप्रसिद्धेरपि वेदे ग्राह्य-त्वात् ईशस्याशरीरत्वेन स्वप्नादिद्रष्टुत्वायोगाच्च असङ्गत्वरूपब्र-ह्मलिङ्गस्य ईशाभेदेन जीवचैतन्येपि युक्तत्वात् । जीवधर्मस्य तु स्वमादिद्रष्टुत्वस्य शुद्धे ब्रह्मचैतन्ये अयोगात् । जिज्ञासासूत्रे जी-वेशभेदस्योक्ततया तदभेदाभिप्राये तद्धर्मस्येशे सिध्दान्तिना व-क्तुमशक्यत्वाचेति ॥ सिद्धान्तस्तु ॥ असङ्गोह्ययमिति श्रुतास-ङ्गत्वस्य असङ्गमस्पर्शमित्यादिना ईशैकधर्मत्वात् स्वप्नादिपदा-र्थानां "सन्ध्ये सृष्टिराह ही"ति (ब्र. सू. ३-१-१) वक्ष्यमाणन्या-

येन सत्यत्वेन “यस्सर्वज्ञः” इत्यादिश्रुत्या (आथ. १.९) ईशस्य सर्वज्ञतया च कात्स्न्र्येन स्वप्नादिद्रष्टृत्वस्य ईशे मुख्यतः सम्भवात्। “प्राज्ञेनात्मना सम्परिष्वक्तः" (बृ. ६-३-२१) "प्राज्ञेनात्मना अन्वारूढ" (बृ. ६-३-३५) इति सुषुप्त्युत्क्रान्तिप्रकरणयोः भेदोक्त्या जीवेशाभेदाश्रयणायोगात्। "स्वाप्ययसम्पत्त्यो". रित्यत्र (ब्र.सू. ४-४-१६) सुषुप्तिप्रकरणस्य मुक्तिपरस्याप्युक्त्या भेदस्य मुक्तिगत्वेन सत्यत्वाच्च स्वप्नादिद्रष्टा विष्णुरेवेति अक्षरनयोक्त असङ्गत्वाक्षेपः तत्समाधिश्च ॥ १३ ॥

**॥ ॐ पत्यादिशब्देभ्यः ॐ ॥ १४ ॥**

अत्र "असङ्गो नहि सजते" (बृ. ६-४-२२) इत्युक्तस्यासङ्गस्य ईशान्यत्वे प्राक्तनः स एवेति शङ्कनात् आक्षेपिकी सङ्गतिः। काण्वश्रुतौ षष्टेऽध्याये "एष नित्यो महिमा ब्राह्मणस्ये"ति (बृ. ६-४-२२) श्रुतः ब्राह्मणः किं विरिञ्चः किं वा ईश इति सन्देहः। विरिञ्च एवायं ब्राह्मणः इति पूर्वः पक्षः ॥ “स वा एष महानज आत्मा" (बृ. ६-४-२२) इत्यजशब्दात् तस्य च अकारवाच्येशजातत्वेन योगेन रूढ्या च विरिञ्चे सम्भवात् ईशेन जायत इति योगेन "तस्मादहमजः स्मृत" इति भारतोक्त्या रूढ्या च सम्भवेपि वर्णहीने विष्णावनवकाशेन विप्रत्वजाती निरूढब्राह्मणशब्दसाहित्येन अस्य विरिञ्चैकप्रापकत्वात् महच्छब्दस्यापि अभिमानिनयन्यायेन महत्तत्वाभिमानिनि विरिञ्च एव युक्तत्वात् आत्मश्रुतेरपि “आत्माविरिञ्चः सुमना" इत्युक्तेः “बुद्धेरात्मा महान् परः" इति प्रयोगात् विरिञ्चे रूढत्वात्। सर्ववशीत्यादि-

नोक्त ब्रह्मलिङ्गानां तु उभयवाधेन विरिञ्चेशाभेदेन पूर्वपूर्वपक्षव-दुपपत्तेः। "स्थित्यादये हरिविरिञ्चहरेति संज्ञाः" (भाग. १-२-२३) इत्यादेः अभेदेनैकवाक्यत्वोपपत्तौ वाक्यभेदेनोभयपरत्वक-ल्पनायोगाच्च। सिद्धान्तस्तु ॥ "सर्वस्य वशी सर्वस्येशानः स-र्वस्याधिपतिः" इत्यादिनोक्त सर्ववशित्वादिलिङ्गानां "उतामृत-त्वस्येशानः" (पुरुष सू.) "सप्तार्धगर्भा" (ऋ. १-१६४-३६) इत्या-दिश्रुतिभ्यो वैष्णवत्वात्। ब्राह्मणशब्दस्थ ब्रह्मणा वेदेन अण्यते गम्यते इति योगेन सावकाशत्वात् अजश्रुतेः तथैव सावकाश-त्वात् उभयबाधेन अभेदाङ्गीकारस्य अतिप्रसञ्जकतया "तत एते व्यजायन्त विश्वो हिरण्यगर्भः" इत्यादिवचनबाधिततया च अ-योगात्। स्मृतेः तत्तदन्तगतेश्वररूपापेक्षया उपपत्तेः अयं ब्रा-ह्मणो विष्णुरेवेति ॥ फलं तु जिज्ञासादिसूत्रेषु विष्णोः विवक्षितं नित्यमहिमत्वमयुक्तं इत्याक्षेपः तत्समाधिश्चेति ॥ १४ ॥

इति श्रीराघवेन्द्रयतिकृतायां न्यायमुक्तावल्यां आद्येऽध्याये तृतीयः पादः समाप्तः ॥

## अथ चतुर्थः पादः

एवं त्रिपाद्यां कारणत्व तत्सङ्गतानन्दमयत्वादिगुणान्तरबोधक-वाक्यस्थ शब्दसमन्वयेऽभिहिते अत्र ब्रह्मपदोक्त गुणपूर्तिसि-द्धये अवसरप्राप्तानां अन्यत्रैव प्रसिद्धनामलिङ्गात्मकशब्दानां स-मन्वय उच्यते ॥



**॥ ॐ आनुमानिकमप्येकेषामिति चेन्न**

**शरीररूपकविन्यस्तग्रहीतेर्दर्शयति च ॐ ॥ १ ॥**

॥ ॐ सूक्ष्मं तु तदर्हत्वात् ॐ ॥ ॥ ॐ तदधीनत्वादर्थवत् ॐ ॥ ॥ ॐ ज्ञेयत्वावचनाच्च ॐ ॥ ॥ ॐ वदतीति चेस प्राज्ञो हि ॐ ॥ ॥ ॐ प्रकरणात् ॐ ॥ ॥ ॐ त्रयाण व चैवमुपन्यासः प्रश्नश्च ॐ ॥ ॥ ॐ महद्वच्च ॐ ॥ ॥ ॐ चमस वदविशेषात् ॐ ॥

अत्र अव्यक्तादिपरावधित्व अवरत्वादि वाचिशब्दवाच्यत्वे प्राक हेतूकृत सर्वेश्वरत्वादिविरोध इत्याशङ्कनात् पूर्वसङ्गतिः ध्येया। "महतः परमव्यक्तं अव्यक्तात्पुरुषः परः" (का. १-३-११) "जीवा एव तु दुःखिनः" "योनिमन्ये प्रपद्यन्ते" (का. २-२-७) "कार्यकारणबद्धौ तौ" (मां. २-११) इत्यादौ श्रुताव्यक्तदुःखिबद्ध अवरादिशब्दमुख्यार्थः किं प्रकृत जीवादिः उत ईशः इति सन्देहः ॥ पूर्वपक्षस्तु ॥ प्रकृत्यादिरेव न ब्रह्म अव्यक्तादिशब्दानां तत्रैव प्रसिद्धेः विष्णुवाचित्वे मानाभावात् तेषां प्रधानाधवाचकत्वेपि तत्र व्यवहारे अविशेषेण सर्वशब्दानां सर्वत्र व्यवहारापातेन अव्यवस्थाप्रसङ्गाच्च। अव्यक्ते पञ्चम्युक्तेन परावधित्वेनाक्षिप्तावरत्वस्य जीवे ज्ञातदुःखित्वादेश्च “न त्वत्समश्चाभ्यधिकश्च दृश्यते" (भ. गी. ११-४३) "निरनिष्ठो निरवद्यः" इत्यादिप्रमाणविरोधेन प्रागुक्तसर्वाधिपतित्वादिविरोधेन च विष्णावयोगाच्च। "महान्तं च समावृत्य प्रधानं समवस्थितं" इत्यादेः प्रधानधर्मत्वेन निर्णीत महत्वपरत्वलिङ्गस्य अव्यक्ते श्रवणाच्चेति ॥ सिद्धान्तस्तु ॥ “नामानि सर्वाणि यमाविशन्ति” (भा-

ल्ववेय श्रुतिः ) इत्यादिश्रुत्या विष्णोः अव्यक्तादिसर्वशब्दवाच्य-त्वात् अव्यक्तमचलं शान्तं (पिप्प.श्रु.) अनेन जीवेनात्मना (छां. ६-११-१) इत्यादि श्रौतस्मार्तप्रयोगात्। सूक्ष्मत्वेनाव्यक्तत्वस्य प्राणाधारकत्वादेश्च अव्यक्तादिपदप्रवृत्तिनिमित्तस्य “यत्तत्सूक्ष्मं परमं वेदितव्यं” (पिप्प.श्रु.) इत्यादिना ईशे मुख्यत्वेन तेषां तत्र मुख्यत्वात्। महच्चमसशब्दयोः महत्तत्वयज्ञपात्रयोः प्रसिध्द-त्वेपि “महान्तं विभुमात्मानं” (का. १-२-२२) “इदं तच्छिरः एष ह्यर्वाग्बिलश्चमसः” (बृ. ४-२ -३) इत्यादौ प्रवृत्तिनिमित्त-मुख्यत्वादिना विष्णुशिरसः मुख्यत्वमिव अव्यक्तादिशब्दानाम् अन्यत्र प्रसिध्दत्वेपि ईशे मुख्यत्वेनोपपत्तेः । “तमेवैकं जानीथ आत्मानम् अन्यावाचोविमुञ्चथे” ति (आथ. २-२-५ ) ईशस्यैव मुमुक्षुज्ञेयत्ववचनेन अन्यस्य तदवचनेन ईशज्ञान एव वेदस्य प्र-वृत्तत्वात् अवरत्वदुःखादेः ईशे योगेपि अन्यगतस्य ईशाधीन-त्वेन स्वातन्त्र्येण निमित्तेन ईशे परावधित्ववाचि पञ्चम्यन्तपद-दुःख्यादिपदवाच्यत्वोपपत्तेः । सर्वस्मात्परे महत्परत्वस्यापि स-म्भवाच्च अव्यक्तादिशब्दमुख्यार्थो हरिरेवेति । फलं तु समन्वय-सूत्रोक्तसर्वशब्दसमन्वयाक्षेपः तत्समाधिश्च ॥ ... ॥

**॥ ॐ ज्योतिरूपक्रमात्तु तथाह्यधीयत एके ॐ ॥ २ ॥**

॥ ॐ कल्पनोपदेशाच्च मध्वादिवदविरोधः ॐ ॥

पूर्वत्र सिध्दरूपदेवतात्क्रमवाचिनां इन्द्रियेभ्य इत्यादीनां समन्वय उक्तः । अत्र तु साध्यरूपकर्मतत्क्रमवाचिनां स उ-च्यत इति पूर्वसङ्गतिः । “वसन्ते वसन्ते ज्योतिषे” ति वाक्ये

श्रुतज्योतिरादिशब्दाः किं विष्णुवाचिनः किं वा तदन्यकर्मादि-वाचिन इति सन्देहः । कर्मादिवाचिन इति पूर्वः पक्षः ॥ तेषां ज्योतिष्टोमादिकर्मादिष्वेव प्रसिद्धेः । प्रसिद्धित्यागेन ब्रह्मवाचित्वे च अन्यस्य कर्मतदङ्गक्रमदेवता कालाधिकार्यादिप्रापकस्याभा-वेन नियतकर्मानुष्ठानलोपः स्यात् । ज्योतिः पदवाच्येशसम्ब-न्धात् कर्मादावपि तेषां पूर्वत्रेव वृत्तिरित्यस्यापि ईशादन्यत्र ल-क्षणाप्रसङ्गेनायोगात् । किं चेशे तेषां रूढेरभावेन गुणपूभावा-पातेन च योगस्यैव वाच्यत्वेन ततोपि कर्मणि रूढेर्बलवत्वात् । सर्वशब्दवाच्यत्वसिद्ध्यर्थं ज्योतिरादिपदावयवानामपि ब्रह्मपर-त्वे समुदायस्य तत्परत्वायोगेन योगस्यासम्भवाच्चेति ॥ सिद्धा-न्तस्तु ॥ "तं यच्छतं वर्षाण्यभ्यार्चत्" "तस्माच्छतर्चिनस्तस्मा-च्छतचिन इत्याचक्षत एतमेव सन्तमि"त्यादिना (ऐ. २-२-१) उ-पलक्षणत्वेन केषाञ्चिच्छतर्च्यादिशब्दानां महायोगविद्वद्रूढिभ्यां विष्णुपरत्वमुक्त्वा अन्ते "तावा एतास्सर्वा ऋचः सर्वे वेदाः स-र्वे घोषाः एकैव व्याहृतिः प्राण एवे"ति (ऐ. २-२-२) विष्णौ स-र्वशब्दमुख्यार्थत्वोक्तेः मध्वादिशब्दस्य क्षौद्रकादौ रूढिमनति-हाय तदबाधेन " असौ वादित्यो देव मधु" (छां. ३-१-१) इत्यादौ महायोगवृत्त्या उपासनार्थं मध्वादिशब्दार्थस्योक्तिवत् ज्योतिरा-दिपदानां अन्यत्ररूढिवृत्तिमबाधित्वैव महायोगादिवृत्त्या ईशप-रत्वाङ्गीकारेण कांद्यसिद्ध्यभावात् । तदवयवानामन्यवाचित्वमु-पेत्यैव समुदायस्य ईशपरत्वोपगमेन जातमोतं जगद्यस्माज्ज्यो-तिरित्याद्युक्तयोगासम्भवात् ज्योतिरादिशब्दमुख्यार्थो हरिरेवेति

फलं तु पूर्ववदेव ॥ २ ॥

**॥ ॐ न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॐ ॥ ३ ॥**

॥ ॐ प्राणादयो वाक्यशेषात् ॐ ॥ ॥ ॐ ज्योतिषैकेषामसत्यन्ने ॐ ॥

पूर्वत्र प्रसिद्धस्य ज्योतिरादिशब्दनिमित्तस्याभावेपि योगलभ्यं अप्रसिद्धं तदस्तीत्युक्तम्। इह तु पञ्चजनादिशब्दानां प्रसिद्ध तदीशेऽस्तीत्युच्यत इति सङ्गतिः। काण्वश्रुतौ षष्टेऽध्याये तो ज्योतिषां ज्योतिरायुहोपासतेऽमृतम्। यस्मिन्पञ्चपञ्चजनाः आकाशश्च प्रतिष्ठितः। तमेव मन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतम" (बृ. ६-४-१६, १७) इति श्रुतपञ्चत्वयुक्तः जनादिशब्दमुख्यार्थः किं वाक्यशेषे षष्टयन्तेन प्राण चक्षुःश्रोत्रमनोवाचादि शब्देनोक्ता किं वा द्वितीयान्त तत्तच्छब्दनिर्दिष्टेशस्वरूपाणीति सन्देहः। विष्ण्वन्ये प्राणादय एव पञ्चजनादिशब्दार्थः इति पूर्वः पक्षः॥ तस्य बहुत्वविशिष्टार्थवाचित्वात्। तस्य चैकमेवाद्वितीयमित्युक्तिविरोधेन ईशेऽयोगात्। वशीकृतबहुजनेपि राजनि बहुत्ववाचिशब्दादर्शनेन तदधीनत्वन्यायस्यापि अत्र अनवतारात्। गुहामित्यत्र गुहानिविष्टत्वादिबाधकेन एकस्यानेकत्वं नेत्युत्सर्गबाधेपि इह बाधकाभावेन तन्न्यायस्याप्यनवकाशात्। तमेवात्मानमित्यात्मपदसामानधिकरण्यात्। यस्मिन्नित्यस्य ब्रह्मत्वेन तदाश्रितानां पञ्चानां जनानां आकाशस्य ब्रह्मत्वे एकस्याधाराधेयभावानुपपत्तेश्चेति ॥ सिद्धान्तस्तु ॥ “प्राणस्य प्राणं चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रं अन्नस्यान्नं मनसो

मनः" इति वाक्यशेषे द्वितीयान्ततया श्रुतानां प्राणादिनियन्तृत्वादिविष्णुलिङ्गस्य श्रवणेन विष्णुरूपत्वात् तेषां च षष्ट्यन्तनिर्दिष्टप्राणाद्यपेक्षया शब्दतोऽर्थतश्च प्राधान्यात्। " नामानि सर्वाणि" " तावा एता" इत्याद्युक्तसर्वशब्दवाच्यत्वमुमुक्षुज्ञेयत्वादिप्रागुक्तहेतुभ्यश्च एकस्यापि बहुरूपत्वेन पञ्चत्वसङ्ख्यायाः भेदप्रतिनिधिविशेषवलेन यस्मिन्निति निर्दिष्टशरीरस्वरूपस्य पञ्चजनादिशब्दितरूपाणां च आधाराधेयभावस्यापि सम्भवात्। माध्यन्दिनशाखायामिव काण्वश्रुतौ वाक्यशेषे अन्नाख्यरूपस्याश्रवणेपि पूर्वश्रुत ज्योतिषा सह पञ्चत्वात् वाक्यशेषस्थ द्वितीयान्तप्राणादिशब्दित ईशरूपविशेषा एव पञ्चजना इति ॥ अत्र पादे सर्वत्र पूर्ववदेव फलम् ॥ ३ ॥

**॥ ॐ कारणत्वेन च आकाशादिषु यथा व्यपदिष्टोक्तेः ॐ ॥४ ॥**

अत्र कालस्सदास्तीत्यादौ दर्शनादेकस्याधाराधेयभाव सम्भवेऽपि कार्यकारणभावस्य क्वाप्यदर्शनादयुक्तः इति पूर्ववैषम्यशङ्कनात्सङ्गतिः। तैत्तिरीये ब्रह्मवल्ल्याम् "आत्मन आकाशस्सम्भूतः आकाशाद्वायुः" (तै. २-३) इत्यादि वाक्ये कार्यत्वेन कारणत्वेन श्रुताकाशादिशब्दाः किं मुख्यतो विष्णुवाचका उत भूतादिवाचका इति सन्देहः। पूर्वपक्षस्तु ॥ "न जायते म्रियते" (का. १-२-१७) इत्यादेः अकार्यै ब्रह्मणि कार्यत्वविरोधेन स्वकार्यत्वस्य सुतरां विरुद्धत्वात् व्यङ्ग्यव्यञ्जकभावरूपस्यापि कार्यकारणभावस्य एकस्मिन् विरोधात्। सुतजनेः जनकाधीनत्वेऽपि तत्र जातपद् अदर्शनेन तदधीन न्यायस्यापि अवानवतारात्।

नामानि सर्वाणीति श्रुतेरपि सङ्कोचावश्ये भावात् आकाशादिज-न्मासिद्ध्यापाताच्च आकाशादिशब्दाः अन्यवाचका एवेति ॥ सि-द्धान्तस्तु ॥ विष्णोरेवाकाशादिनियामकरूपाणां "य आकाशे तिष्ठन्" (बृ. ५-७-१२) इत्यादि श्रुत्या आकाशादिस्थानां बहु-त्वेन व्यक्त्यव्यक्त्यपेक्षया पौर्वापर्ययोगेन वाय्वाद्युत्पत्तौ तत्स्थ-रूपस्य व्यक्त्येव, व्यङ्ग्यव्यञ्जकभावरूपकार्यकारणभावस्य सम्भ-वात्। बाधकाभावेन नामानीत्यादि श्रुतेः सङ्कोचायोगेन प्रागु-क्तसाधकानां सत्त्वात्। ज्योतिर्नयोक्तरीत्या अन्यत्र रूढेरभ्युप-गतत्वेन आकाशाद्युत्पत्यसिद्ध्यभावाच्च आकाशादिशब्दमुख्या-र्थो हरिरेवेति ॥ ४ ॥

**॥ ॐ समाकर्षात् ॐ ॥ ५ ॥**

॥ ॐ जगद्वाचित्वा ॐ ॥ ॥ ॐ जीवमुख्यप्राणलिङ्गादिति चेत्तद्व्याख्यातम् ॐ ॥ ॥ ॐ अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॐ ॥ ॥ ॐ वाक्यान्वयात् ॐ ॥ ॥ ॐ प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॐ ॥ ॥ ॐ उत्क्रमिष्यत एवं भावादित्यौडुलोमिः ॐ ॥ ॥ ॐ अवस्थितेरिति काशकृत्स्नः ॐ ॥

अत्र आकाशादिशब्दानाम् अन्यत्रापि रूढ्यङ्गीकृतौ ईशे त-दन्यत्र च अक्षादिशब्दवत्तुल्या मुख्यवृत्तिः स्यादिति शङ्कनात्स-ङ्गतिः। सर्वशब्दानाम् ईशे तदन्यत्र च उक्ता मुख्यता किं तुल्या किं वा ईशे अधिका अन्यत्र तु हीनेति सन्देहः। पुर्वपक्षस्तु ॥ अक्षादिशब्दानाम् अनेकार्थवाचिनाम् अनेकत्रेव सर्वशब्दाना-

मीशे तदन्यत्र च मुख्यत्वं तुल्यमेव स्यात्। अन्यथा अन्यत्र हीनत्वे लक्षणेत्यस्यैव मुख्यवृत्तिरिति परिभाषा स्यात्। ईशे मुख्यत्वस्याधिक्ये तत्रैव प्रसिद्ध्यापातेन जगति प्रसिद्धिर्न स्यात्। ईशज्ञानादेव पुरुषार्थसिद्ध्या कर्मदेवतादौ शब्दानां हीनवृत्या व्यवहारस्य फलान्तरानिच्छुं मुमुक्षुं प्रति व्यर्थत्वापाताच्च किञ्च शब्दवृत्तिहेतोः ईशगतत्वापेक्षया तत्राधिक्यमिति न युक्तम्। अन्यत्रापि सत्त्वात्। नापि तदधीनत्व न्यायेन "अस्य यदेकां शाखां जीवो जहात्यथ सा शुष्यति" इति (छा. ६-११-२) क्वाचिज्जीवाधीनत्वस्य "वायुना हि सर्वे लोका नेनीयन्ते" () इति सर्वस्य वाय्वधीनत्वप्रतीत्या तयोरपि ईशवन्मुख्यवाच्यत्वापातादिति ॥ सिद्धान्तसु ॥ ब्रह्मणि अन्यतोऽधिकैव शब्दानां मुख्यतया अन्यत्र हीनैव रूढियोगयोरिव गौणलक्षणयोरिव ईशे अन्यत्र च रूढिसत्त्वेऽपि विद्वदविद्वद्रूढिभ्यां यौगिकत्वेऽपि योगमहायोगाभ्यां तारतम्यसम्भवेन महायोगविद्वद्रूढिभ्यां परममुख्यवृत्त्या विष्णुनिष्ठानामेव तेषाम् अन्यत्र ततः समाकृष्य मुख्यवृत्त्या व्यवहारात्। बालानां चित्रलिखितसिंहादाविव लोकानामन्यत्रैव शब्दव्यवहारेण अन्यत्रप्रसिद्ध्युपपत्तेः। कर्मदेवताधारत्वादिना ईशज्ञानार्थमेव कर्मादौ वेदव्यवहारस्य सम्भवात्। जीवादौ श्रुतस्वातन्त्र्यस्य च तदन्तर्यामिगतत्वेन पादान्त्यप्राणनये सिद्धत्वादिति ॥ फलं तु विष्णुरेव सर्वशब्दमुख्यार्थः इति समन्वयसूत्रोक्तावधारणाक्षेपः तत्समाधिश्चेति ॥ ५ ॥

**॥ ॐ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॐ ॥ ६ ॥**

॥ ॐ अभिध्योपदेशाच्च ॐ ॥ ॥ ॐ साक्षाच्चोभयाम्नानात् ॐ ॥ ॥ ॐ आत्मकृतेः परिणामात् ॐ ॥ ॥ ॐ योनिश्च हि गीयते ॐ ॥

अत्र सर्वशब्दानां विष्णावधिकावृत्तिः अन्यत्र हीनेति प्रागुक्तमयुक्तं स्त्रीलिङ्गशब्दानां मुख्यवृत्तेरेवायोगात् कुतः आधिक्यचिन्तेति शङ्कनात् सङ्गतिः । "एषाह्येव प्रकृतिरविकृति" (वत्सश्रुतिः)रित्यादि वाक्योक्तस्त्रीलिङ्गप्रकृत्यादिशब्दाः किं विष्णुवाचिनोऽन्यवाचिनो वेति सन्देहः । अन्यवाचिन इति पूर्वपक्षः । तेषाम् अन्यत्रैव प्रसिद्धत्वात् स्त्रीलिङ्गत्वाच्च । परमपुरुषे स्त्रीत्वाभावात् । "नैनं वाचा स्त्रियं ब्रुवन्" इति स्त्रीत्वनिषेधेन रूपविशेषेण स्त्रीत्वमित्यस्याप्ययोगात् । ब्रह्मादिनपुंसकशब्दस्य कलत्रादिशब्देष्विव शब्दसाधुत्वमात्रेण युक्तत्वेऽपि इह न तथा कल्पकाभावात् । नामानि सर्वाणीत्यस्य सङ्कोचसम्भवात् । वशीकृतभार्येऽपि भार्यापदप्रयोगादर्शनेन अन्यगतस्त्रीत्वस्येशाधीनत्वमुपेत्य तदधीनत्वन्यायेन ईशे तच्छब्दवृत्तिरित्यस्याप्ययोगादिति ॥ सिद्धान्तस्तु ॥ "हन्तैतमेवपुरुषं सर्वाणि नामान्यभिवदन्ती"त्यादि श्रुतौ (वत्स. श्रुतिः) सामान्यतोऽशेषशब्दवाच्यत्वम् ईशस्योक्त्वा नदीसमुद्रदृष्टान्तस्योपपादनात् । "मायां तु प्रकृतिं विन्द्यात्" (श्वे. उ. ४-१०) "प्रकृतिर्वासनेत्येवं तवेच्छानन्त्यकथ्यते" इत्यादि श्रुतिस्मृतिषु इच्छायाः प्रकृतिपदवाच्यत्वात् तस्याश्च "सोऽभिध्या स जूतिः" इत्यादिश्रुतौ ईशस्वरूपत्वोक्तेः । "एष स्त्री एष पुरुषः एष प्रकृतिः" (पैङ्गिश्रुतिः) इति

साक्षात् प्रकृतिशब्दवाच्यत्वाम्नानात्। प्रकृतिं प्रविश्य तां महदाद्यात्मना परिणाम्य तन्नियामकतया आत्मनो बहुधाकरेण प्रकृष्टाकृतिः इति योगसम्भवात् अव्यवधानेन सूतिहेतुत्वरूप स्त्रीत्वस्य यद्भूतयोनिमिति श्रुतौ योनिशब्देन गानात् प्रकृत्यादिसर्वस्त्रीलिङ्गशब्दमुख्यार्थो हरिरेवेति ॥ ६ ॥

**॥ ॐ एतेन सर्वे व्याख्याता व्याख्याताः ॐ ॥ ७ ॥**

अत्र पूर्ववैषम्येन पूर्वपक्षोत्थानात्सङ्गतिः। "असद्वा इदमग्र आसीदित्यादौ श्रुतासच्छून्यादिशब्दाः किम् ईशवादिनोऽन्यवादिनो वेति सन्देहः। पूर्वपक्षस्तु। युक्तं पूर्वोक्तरूपं स्त्रीत्वं रूपाहानेः न तु निषेध्यत्वादिरूपम् असदादिप्रवृत्तिनिमित्तं रूपहानेः। असतो निःस्वरूपस्य नियमनाभावेन तस्य ईशाधीनत्वायोगेन तदधीन न्यायस्याप्यनवतारात्। अतोऽसदादिशब्दा अन्यवाचिनः इति ॥ सिद्धान्तस्तु ॥ प्रसिद्धशून्यत्वादेः ईशगतत्वाभावेऽपि "शमूनं कुरुते" इत्यादि स्मृत्युक्तयोगसम्भवात् असतोऽप्यसत्त्वादिना नियमनसम्भवेन तदधीनत्वाद्युक्तसाधकेन च असच्छून्यादिशब्दमुख्यार्थो हरिरेवेति ॥ फलं तूक्तमेव ॥ ७ ॥

**इति श्रीराघवेन्द्रयतिना कृतायां न्यायमुक्तावल्याम्**

**आद्येऽध्याये चतुर्थः पादः।**

**॥ प्रथमाध्यायः समाप्तः ॥**

# ॥ अथ द्वितीयाध्यायः ॥

## प्रथमः पादः

॥ हरिः ॐ ॥ पूर्वोक्तसमन्वयस्य अत्र विरोधनिरासात् पूर्वाध्यायेनास्य हेतुहेतुमद्भावसङ्गतिः। युक्ति समय श्रुति युक्तियुक्तश्रुतिविरोधानां पदान्त्यादिभङ्गेन अश्वादिवत्प्रवर्तमानानां क्रमेण पादचतुष्टयेन निरासः क्रियते। चतूरूपत्वात् आद्यनये स्मृतिविरोधो निरस्यते।

**॥ ॐ स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॐ ॥ १ ॥**

॥ ॐ इतरेषां चानुपलब्धेः ॐ ॥ ॥ ॐ एतेन योगः प्रत्युक्तः ॐ ॥

प्राक् श्रुतिसमन्वयेनोक्तं विष्णोर्विश्वकर्तृत्वं युक्तं नवेति सन्देहः। न युक्तमिति पूर्वपक्षः। शिवादिकर्तृत्वबाधकस्यैव सा-

ह्यकापिलादिसर्वश्रौतस्मृतिविरोधात्। तासां च सर्वज्ञत्वादिना प्रसिद्धशिवाद्यप्रणीतत्वेन आप्तिरूपगुणयुक्तत्वेन प्राबल्यात्। श्रुतेश्च अपौरुषेयत्वेन निर्मूलतया दौर्बल्यात्। कणादादिमते श्रुतेराप्तोक्तत्वेन समूलकत्वेऽपि तत्स्मृतीनां विस्पष्टार्थत्वसयुक्तिकत्वाभ्यां प्राबल्यात्तुल्यबलत्वाभावेन विरुद्धत्वेन च वस्तुनि विकल्पस्य दुर्बलत्वे श्रुत्या बाधस्यायोगात् देशादिभेदेन अविरोधस्य च श्रुत्यादौ तत्र तत्र तस्य तस्य सर्वकर्तृत्वोक्त्या युक्तत्वात् "विरोधेत्वनपेक्ष"मिति (पू. मी. ) पूर्वतन्त्रस्य विरोधनये स्मृतीनां श्रुतिमूलत्वेन प्रामाण्यमिति पक्ष एव श्रुतिविरोधेन तासां बाधोक्तेः इह तु स्मृतीनां शिवादिप्रत्यक्षमूलत्वेन वैषम्यात्। अतः तत्तत्स्मृत्यनुरोधेन शिवादिकर्तृत्व एव श्रुतीनां नेयत्वात् बौद्धार्हतादिस्मृतिविरोधेन अप्रामाण्याद्वा इति ॥ सिद्धान्तस्तु ॥ पञ्चरात्रादिस्मृतीनां सर्वज्ञतमविष्ण्वादिप्रणीतत्वेन श्रुत्युक्तसंवादेन तत्सहायेन विस्पष्टार्थवादित्वेन च बलवत्तया तद्बाधितत्वात् शैवादिस्मृत्युक्तसाधनानुष्ठानेऽपि तत्फलत्वेनोक्तस्य प्रत्यक्षयोग्यानुपलब्ध्या फलविसंवादात् आप्तोक्तत्वस्याप्यभावेन अवैदिकस्मृतीनामप्रामाण्यात् श्रुतिसमन्वयेनोक्तं विष्णोर्विश्वकर्तृत्वं युक्तमिति। समन्वयसूत्रे उपक्रमादिभिरेव वेदार्थौ निर्णय इत्युक्तावपि अत्र तेऽपि तदनुरोधेन नेया इति शङ्कनात्पुनरारम्भः। शास्त्रयोनिनये दृष्टफलेषु प्रामाण्यम् अपस्मृतीनामुपेत्य तत्रेव विश्वकारणत्वेऽप्यस्तु प्रामाण्यमिति प्राप्ते "नावेदवि"दित्यादिना तत्र नमानत्वमित्युक्तम्। अत्र तु प्रत्यक्षफल

एव विसंवादात् अप्रामाण्यमुच्यत इति तेनास्य अगतार्थमिति ध्येयम्। फलं तु अत्राध्याये सर्वत्र जन्मादिसूत्रोक्तविश्वकर्तृत्वाक्षेपः तत्समाधिश्च ॥ १ ॥

**॥ ॐ न विलक्षणत्वादस्य तथात्वं च शब्दात् ॐ ॥ २ ॥**

॥ ॐ दृश्यते तु ॐ ॥

आत्र फलविसंवादेन अपस्मृतीनामप्रामाण्ये तत एव श्रुतिश्रौतस्मृत्योरप्रामाण्यं स्यादिति शङ्कनादापवादिकी सङ्गतिः। श्रुतिः श्रौतस्मृतिश्च किं प्रमाणमुत नेति सन्देहः। "वृष्टिकामः कारीर्यायजेते"त्याद्युक्तकारीर्याद्यनुष्ठाने वृष्ट्याद्यदृष्ट्या फलविसंवादेन अपस्मृतिवत् अपौरुषेयत्वेऽपि अप्रमाणमेव श्रुतिः अपौरुषेयत्वमेव नेति वा अत्र भवति। श्रौतस्मृतिश्चैव न मानमिति पूर्वः पक्षः ॥ सिद्धान्तस्तु ॥ "वाचा विरूपनित्यया" इत्यादिवचनेन देवतादिनये भाष्योक्तयुक्त्या च श्रुतेरपौरुषेयत्वेन श्रौतस्मृतेस्तदनुसारित्वेन च अनाशङ्कितदोषतया साक्षिवत्प्रमाणत्वात्। प्रामाण्यस्य च "न चक्षुर्न श्रोत्रमित्यादिना वेदार्थस्य चक्षुराद्ययोग्यत्वोक्त्या संवादमनपेक्ष्यतया स्वत एव ज्ञेयत्वात् फलविसंवादरूपापवादस्य अधिकारिविशेषाणां फलदर्शनेनासिद्धेः। क्वचित्फलविसंवादनिमित्तस्य च कर्त्रादि वैगुण्यनिमित्तत्वेनोपपत्तेः। अपस्मृतीनां तैः संवादेनैव तत्प्रमाण्यज्ञप्त्यङ्गीकारेण तद्वैषम्यात् प्रमाणमेव श्रुतिश्रौतस्मृतय इति ॥ २ ॥

**॥ ॐ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॐ ॥ ३ ॥**



॥ ॐ दृश्यते च ॐ ॥

पूर्वत्र विसंवादाख्ययुक्तिमात्रविरोधो निरस्तः। अत्र श्रुतेः प्रतीतार्थप्रच्युतिकारित्वेन दृढयुक्तिविरोधो निरस्यत इति सङ्गतिः। "मृदब्रवीदापोऽब्रुवन् तत्तेज ऐक्षते"त्यादि श्रुतिः प्रमाणमुत नेति सन्देहः। आदिकालीनपृथिव्यादिवक्तृत्वाद्यभिधात्री श्रुतिर्न मानमिति पूर्वः पक्षः॥ मृन्न वक्ति जडत्वान्मृत्त्वाद्वा सम्मतवदिति युक्तिविरुद्धार्थकत्वाज्जडस्य कर्मेन्द्रियहीनस्य कर्तृत्वेक्षितृत्वादेरयोगात् इदानीन्तन मृदादिकारणत्वेन अनुमितस्य वा परसिद्धमात्रस्य वा मृदादेः पक्षीकारेण युक्तेः धर्मिग्राहकमानबाधस्याप्यभावादेव वेदैकदेशस्य अमानत्वात् तत्सामान्यादितरेषु तथात्वमिति जैमिनीयन्यायेन कृत्स्नवेदस्यापि अमानत्वमिति॥ सिद्धान्तस्तु॥ प्रागुक्तदिशा नित्यत्वेन अनाशङ्कितदोषस्य वेदस्य अप्रामाण्यायोगात् जडस्य वक्तृत्वाद्ययोगाच्च वेदप्रामाण्यवक्तृत्वाद्यभिधायकत्वयोर्द्वयोः यावता विनानुपपत्तिः तावता कल्प्यत्वात् तदुभयान्यथानुपपत्या "पृथिव्याद्यभिमानिन्यो देवताः प्रथितौजसः" इत्यादि (भविष्यत्पुराण)वचनेन महतां प्रत्यक्षेण च अभिमानि चेतनस्य वक्तृत्वाद्युपयोगिविग्रहादिमत्वस्य अस्मदाद्यनुपलब्धिबाधनिरासाय अन्तर्धानशक्तिमत्वस्य इत्येवमादेः मृदादिस्थ मृत्त्वादिप्रवृत्तिनिमित्तस्य अभिमान्यधीनतया तदधीनत्वन्यायेन तच्छब्दानां तदभिमानिदेवतास्वेव मुख्यत्वाच्च मृदादिशब्दित देववक्तृत्वाद्यङ्गीकारे युक्तिविरोधाभावात् प्रमाणमेव वेदः इति॥ ३॥

**॥ ॐ असदिति चेन्न प्रतिषेधमात्रत्वात् ॐ ॥४॥**

॥ ॐ अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॐ ॥ ॥ ॐ न तु दृष्टान्तभावात् ॐ ॥ ॥ ॐ स्वपक्षदोषाच्च ॐ ॥ ॥ ॐ तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः ॐ ॥ ॥ ॐ एतेन शिष्टा अपरिग्रहा अपि व्याख्याताः ॐ ॥

अत्र श्रुत्यसहित युक्त्यविरोधाय मृदादिशब्दानाम् अन्यार्थतायां श्रुतिसहितयुक्त्यविरोधाय "सदेव सौम्ये"ति (छा. ६-२-१) असदादिशब्दानाम् अन्यार्थतेति किमुवाच्यमिति पूर्वसिद्धान्तन्यायेन शङ्कनात्सङ्गतिः । विष्णोर्विश्वकर्तृत्वावेदकः "यतो वा" इत्यादि वेदः प्रमाणम् उत नेति सन्देहः । न प्रमाणमिति पूर्वः पक्षः ॥ लयवृत्तिविश्वप्रागभावः विश्वहेतुः अनन्यथासिद्धनियतपूर्वक्षणवृत्तित्वात् सम्प्रतिपन्नवदिति युक्त्या "असदेवेदमग्र आसीत्" इत्यसच्छब्दितविश्वप्रागभाव हेतुत्वपरश्रुतिसहितया तस्य हेतुत्वे सिद्धे विमताः भावाः प्रलये असन्तः भावत्वात् कार्यवत् इति लये भावमात्रासिद्धौ कार्यस्य सकर्तृकत्वनियमात् परिशेषेण असदेव सन्मनोकुरुतेत्यादि श्रुतिसहितेन ईश्वरादिकल्पनातः लाघवेन उपादानस्यापि प्रागभावस्यैव कर्तृत्वादिति । प्रागभावकर्तृत्वसाधक युक्तिविरुद्धत्वात् । वृक्षेण स्थीयत इत्यादौ कर्त्रर्थक तृतीयायाः अचेतनेऽपि दर्शनेन अभावस्य कर्तृत्वस्वीकारे अनुपपत्यभावाच्च । किञ्च कूलपतनवत् अकर्तृकमेव जगत् कार्यत्वात् घटवत् जीवकर्तृकं वा दध्यादिवज्जडकर्तृकं वा इत्यादि युक्तिभिः "अकस्माद्धीदमाविरासीदित्यादि श्रुतिसहिताभिर्विरुद्धत्वाच्चेति ॥ सिद्धान्तस्तु ॥ विष्णोः कर्तृत्वस्य ज्ञा-

नचिकीर्षादिमत्वरूपतया अभिमतत्वेन तृतीयायोगित्वमात्रत्वा-
भावात्। तस्य च स्वरूपत एव निषेधात्मके अयोगात्। कार्य-
नाशे कारणमात्रावशेषनियमेन प्रलये भावमात्रावशेषोपपत्तेः।
तन्मावशेषस्य च विमतोत्पत्तिः भावाधीना उत्पत्तिमत्वात्। वि-
मतो विनाशः सशेषः नाशत्वात् सम्मतवत् इत्यादिभिः लये भा-
वसत्त्वावेदक युक्तिभिर्विरुद्धत्वात्। भावत्वयुक्तेरुक्तदिशा सत्प्र-
तिपक्षितत्वेन लयकाले व्यभिचारेण च दुष्टतया प्रलये भावाभा-
वशेषस्य अप्रामाणिकत्वात् शुष्कतर्कस्याप्रतिष्ठत्वेऽपि ईशकर्तृ-
त्वागमसहायास्मदुक्तस्य प्रामाण्यसम्भवात्। निष्कारणत्वजी-
वकारणत्वादेः उक्तयुक्तिविरोधेनैव निरासाच्च असद्वेत्यादिश्रुती-
नां च "एतेन सर्वे व्याख्याताः" (ब्र.सू. १-४-२९) इत्युक्तन्यायेन
ईशपरत्वात् प्रमाणमेव विष्णुकर्तृश्रुतिज्ञानमिति ॥ ४ ॥

**॥ ॐ भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॐ ॥५॥**

पूर्वं ब्रह्मणोऽसत्वमुपेत्य अभावस्यैव कर्तृत्वं शङ्कितम्। इह
तु उक्तदिशा तत्सत्त्वमुपेत्य जीवस्यापि कर्तृत्वमाशङ्क्यते इति
सङ्गतिः। विष्णुरेव कर्ता इत्यादि श्रुतिसमन्वयेनोक्तं विश्वकर्तृ-
त्वं युक्तं न वेति सन्देहः। न युक्तमिति पूर्वः पक्षः। "परेऽव्यये
सर्व एकीभवन्ती"ति (मुं. ३-२-७) श्रुत्या ईशस्य मुक्तैरैक्यात् अ-
न्यस्य अन्यत्वादर्शनेन प्रागैक्यस्यावश्यकत्वेन संसारिजीवाभि-
न्नत्वादिति श्रुतिसिद्धाभिन्नत्वयुक्तिविरुद्धत्वात्। न च प्रागप्यैक्ये
अभूततद्भावार्थक "च्वि" प्रत्ययायोगः। प्राग्भेदस्याप्यङ्गीकारात्
तन्निवृत्यर्थत्वेन तदुपपत्तिः ॥ एवं च जीवेशयोरैक्यस्य तयोः स-

र्वकर्तृत्वाल्पकर्तृत्वविरुद्धधर्मत्यागेन तस्य जीवसालक्षण्येन वा जीवधर्मत्यागेन वा तस्य ईश सालक्षण्येन वा सम्भवेन आद्यया विष्णौ सर्वकर्तृत्वस्यासम्भवात् अन्त्येऽतिव्याप्तेरिति ॥ सिद्धान्तस्तु ॥ एकीभाव श्रुतेः "निरञ्जनः परमं साम्यमुपैति दिव्यं" (मुं. ५-३) इत्युत्तरवाक्येन "यथोदकं शुद्धे शुद्धमासिक्तं तादृगेवेत्यादि वाक्यान्तरेण च विरोधेन प्राग्भिन्नाभिन्नस्यापि पश्चादत्यन्ताभेदस्य क्वाप्यदर्शनेन च मुक्त्यैक्यपरत्वेन जीवैक्यस्य वा सिद्धेः युक्तं विष्णोः विश्वकर्तृत्वमिति ॥ ५ ॥

**॥ ॐ तदनन्यत्वमारम्भणशब्दादिभ्यः ॐ ॥ ६ ॥**

॥ ॐ भावे चोपलब्धेः ॐ ॥ ॥ ॐ सत्त्वाच्चावरस्य ॐ ॥ ॥ ॐ असद्व्यपदेशानेति चेन्न धर्मान्तरेण वाक्यशेषात् ॐ ॥ ॥ ॐ युक्तेः शब्दान्तराच्च ॐ ॥ ॥ ॐ पटवच्च ॐ ॥ ॥ ॐ यथा प्राणादिः ॐ ॥

पूर्वत्र ईशस्य विश्वकर्तृत्वमेव नेति शङ्कापास्ता। अत्र तु श्रुतिसिद्धं तदुपेत्य स्वाधीनसत्तादियुक्तं साधनापेक्षं तदिति शङ्का अपास्यत इति सङ्गतिः जन्मादिसूत्रोक्तं विष्णोस्स्वातन्त्र्येण कर्तृत्वं युक्तं न वेति सन्देहः। न युक्तमिति पूर्वः पक्षः ॥ महदादिसृष्टिः कर्त्रन्यस्वतन्त्रसाधनसापेक्षा सृष्टित्वात् पटसृष्टिवत् इत्यादि बहुयुक्तिविरुद्धत्वात् "अद्भ्यः सम्भूतः पृथिव्यै रसाच्चे"ति (पुरुष सू.) श्रुतौ अबादिस्वतन्त्रसाधनान्तरोक्तिविरोधाच्च। ईश्वरसृष्टित्वात्तदनपेक्षायाम् ईशाधीनसाधनान्तरापेक्षा न स्यादिति ॥ सिद्धान्तस्तु ॥ युक्तमेव स्वतन्त्रकर्तृत्वं वि-

ष्णोः "किंस्विदासीदधिष्ठानम् आरम्भणमि"ति (ऋ. १०-८१-२) श्रुतौ अधिष्ठानादेः साधनस्याक्षेपात् तथा "नासदासीन्नो सदासी"दित्यादि श्रुतौ (ऋ. १०-१२९-२) भूतादिसाधनासत्त्वकथनात् तयोश्च साधनसत्त्वावेदक श्रुत्यन्तरविरोधेन च स्वरूपेणाक्षेपासत्वयोरयोगे तत्स्वातन्त्र्यनिषेधपरत्वेन तया श्रुत्या विमता सृष्टिः न कर्त्रन्यसाधनापेक्षा परतन्त्रकर्त्रन्यत्वे सति सृष्टित्वात् इत्यादि व्यतिरेकानुमानैश्च प्रागुक्तैः विरुद्धत्वात्। प्राणादीनाम् ईशानुप्रविष्टत्वेन अस्वातन्त्र्यवत् "प्रकृतिं पुरुषं चैव प्रविश्ये"ति (कूर्म. पु.) स्मृत्या ईशानुप्रविष्टत्वेन साधनानाम् अस्वातन्त्र्यनिश्चयेन बाधितत्वात्। कर्त्रन्यस्वतन्त्रसाधनस्य श्रुत्यादिप्रमाणैरनुपलम्भात् "अब्भ्यः" इत्यादेः "द्रव्यं कर्म च कालश्चे"त्यादि श्रुत्या अवरसाधनत्वपरत्वेन तद्विरोध्यभावात् ईश्वरस्यापि लीलया सृष्टौ साधनान्तरोपादानसम्भवाच्चेति ॥ ६ ॥

**॥ ॐ इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॐ ॥ ७ ॥**

॥ ॐ अधिकं तु भेदनिर्देशात् ॐ ॥ ॥ ॐ अश्मादिवच्च तदनुपपत्तिः ॐ ॥ ॥ ॐ उपसंहारदर्शनान्नेति चेत्क्षीरवद्धि ॐ ॥ ॥ ॐ देवादिवदपि लोके ॐ ॥ ॥ ॐ कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॐ ॥

अत्र पूर्वोक्तं प्राणादि जीवानामस्वातन्त्र्यम् अयुक्तं जीवानां स्वतन्त्रकर्तृत्वानुभावात् इत्याक्षेपात् सङ्गतिः। जन्मादिसूत्रे अभिमतं विष्णोरेव स्वतन्त्रकर्तृत्वं युक्तं न वेति सन्देहः। पूर्वपक्षस्तु ॥ "जीवाद्भवन्ति भूतानी"त्यादिश्रुत्या अहमिदं करोमी-

त्यादि स्वतन्त्रकर्तृत्वानुभवेन च संवादिन्या जीवः कर्ता चेतनत्वात् सिद्धान्त्यभिमतेशवत् इति युक्त्या विष्णुरेव स्वतन्त्रः कर्ता इत्यस्य विरुद्धत्वादेव च घटादौ जीवस्यैव कर्तृत्वे सिद्धे लाघवेन महदादावपि स एव कर्तेत्यस्य न्याय्यत्वात् ईशस्य च अयोग्यत्वेन कदाप्यप्रत्यक्षतापत्त्या श्रवणादिवैयर्थ्येन योग्यत्वे वाच्ये सदा सर्वत्र सतः इति इहेदानीमनुपलम्भेन योग्यानुपलब्ध्या तदभावनिश्चयेन तत्कर्तृत्वकल्पनस्य गौरवपराहतत्वाच्च न युक्तं तत्कर्तृत्वमित्येकः । अन्यस्तु । महदादिकर्तृत्वस्य जीवे अनुभवविरोधात् अस्तु तत्रेशः कर्ता न तु घटादावपि तस्य अनुभवसिद्धजीवमात्रकर्तृत्वे कल्पनालाघवादिति ॥ सिद्धान्तस्तु ॥ जीवस्यैव स्वतन्त्रकर्तृत्वे स्वहिताकरणस्य च अनुभवसिद्धस्यायोगात् । तृणोद्धरणादौ कृत्स्नसामर्थ्येन एकदेशेन वा प्रवृत्तत्वे अनुभवेन "एष नित्यो निरवयव" इति श्रुत्या च विरुद्धत्वेन प्रवृत्त्ययोगाच्च । बाधकात्सदा सर्वत्र स्थितस्यापि ईशस्य देवादिवत् पिशादिवच्च अन्तर्धानशक्त्यानुपलम्भसम्भवेन "जीवाद्भवन्ती"त्यादि श्रुतेः अपूर्वतालिङ्गेन ईशपरत्वोपपत्तेः । स्वतन्त्रकर्तृतानुभवस्य च चार्वाकस्य जडदेहस्वातन्त्र्यबुद्धेरिव ईशाधीने जीवे भ्रमत्वाच्चेतनत्वयुक्तेश्च अश्मादिवदस्वतन्त्रत्वात् न जीवः स्वतन्त्रकर्तेति सत्प्रतिपक्षत्वेन अप्रयोजकतया स्वातन्त्र्याभावाच्च साधकभावाच्च न जीवः । स्वतन्त्रः प्रमितेश्वरः घटादौ महदादौ च स्वतन्त्रकर्तेत्यङ्गीकारे गौरवस्य प्रामाणिकत्वेन अदोषत्वाच्च द्वावपि पूर्वपक्षावयुक्ताविति विष्णोरेव कर्तृत्वं युक्तमिति ॥

फलं तु पूर्वोत्तरपक्षयोः लक्षणस्य यथाक्रमम् असम्भवातिव्याप्ती तत्समाधिश्च सिद्धान्ते ॥ ७ ॥

**॥ ॐ श्रुतेस्तु शब्दमूलत्वात् ॐ ॥८ ॥**

॥ ॐ आत्मनि चैवं विचित्राश्च हि ॐ ॥ ॥ ॐ स्वपक्षदोषाच्च ॐ ॥ ॥ ॐ सर्वोपेता च तद्दर्शनात् ॐ ॥ ॥ ॐ विकरणत्वान्नेति चेत्तदुक्तम् ॐ ॥

अत्र कृत्स्नप्रसक्त्यादिदोषः जीववदीशस्य कर्तृत्वेऽपि स्यादिति शङ्कनात्सङ्गतिः। विष्णोस्सर्वकर्तृत्वं युक्तं न वेति सन्देहः ॥ पूर्वपक्षस्तु ॥ विष्णोस्तृणादानादल्पकार्येऽपि कृत्स्नप्रसक्त्या प्रवृत्तौ अप्रेक्षावत्वापातात्। एकदेशेन प्रवृत्तौ नेहनानेत्यादि निरंशश्रुतिव्याकोपात् जीवादीशेविशेषासिध्या तत्रैवायं दोषो नेशे इत्यस्य च कल्पकाभावात् "अचक्षः श्रौत्रं तदपाणिपादम्" इति श्रुत्या श्रोत्रादिकरणाभावाच्च अयुक्तं विष्णोः कर्तृत्वमिति ॥ सिद्धान्तस्तु ॥ "योऽसौ विरुद्धः अविरुद्धः मनुरमनु"रित्यादि (पौङ्गिश्रुतिः) लोके विरुद्धधर्माणाम् ईशेऽविरुद्धत्वोक्तेः तस्य शब्दैकगम्यतया शुष्कतर्कागोचरत्वेन तदबाध्यत्वात् "विचित्रशक्तिः पुरुषः पुराणः" इत्यादि श्रुत्या विष्णोर्युक्तिविरुद्धनिर्वाहक नित्यसर्वविषयक अघटितघटकशक्तिसत्वाच्च। जीवे च पूर्वोक्तस्य कस्याप्यभावेन ईशस्य ततो विशेषात् भावस्य "न तस्य कार्यं करणम्" इत्यादिना प्रागुक्तश्रुतेः प्राकृतपरत्वात् ज्ञानानन्दादिगुणमयपाण्याद्यवयवयुक्तदेह सत्त्वाच्च युक्तं तत्कर्तृत्वमिति ॥ शास्त्रैकविनिर्णये शुष्कतर्कस्य साधकत्वं

नेत्युक्तम्। अत्र बाधकत्वं नेति भेदः ॥ ८ ॥

**॥ ॐ न प्रयोजनवत्त्वात् ॐ ॥ ९ ॥**

॥ ॐ लोकवत्तु लीलाकैवल्यम् ॐ ॥

पूर्वं हेतुमुख्ययुक्तिविरोधोऽपास्तः अत्र तु फलमुखदृढयुक्तिविरोधः निरस्यत इति सङ्गतिः। विष्णोः तत्प्रयोजनोद्देशेऽपूर्णतापत्त्या तादृशस्य चैत्रादेरिव सर्वकर्तृत्वायोगात् तदनुद्देशे च चेतनस्य प्रेक्षावतः प्रवृत्तेरेवायोगात्। दयाजन्यपूलाभावात् दयया प्रवृत्तिरित्यस्यायोगादिति ॥ सिद्धान्तस्तु ॥ "देवस्यैपस्वभावोऽय"मिति (मां. उ. २-९) श्रुत्या विश्वसृष्ट्यादेः ईशस्वभावत्वात् स्वाभाविकस्य निमेपादेः प्रयोजनानुद्देशेऽपि दर्शनात् फलाभावेऽपि अनायाससाध्याङ्गुल्यग्रादिचालनस्येव ईशस्य विश्वसृष्ट्यादेरनायाससाध्यत्वेन उपपन्नत्वाच्च। दयाजन्यस्य स्वफलस्याभावेऽपि परप्रयोजनस्य सत्त्वाच्च लीलारूपो विश्वसृष्ट्यादिः युक्तः इति ॥ ९ ॥

**॥ ॐ वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति ॐ ॥ १० ॥**

॥ ॐ न कर्माविभागादिति चेन्नानादित्वात् ॐ ॥ ॥ ॐ उपपद्यते चाप्युपलभ्यते च ॐ ॥

अत्र पूर्वनयोक्तपरप्रयोजनरूपफलविषये युक्तिविरोधो निरस्यत इति सङ्गतिः। विष्णोस्सर्वकर्तृत्वं युक्तं नवेति सन्देहः। न युक्तमिति पूर्वः पक्षः ॥ विष्णोः परप्रयोजनोद्देशेन प्रवृत्तावुपेतायां तत्तदीयकर्मानपेक्षतया तेषां तेषां फलदाने निर्निमित्तं विभागेन सुखदुःखादि ददतः वैषम्यनैर्घृण्यापातात् कर्मापेक्षया फल-

दाने कर्मणामपि तदधीनत्वेन निर्निमित्तं विभागेन सुकृतदुष्कृते कारयतः पुनः वैषम्याद्यापातात्। विष्ण्वनधीनत्वे अनधीनकर्मापेक्षितत्वेन स्वातन्त्र्यच्युतेति ॥ सिद्धान्तस्तु ॥ विष्णोस्तत्तदीयकर्मापेक्षया फलदानेऽपि कर्मणां प्रवाहतः अनादित्वेन पूर्वपूर्वं तत्तदीयकर्मापेक्षया उत्तरोत्तरसुकृतादिकर्मकारयित्वा फलं ददातीत्यङ्गीकारेण विभागेन कर्मानुष्ठापनस्य निर्निमित्तत्वाभावात् कर्मणामपि "एष ह्येव साधुकर्म कारयती"ति श्रुत्या स्वाधीनत्वेन अस्वातन्त्र्यानापत्तेश्च। अनादिकर्मणां स्वाधीनत्वेन अन्यथाकरणशक्तस्यापि एवमेव तदपेक्षया फलदाने प्राप्तवैषम्यादेश्च। धर्मादेः फलहेतुत्वावेदक वेदाप्रामाण्यानापादकत्वेन विधिनिषेधातीतस्य तस्य तद्वतो जीवस्येव प्रत्यवायाहेतुत्वाच्च अनादि तत्तद्योग्यतानुसारित्वस्यैव समशब्दार्थतया "समोहं सर्वभूतेषु" (भ.गी. ९-२९) इत्युक्तसर्वसमत्वरूपसद्गुणाविरोधित्वाच्च। "सकारयेत्पुण्यमथापि पापं न तावता दोषिवान्" (चतुर्वेदशिखा) इत्यादि श्रुतौ दोषत्वेनोक्तत्वाच्च अदोषत्वाद्युक्तं विष्णोस्सर्वकर्तृत्वमिति ॥ १० ॥

**॥ ॐ सर्वधर्मोपपत्तेश्च ॐ ॥ ११ ॥**

एवं स्रष्टृत्वाद्येकैकगुणो एकैकदोषाभावे च युक्त्यविरोधः पूर्वनयेषूक्तः अत्र तु उपसंहारत्वात् सर्वत्रेति सङ्गतिः। विष्णोरुक्तनिर्दोषगुणपूर्णत्वं युक्तं न वेति सन्देहः। न युक्तमिति पूर्वः पक्षः ॥ विष्णुः न निर्दोषत्वेन गुणपूर्णवान् चेतनत्वात् चैत्रादिवदिति युक्तिविरोधात् अन्यथा दोषाभावे गुणत्वं च नस्यादिति ॥

सिद्धान्तस्तु ॥ ब्रह्म सदाप्राप्तसर्वसद्गुणं तत्प्रेप्सुत्वे सति तत्र शक्तत्वात् सम्मतवत्। ब्रह्म सदा त्यक्तसर्वदोषं तज्जिहासुत्वे सति तत्र शक्तत्वादिति युक्त्यनुगृहीतायाः "गुणाः श्रुताः सुविरुद्धाश्च देवे" (सौपर्ण० / जाबालिखिल) इत्यादि श्रुत्या निर्दोषगुणपूर्णत्वस्य सिद्धेः चेतनस्य अप्रयोजकत्वात् युक्तं विष्णोर्निर्दोषगुणपूर्णत्वम्। न च युक्तिद्वये विशेषणासिद्धिः। प्रेक्षावत्वेनैव तदनुमानात् विशेष्यस्य च "श्रुतेस्तु" इति नये (ब्र.सू २-१-२८) सिद्धत्वादिति ॥ फलं तु समन्वयाध्योक्तार्थस्य आक्षेपस्तत्समाधिश्च ॥ ११ ॥

इति श्रीमद्राघवेन्द्रयतिकृतायां न्यायमुक्तावल्यां
द्वितीयाध्यायस्य प्रथमः पादः ॥

## अथ द्वितीयः पादः

इतरेषां चानुपलब्धेरिति (ब्र.सू २-१-२) स्मृतिनये गुणसूत्रोक्तहेतुविस्तृतिरूपत्वात् तदनन्तरं समयविरोधः अत्रोच्यते इति वा प्रागुक्तदिशा वा पूर्णपादेनास्य सङ्गतिः। "अक्षपादकणादौ च" इत्यादि स्मृत्या समयानां द्वैविध्यात् हेतुमत्वेन हैतुकानां प्रबलत्वात् आदौ निरस्यते।

**॥ ॐ रचनानुपपत्तेश्च नानुमानम् ॐ ॥ १ ॥**

॥ ॐ प्रवृत्तेश्च ॐ ॥ ॥ ॐ पयोम्बुवच्चेत्तत्रापि ॐ ॥ ॥ ॐ
व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॐ ॥



जन्मादिसूत्रोक्तं विष्णोस्सर्वकर्तृत्वं युक्तं न वेति सन्देहः।

न युक्तमिति पूर्वः पक्षः। महदादिकार्यं स्वतन्त्रकारणजन्यं सजातीयकारणजन्यं वा कार्यत्वात् घटवदित्याद्यनुमानैः सिद्धं विश्वहेतुः प्रधानं स्वतन्त्रप्रवृत्तिरूपकर्तृत्ववत् वस्तुत्वात् अंब्वादिवत् इति स्वतः परिणामवत् द्रव्यत्वात्क्षीरवदिति वाऽनन्यापेक्षतया प्रधानस्य कर्तृत्वं साधयता निरीश्वरसाङ्ख्यनयेन विरुद्धत्वादिति ॥ सिद्धान्तसु ॥ आद्यानुमानस्य सिद्धसाधनतापराहतत्वात् अन्त्ययोश्च महदादिकं न स्वतन्त्रप्रवृत्तिमत् अचेतनत्वात् चेतनसृष्टं वा कार्यत्वात् घटवदित्यादिना सत्प्रतिपक्षत्वात्। "एतस्यैवाक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यः स्यन्दन्ते", (बृ. ५-८-९) "एतेन ह वाव पयोमण्डं भवती"ति "न ऋते त्वत्क्रियते" (ऋ. १०-११२-९) इत्यादिश्रुतिभिः अंब्वादावपि चेतनप्रवृत्तिदृष्ट्या साध्यवैकल्याच्च दुष्टत्वेन केवलाचेतनकर्तृत्वस्याप्रामाणिकत्वात् प्रमाणविरुद्धत्वाच्च। तत्प्रतिपादकसमयस्य दुष्टतया तद्विरोधस्याकिञ्चित्करत्वात् श्रुतिसमन्वयेनोक्तं विष्णोर्विश्वकर्तृत्वं युक्तमिति। फलं तु अत्र सर्वत्र जन्मादिसूत्रोक्तकर्तृत्वाक्षेपसमाधी ॥ १ ॥

**॥ ॐ अन्यत्राभावाच्च न तृणादिवत् ॐ ॥ २ ॥**

अनीश्वरसाङ्ख्यमतस्य वैदिकवादं प्रति अत्यन्तविरोधित्वात् आदौ तन्निरस्य अत्र ईशगुणकप्रधानकर्तृत्वपरसाङ्ख्यमतं निरस्यत इति सङ्गतिः। विष्णोः स्वातन्त्र्येण कर्तृत्वं युक्तं न वेति सन्देहः। न युक्तमिति पूर्वः पक्षः ॥ केवलाचेतनप्रधानस्य परिणामाद्यियोगेऽपि गुणभूतेशानुगृहीतस्य पर्जन्यानुगृहीतपृथि-

व्यादेस्तृणाद्यात्मनेव महदात्मना परिणामोपपत्तेः प्रागुक्तश्रुतीनां गुणभूतेशपरत्वेन तदविरोधाच्चेति एवंरूप साङ्ख्यमतविरोधादिति ॥ सिद्धान्तस्तु ॥ “यच्च किञ्चिज्जगत्सर्व”मित्यादि श्रुतौ (महाना.उ.) सर्ववस्तूनां सत्तादिप्रदानाय सर्वगतत्वोक्तेः ईशप्रेरणां विना कस्यापि वस्तुनः सत्त्वस्यैवाभावात्। “स एव भूयो निजवीर्यचोदितां” (भाग. १-१०-२३) इत्यादि स्मृतौ प्रकृत्यादि कारणसत्तादेरपि ईशायत्तत्वोक्तेः ईशः पर्जन्यवन्नानुग्राहकमात्रं कार्यकारणाख्यसर्ववस्तुसत्त्वादिप्रदत्वात् य एवं स एवं यथा सम्मतवत् इति तस्य स्वातन्त्र्यसिद्धेश्च साङ्ख्यमतस्य दुर्मतत्वेन तद्विरोधस्याकिञ्चित्करत्वात् युक्तं तस्यैव स्वातन्त्र्येण जगत्कर्तृत्वमिति ॥

**॥ ॐ अभ्युपगमेप्यर्थाभावात् ॐ ॥ ३ ॥**

अत्र प्राक् श्रुत्यनुमानाभ्यां केवलस्य ईशगुणकस्य वा जडस्य कर्तृत्वनिरासो युक्तः। तयोः अमानत्वाद्देहस्यैव कर्तृत्वोपपत्तेरीशो न कर्तेत्याक्षेपात्सङ्गतिः। विष्णोर्जगत्कर्तृत्वं युक्तं न वेति सन्देहः। न युक्तमिति पूर्वः पक्षः ॥ विनापीशं पूर्वपूर्वस्मादुत्तरोत्पादसम्भवात् क्वचित्स्वभावादेव मदिरोत्पत्तिवत् कार्योत्पत्युपपत्तेः। प्रत्यक्षेतरप्रामाण्याभावेन प्रागुक्तश्रुत्यनुमानविरोधाभावात् धर्माधर्माद्यदृष्टवस्तुनः अनभ्युपगमेन श्रुत्याद्यप्रामाण्ये धर्माद्यभावः स्यात् इत्यस्येष्टत्वात् कुतः ईशः कुतस्तरां तत्कर्तृत्वं कुतस्तमाञ्च स्वातन्त्र्यमिति चार्वाकमतविरोधादिति ॥ सिद्धान्तस्तु ॥ अक्षान्यप्रामाण्येनादृष्टवस्त्वभावे चा-

र्वाकशास्त्रस्य अदृष्टविषयस्य अदृष्टस्य चाप्राप्तेः दृष्टस्य च "अ-प्राप्ते शास्त्रमर्थवत्" इति न्यायेन विषयत्वायोगात् धर्माद्यभाव-स्य च अक्षायोग्यत्वात् धर्मादिकं नास्ति प्रत्यक्षेणानुपलम्भात् इत्यनुमानस्य त्वया प्रामाण्यानभ्युपगमाच्च। धर्माधर्माद्यभाव-बोधनोपायाभावेन तस्यापि विषयत्वायोगात् धर्मस्वर्गापवर्गादेः प्रयोजनस्याभावात्। दृष्टस्य धनादेः वार्ताद्युपायान्तरसाध्यत्वा-द्धर्माद्यभावज्ञाने परधनवनिताद्यर्थं परस्परहिंसादिना अपकार-स्यैव प्राप्त्या धर्माद्यभावबोधनद्वारा लोकोपकारः फलमित्यस्या-प्यभावात् विषयप्रयोजनयोरभावेन तन्मतस्य दुष्टत्वात् तयोर-भावेऽपि शास्त्रत्वमस्त्वित्यस्य च व्याहतत्वेन तदीयदुर्मतस्य अ-किञ्चित्करत्वात् युक्तं विष्णोः कर्तृत्वमिति ॥ ३ ॥

**॥ ॐ पुरुषाश्मवदिति चेत्तथापि ॐ ॥४ ॥**

॥ ॐ अङ्गित्वानुपपत्तेः ॐ ॥

अत्र यदुक्तं प्राग्विषयादिशून्यतया दुर्मतस्य विरोधकत्वा-दीशः कर्तेति तन्न। विषयादिमत्पुरुषोपसर्जन साङ्ख्यमतविरोधा-दित्याक्षेपात्सङ्गतिः। विष्णोर्विश्वकर्तृत्वं युक्तं न वेति सन्देहः। न युक्तमिति पूर्वः पक्षः। केवल जडस्य स्वतः प्रवृत्तिमत्वरूप-कर्तृत्वस्यानुपपत्तावपि लोके जीवसम्बन्धेन देहस्यैव अश्मानय-नादौ प्रवृत्तिदर्शनेन विमता प्रवृत्तिः जीवोपसर्जना चेतनानिर्वृ-त्ता प्रवृत्तित्वात् अश्मानयनप्रवृत्तिवदित्यनुमानेन जीवगुणकप्र-धानस्य कर्तृत्वस्वीकारे बाधकाभावादिति पुरुषोपसर्जनप्रधान-कर्तृसाङ्ख्यमतविरोधादिति॥ सिद्धान्तस्तु॥ "न ऋते त्वत्क्रियते

किञ्चनारे" इत्यादि प्रागुक्त श्रुत्या शरीरप्रवृत्तेरपि ईशाधीनत्वस्य सिद्ध्या जीवस्य गुणित्वे देहस्य अङ्गत्वे च व्यवहारस्य लौकिकपरीक्षकसिद्धस्यायोगेन च जीवगुणकप्रधानकर्तृत्वस्य अप्रामाणिकत्वात् तादृशार्थावेदकस्यापि दुर्मततया उक्तार्थाविरोधकत्वात् युक्तं विष्णोः कर्तृत्वमिति ॥ ४ ॥

**॥ ॐ अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॐ ॥५ ॥**

॥ ॐ विप्रतिषेधाच्चासमञ्जसम् ॐ ॥

अत्र जीवस्यैवाङ्गित्वोपगमेन अङ्गत्वानुपपत्तिः दोषो नेति शङ्कनात्सङ्गतिः । विष्णोः कर्तृत्वं युक्तं न वेति सन्देहः । न युक्तमिति पूर्वः पक्षः ॥ प्रागुक्तदिशा अश्मानयनादौ देहोपसर्जनजीवकर्तृत्वदृष्ट्या तद्दृष्टान्तेन विमता प्रधानप्रवृत्तिः अचेतनोपसर्जनजीवाधीना प्रवृत्तित्वात् अश्मानयनादिप्रवृत्तिवत् इत्यनुमानेन पुरुषप्रधानस्यैव प्रधानस्य स्वतः प्रवृत्तौ ईशेन कृत्याभावात् दूरे कर्तृत्वम् । प्रागुक्तश्रुतेश्च युक्तिविरोधेन अवज्ञानादिति पुरुषप्रधानकसाङ्ख्यमतविरोधादिति ॥ सिद्धान्तस्तु ॥ एवं पूर्वमतादन्यथानुमानेऽपि जीवस्य देहं विनापि प्रवृत्तौ शक्तत्वे देहवैयर्थ्यादशक्तत्वे देहसम्बन्धार्थप्रवृत्तावपि केवलस्य शक्त्यभावेन अङ्गित्वानुपपत्तेः । प्रकृतिसम्बन्धस्य तत्र शक्तत्वोक्तौ प्रकृतिसम्बन्धप्रवृत्तावपि एवमेवमित्यनवस्थानात् । अनादित्वेन तत्परिहारे मुक्तप्रवृत्तेः सर्वथायोगेन स्वतन्त्रेणेशेनैव देहसम्बन्धे घटनीये अश्मानयनादिप्रवृत्तावपि तथेति दृष्टान्तस्य साध्यहीनत्वेन अनुमानस्य दुष्टतया उक्तार्थस्य साधकाभावेन अप्रामाणिकत्वात्

स्वतन्त्रेशाङ्गीकारेण च सर्वसामञ्जस्यात् युक्तं विष्णोः कर्तृत्व-मिति ॥ इतरेत्यत्र श्रुतियुक्तिप्राप्तस्य अत्र तु समयप्राप्तस्य जी-वकर्तृत्वस्य निरास इति भेदः ॥ ५ ॥

**॥ ॐ महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॐ ॥ ६ ॥**

॥ ॐ उभयथापि न कर्मातस्तदभावः ॐ ॥ ॥ ॐ समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॐ ॥ ॥ ॐ नित्यमेव च भावात् ॐ ॥ ॥ ॐ रूपादिमत्वाच्च विपर्ययो दर्शनात् ॐ ॥ ॥ ॐ उभयथा च दोषात् ॐ ॥ ॥ ॐ अपरिग्रहाच्चात्यन्तमनपेक्षा ॐ ॥

अत्र निरीश्वरपक्षोक्तो दोषो नेशवादिनां मत इति पूर्ववै-षम्येन शङ्कनात्सङ्गतिः । अत्र प्रागुक्तं विष्णोरनन्तगुणत्वं यु-क्तं न वेति सन्देहः । न युक्तमिति प्राप्तम् । ईश्वरात्मनोः द्र-व्यत्वेन सङ्ख्यापरिमाणपृथक्त्वसंयोगविभागाख्यानां पञ्चानां सा-मान्यगुणानां कर्तृत्वोपयोगितया ज्ञानेच्छाप्रयत्नानां त्रयाणां वि-शेषगुणानाम् आवश्यकत्वेन अष्टगुणातिरिक्तगुणे मानाभावेन जीवात्मवच्चतुर्दशगुणवत्वस्याप्यभावेन अनन्तगुणत्वं दूरतोपा-स्तमिति वैशेषिकादिमतविरोधादिति ॥ सिद्धान्तस्तु ॥ वैशेषि-काणाम् अयुक्तभाषित्वेन अप्रामाणिकप्रक्रियाबोधकस्य तन्मत-स्योक्तार्थविरोधित्वात् युक्तमनन्तगुणत्वमिति । तथाहि । यदु-क्तं त्र्यणुकादि परिमाणं चतुरणुकादि परिमाणासमयवायिका-रणं परमाणुद्व्यणुकपरिमाणे न भवतः किन्तु तद्गतद्वित्वत्रित्वस-ङ्ख्यैवेति । तदयुक्तम् । त्र्यणुकादिगतस्येव परमाण्वादिगतस्यापि

परिमाणस्य तथात्वोपपत्तेः। त्र्यणुकगतस्य ह्रस्वत्वेन परमाणुगतस्य च अणुत्वेन वैजात्येऽपि सङ्ख्याया इव प्रचयस्यैव हेतुत्वोपपत्तेः। अणुमहद्दीर्घह्रस्वं चेत्येवं परिमाणौ अवान्तरजातौ मानाभावेन सर्वस्यापि वस्तुनः आपेक्षिकाणुत्वमहत्वयोः पुरुषविशेषं प्रति प्रत्यक्षत्वाप्रत्यक्षत्वयोश्च युक्ततया अतिप्रसङ्गाभावाच्च। एवं विवक्षिततन्तुसंयोगभिन्नपटाप्रतीत्या तं प्रति तन्तुसंयोगस्याहेतुत्वेन असमवायिकारणप्रक्रिया न युक्ता। तथा निमित्तकारणत्वेनाङ्गीकृतेशाच्छायाः नित्यत्वे प्रलये तस्यां सत्यामपि परमाणुचेष्टाभावेन व्यभिचारादन्यदापि तदभावापत्त्या त्र्यणुकादिकार्याभावः स्यात्। अनित्यत्वे तदुत्पत्तौ तदिच्छान्तरापेक्षायाम् अप्रामाणिकव्यक्तिपरम्परया अनवस्थापातात्। अनपेक्षायां तत्रेव अन्यत्रापि तस्याहेतुत्वं न स्यादिति तदुपेतं निमित्तकारणमप्ययुक्तम्। तथा गुणगुण्यादेः भिन्नत्वमुपेत्य विशिष्टप्रत्ययाद्यर्थं समवायान्तराङ्गीकारे तत्राप्येवमित्यनवस्थापत्त्या समवायस्यायोगेन यत्समवेतं कार्यमुत्पद्यते तत्समवायिकारणमिति लक्षणयुक्तं समवायिकारणमपि अयुक्तमिति विश्वसृष्टिरयुक्ता। तथा लयोऽपि तन्मते न युक्तः। समवायिकारणपरमाणूनां निमित्तभूतेशाच्छादेश्च नित्यत्वे सदा कार्योत्पत्तिरेव अवश्यं भावितत्वात्। किञ्च परमाणविऽनित्याः रूपादिमत्वाद्धटवदिति अनुमानविरुद्धत्वेन परमाणुनित्यत्वस्यापि तन्मतेऽयोगाच्च। अन्यथा पटादेरपि नित्यत्वापत्तेः। भौतिकत्वेन हेतुविशेषणेन सिद्धान्तेऽव्यभिचारात्। अन्वीक्षकीं तर्कविद्यामनुरक्तो निरर्थिकाम् इति भारते (शान्तिपर्व १८०-४७) सृगालरूपेन्द्रेण

तर्कविद्यानुरागस्य सृगालजन्महेतुत्वोक्त्या निन्दितत्वाच्चेति तन्मतस्य दुष्टत्वं ध्येयम्। फले तु पूर्वाध्यायोक्त पूर्णगुणत्वाक्षेपसमाधाने ॥ ६ ॥

**॥ ॐ समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॐ ॥ ७ ॥**

॥ ॐ इतरेतरप्रत्ययत्वादिति चेन्न उत्पत्तिमात्रनिमित्तत्वात् ॐ ॥ ॥ ॐ उत्तरोत्पादे पूर्वनिरोधात् ॐ ॥ ॥ ॐ असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॐ ॥ ॥ ॐ प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधाप्राप्तिरविच्छेदात् ॐ ॥ ॥ ॐ उभयथा च दोषात् ॐ ॥ ॥ ॐ आकाशे चाविशेषात् ॐ ॥ ॥ ॐ अनुस्मृतेश्च ॐ ॥

एवं परमाण्वारम्भवादनिरासेनोपस्थित तत्पुञ्जवादोऽत्र निरस्यते इति सङ्गतिः। विष्णोर्विश्वकर्तृत्वं युक्तं न वेति सन्देहः। न युक्तमिति प्राप्तम्। रूपविज्ञानवेदनासंज्ञासंस्काररूपेणावस्थितस्य परमार्थसतः अशेषजगतः परमाणुहेतुकतत्समुदायमात्रत्वात् तावता घटादिबुद्ध्युपपत्तौ परमाणुपरिणामस्य तदारब्धस्यावयविनोऽभ्युपगमस्य व्यर्थत्वात् सत्त्वस्य चार्थक्रियाकारित्वरूपत्वेन सतो वस्तुनः स्थायित्वे तेन स्वसजातीयघटादिकार्यान्तरजननात् ताभ्यां तथा इत्येकक्षण एवानन्तकार्यापातेन अर्थक्रियाकारित्वरूपसत्त्वान्यथानुपपत्या वा यत्सत्तत्क्षणिकं यथा दीपादि सन्तश्चामीभावाः इत्यनुमानेन वा क्षणिकत्वात् तस्योक्तकार्यजातस्य कालकर्मनिमित्तेनैव जन्मसम्भवे ईश्वरेण कृत्याभावात् आगमप्रामाण्यानभ्युपगमेन मानाभावाच्चेत्येवं रूपेण वैभाषिकसौत्रान्तिकयोर्मतेन विरुद्धत्वादिति ॥ सि-

द्धान्तस्तु ॥ तयोरनुपपन्नभाषितया तन्मतस्य दुष्टत्वेन तद्विरोधस्याहेतुकस्याकिञ्चित्करत्वात् युक्तं विष्णोः कर्तृत्वमिति । तथाहि । अणुहेतुकः अणुसमुदाय एव घटादिः नत्वन्या काचिदस्तीति यत्तावदयुक्तम् । एकाणुहेतुकस्य एकस्मात्समुदाय इत्यस्य व्याहतेरयोगात् अनेकाणुहेतुक इति पक्षेऽपि मिलितानेकाणुहेतुकः सः इत्युक्तौ तु मेलने समुदायः समुदाये सति मेलनमित्यन्योन्याश्रयात् । विरलानेकहेतुकः स इत्युक्तौ तु तेषां सदा सद्भावेन समुदायस्यापि सदा सत्त्वापत्या तद्विनाशरूपलयाङ्गीकारविरोधात् । अथ मन्यसे विरलाणुस्थानेकत्वसङ्ख्यायाः समुदायशब्दार्थोपगमात् तस्याः सदातनत्वेऽपि अपेक्षाबुद्धिव्यङ्ग्यत्वेन तत्प्रतीतिव्यवहारयोः इदं चेदं चेत्यपेक्षाबुद्ध्यधीनत्वात् तस्याः सामीप्यहेतुत्वेन लयेऽणूनां सामीप्याभावेन अभावात् तन्निमित्ततद्वित्तिव्यवहाराभावेन लयोपपत्तिरिति । तन्न । विषयात्मनोः क्षणिकत्वेन परमाणुदर्शनापेक्षाबुद्धिसमुदायवित्तिव्यवहाराणाम् एकविषयकत्वैकाधिकरणत्वयोरयोगेन कदापि समुदाये वित्तिव्यवहारयोरभावापातात् । त्वन्मते अणूनां सदृशकार्यजननस्वभावत्वाङ्गीकारेण विरलेभ्यो मिलिताणूत्पत्तेरयोगाच्च । क्षणिकत्वपक्षे असति प्रतिज्ञेति प्रतिसंख्येति सूत्राभ्याम् उक्तदिशा प्रतिक्षणोत्पत्तिविनाशयोरयोगेन क्षणिकत्वस्याप्ययुक्तत्वाच्च । प्रागुक्तार्थापत्तेश्च उभयथा चेति सूत्रोक्तदिशा दुष्टत्वात् अनुमानस्य च आकाशे चेत्यनेनोक्तदिशा प्रकरणसमत्वात् तदेवेदमिति प्रत्यभिज्ञाबाधितत्वाच्च क्षणिकत्वस्याप्रामाणिकत्वाच्चेति ॥ ७ ॥

**॥ ॐ नासतोऽदृष्टत्वात् ॐ ॥८ ॥**

॥ ॐ उदासीनानामपि चैवं सिद्धिः ॐ ॥ ॥ ॐ नाभाव उपलब्धेः ॐ ॥ ॥ ॐ वैधर्म्याच्च न स्वप्नादिवत् ॐ ॥

क्षणिकपरमाणुपुञ्जमतोक्तदोषो नास्माकमिति पूर्वाक्षेपेण प्रवृत्तेः सङ्गतिः । विष्णोरुक्तं विश्वकर्तृत्वं युक्तं न वेति सन्देहः । न युक्तमिति प्राप्तम् । पारिमार्थिकात् देशकालपरिच्छेदशून्यत्वादेव संवृतिसम्बन्धेन विश्वोत्पत्त्युपपत्तौ ईशेन कृत्याभावात् । श्रुत्यादेरमानत्वेन तस्याः अप्रामाणिकत्वाच्चेत्येवं रूपेण शून्यवादिमतेन विरोधात् इति ॥ सिद्धान्तस्तु ॥ सत्त्वादिसर्वधर्मशून्यस्य सत्त्वायोगेनासत्त्वादसतः कारणत्वस्याप्रामाणिकत्वात् । स्वपुष्पादीनामपि सौरभ्यकार्यहेतुतापत्त्या अतिप्रसङ्गदुष्टत्वाच्च शून्यमेव जगदाकारेण भवति न वस्तुतो जगदस्तीत्यस्यापि सदित्यबाधितप्रत्यक्षादिबाधेनायोगाच्च । तन्मतस्य दुष्टतया तद्विरोधाभावात् युक्तं विष्णोर्विश्वकर्तृत्वमिति ॥ एतेन मायिमतविरोधोऽपि निरस्तो ध्येयः ॥ ८ ॥

**॥ ॐ न भावोऽनुपलब्धेः ॐ ॥९ ॥**

॥ ॐ क्षणिकत्वाच्च ॐ ॥ ॥ ॐ सर्वथानुपपत्तेश्च ॐ ॥

अत्रापि विज्ञानस्य सत्यत्वेन शून्यवैषम्यात् शून्यवादाद्युक्तदोषो नास्माकमिति पूर्वाक्षेपात्सङ्गतिः । विष्णोरुक्तं विश्वकर्तृत्वं युक्तं न वेति सन्देहः । न युक्तमिति प्राप्तम् । नित्यनिरञ्जनात् सद्रूपाद्विज्ञानतत्त्वादेव परमार्थतः तदनन्यजगदुदयसम्भवात् नेशेन कृत्यमित्येवं रूपेण विज्ञानवादिमतेन विरो-

धादिति ॥ सिद्धान्तस्तु ॥ विज्ञानतत्त्वव्यतिरेकेण जगदेव नास्तीत्यस्य सत्त्वग्राहिप्रयक्षबाधितत्वात् । तादात्म्यस्य चाप्रामाणिकत्वात् । सहोपलम्भनियमादभेदो नीलतद्धियोरित्यनुमानस्य च अबाधितभेदप्रतीतिविरुद्धत्वात् विज्ञानस्य आशुतरविनाशित्वात् एतादृशजगत्तादात्म्यायोगाच्च तन्मतस्यायुक्ततया तद्विरोधाभावाद्युक्तं विष्णोर्विश्वकर्तृत्वम् ॥ ९ ॥

**॥ ॐ नैकस्मिन्नसम्भवात् ॐ ॥ १० ॥**

॥ ॐ एवं चात्माकात्स्न्र्यम् ॐ ॥ ॥ न च पर्यायदप्यविरोधो विकारादिभ्यः ॐ ॥ ॥ ॐ अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषात् ॐ ॥

अत्र शून्यवादाद्युक्तसत्त्वासत्त्वयोरङ्गीकारेण नैकैकपक्षोक्तदोषोऽस्माकमित्याक्षेपात्सङ्गतिः । विष्णोरुक्तविश्वकर्तृत्वं युक्तं न वेति सन्देहः । न युक्तमिति प्राप्तम् । कायपरिमाणात्मनः दृष्टादृष्टसाधनैश्च सत्त्वम् असत्त्वं सदसत्त्वं सदसद्विलक्षणत्वं सत्त्वेऽसतिसद्विलक्षणत्वम् असत्त्वे सति असद्विलक्षणत्वं सदसत्वे सति सदसद्विलक्षणत्वम् इत्यनियतसप्तभङ्ग्यात्मकस्य जगतो जन्मादिसम्भवात् ईशेन कृत्यं नेत्येवंरूपेण जैनमतेन विरोधादिति ॥ सिद्धान्तस्तु ॥ व्यवस्थितसदसत्त्वभावाभावत्वादिप्रकारद्वयान्यप्रकारस्याप्रामाणिकत्वेन असम्भावित्वात् एकैकपक्षोक्तदोषपरिजिहीर्षया सप्तभङ्ग्यङ्गीकारे सर्वपक्षोक्तदोषानिवारणाच्च । मशकमातङ्गादि सूक्ष्मस्थूलदेहप्राप्त्या आत्मनस्तत्र कार्त्स्न्यातिरेकयोः प्राप्तेः । पर्यायेण तत्तत्कायपरिमाणोक्तौ च

विकारित्वेनानित्यताप्राप्तेः। आत्मनः कायपरिमाणत्वप्रक्रियायाः अप्रामाणिकत्वाच्च तन्मतस्य दुष्टत्वाद्युक्तं विष्णोर्विश्वकर्तृत्वमिति ॥ १० ॥

**॥ ॐ पत्युरसामञ्जस्यात् ॐ ॥ ११ ॥**

॥ ॐ सम्बन्धानुपपत्तेश्च ॐ ॥ ॥ ॐ अधिष्ठानानुपपत्तेश्च ॐ ॥ ॥ ॐ करणवच्चेन्न भोगादिभ्यः ॐ ॥ ॥ ॐ अन्तवत्वमसर्वज्ञता वा ॐ ॥

अत्र विश्वस्यैकप्रकारोररीकारेण सप्तभङ्गीपक्षोक्तदोषो नास्माकमित्याक्षेपात्सङ्गतिः। विष्णोरुक्तं विश्वकर्तृत्वं युक्तं न वेति सन्देहः। न युक्तमिति प्राप्तम्। श्रुतिस्मृतिभिः सार्वज्ञादिगुणकः पशुपतिरेव मायामुपादानीकृत्य हरिहरहिरण्यगर्भादिजगन्निर्माता इत्यवगमात् इत्येवमादिरूपेण शैवादिमतेन विरोधादिति ॥ सिद्धान्तस्तु ॥ यं कामये तं तमुग्रकृणोमीत्यादि भाष्योक्तश्रुत्यादिभिः शिवस्य पारतन्त्र्याद्यवगमात् शिवस्याशरीरतया प्रलये भूतानां विलीनत्वेन सृष्टिकाले पृथिव्याद्यधिष्ठानभावेन कर्तृत्वायोगेन कारकजातस्यैव साक्षात्प्रयत्नाधिष्ठेयतया देहादिविनाशित्वस्य दुःखादिभोगस्य चापत्तेश्च। विष्णोश्च श्रुतिनयोक्तदिशा नित्यसर्वविषयविचित्रशक्त्युपेतत्वेन ज्ञानानन्दादिमयदेहत्वेन च सर्वश्रुतीनां विष्णौ समन्वयस्योक्ततया शिवकर्तृत्वे मानाभावाच्च तन्मतस्य दुष्टत्वाद्युक्तं विष्णोः कर्तृत्वमिति। एतेन तुल्यन्यायतया शाक्तेयसौरस्कान्दगाणपत्यमतान्यपि प्रत्युक्तानि ॥ ११ ॥

**॥ ॐ उत्पत्त्यसम्भवात् ॐ ॥ १२ ॥**

॥ ॐ न च कर्तुः करणम् ॐ ॥ ॥ ॐ विज्ञानादिभावे वा तदप्रतिषेधः ॐ ॥ ॥ ॐ विप्रतिषेधाच्च ॐ ॥

प्राङ्निराकृतमपि शक्तिमतं विशेषदोषेण अत्र पुनर्निरस्यत इति सङ्गतिः । विष्णोरुक्तं विश्वकर्तृत्वं युक्तं न वेति सन्देहः । न युक्तमिति प्राप्तम् । श्रुत्यादौ सावज्ञगुणशालिन्याः शक्तेरेव विश्वकर्तृत्वश्रवणात् इत्येवंरूपशक्तिमतेन विरोधादिति ॥ सिद्धान्तस्तु ॥ पुरुषाननुगृहीतस्त्रीमात्रादपत्योत्पत्तेरयोगेन केवलायाः शक्तेः ब्रह्मादिविश्वहेतुत्वायोगात् शिवानुगृहीता सा जगज्जनयत्रीति मध्यमवाममतेऽपि तस्योत्पत्त्युपयोगिज्ञानादिसाधनाभावेन अनुग्राहकत्वायोगात् ज्ञानादिकं तस्योपेयत इति अणुवाममतस्यापि तादृशशिवेनैव विश्वोत्पत्तौ शक्त्युपगमस्य वैयर्थ्येन मतत्रयस्यापि श्रुत्यादिना विप्रतिषिद्धत्वाच्च अयुक्तत्वाद्युक्तं विष्णोः कर्तृत्वमिति ॥ १२ ॥

इति श्रीमद्राघवेन्द्रयतिकृतायां न्यायमुक्तावल्यां द्वितीयाध्यायस्य द्वितीयः पादः ॥

## अथ तृतीयः पादः

**॥ ॐ न वियदश्रुतेः ॐ ॥ १ ॥**

॥ ॐ अस्ति तु ॐ ॥ ॥ ॐ गौण्यसम्भवात् ॐ ॥ ॥ ॐ शब्दाच्च ॐ ॥ ॥ ॐ स्याच्चैकस्य ब्रह्मशब्दवत् ॐ ॥ ॥ ॐ



प्रतिज्ञा हानिरव्यतिरेकाच्छब्देभ्यः ॐ ॥ ॥ ॐ यावद्विकारन्तु

विभागो लोकवत् ॐ ॥

अधिभूताधिदैवपरमात्मजीवविचारेषु आदौ सूचीकटाह-न्यायेन अधिभूताधिदैवविचारः क्रियते। अत्र वियत्पदेन भूता-काशतदभिमानिनौ चोच्यन्ते। आकाशः उत्पत्तिमान्नवेति स-न्देहः। नोत्पत्तिमानिति प्राप्तम्। वियदनुत्पत्त्यनुभवेन वियत् अनुत्पत्तिमत् विभुत्वात्सम्मतवदिति युक्त्या चानुगृहीतया बहु-त्वेन च प्रबलया "अनादिर्वायमाकाश" – इत्याद्यनादित्वश्रुत्या तत्सिद्धेः। एतद्विरोधायाः "आकाशस्सम्भूत" इति तदुत्पत्ति-श्रुतेरमानत्वेन अनुत्पत्तिश्रुतेः भाक्तत्ववर्णनस्याप्ययोगात्। "न जायते म्रियते" इत्यादौ अनुत्पत्तिवाचिशब्दस्य मुख्यार्थत्वादृ-ष्ट्या कारणेन विना द्वैरूप्यायोगेन इहापि मुख्यार्थत्वस्य न्या-य्यत्वादिति ॥ सिद्धान्तस्तु ॥ वियदुत्पत्तिमत् "आत्मनः आ-काशस्सम्भूतः" (तै. २-१) इत्याद्युत्पत्तिश्रुतेर्बाहुल्यात्। न च श्रुत्यन्तरविरोधः। वियच्छब्दितानां भूताकाशतदभिमानिनां प-राधीनविशेषावाप्तिरूपोत्पत्तिसम्भवेन तदुत्पत्तिश्रुतीनां तत्सर्व-विषयतया बहुविषयत्वेन वियदुत्पत्तिमत् अल्पशक्तित्वात् घट-वदित्यनुमानसध्रीचीनत्वेन प्राबल्यात्। तदन्यथानुपपत्त्या अ-नादित्वश्रुतेः बाहुल्येऽपि भूते कथमप्ययोगेन अल्पविषयतया दौर्बल्येन भाक्तत्वस्य न्याय्यत्वात् "प्राणः श्रद्धा आकाशः इति भागशो ह्युत्पद्यन्ते" इति (भाल्लवेय) श्रुतिसिद्धत्वाच्च एकस्या-नुत्पत्तिमच्छब्दस्य विरिञ्चब्रह्मणोः ब्रह्मशब्दस्येव "स इदं स-र्वमसृजते"ति प्रतिज्ञाविरोधेन च "आत्मा वा इदमेक एव अ-

ग्र आसीत्" इत्यादिप्रागुक्तोत्पत्तिश्रुतिबाहुल्यविरोधेन कारणेन आकाशब्रह्मणोः मुख्यामुख्यत्वस्य युक्तत्वात् इति। एवं प्रकृतिजीवचैतन्य कालवेदमहदहंमनोबुद्ध्यादीनामपि पराधीनविशेषावाप्तिरूपा जनिरुक्ता ध्येया। फले तु कृत्स्नजगत्कर्तृत्वाक्षेपसमाधी ॥ १ ॥

**॥ ॐ एतेन मातरिश्वा व्याख्यातः ॐ ॥ २ ॥**

अत्राकाशाद्वायुरित्यादि श्रौतक्रमाद्वा पूर्वोक्तन्यायातिदेशाद्वा सङ्गतिः। वायुशब्देन भूतमुख्यामुख्याभिमानिनां ग्रहणेऽपि मुख्य एव विवादहेतुसत्त्वात् तन्मात्र एवात्र विचारः। वायुरत्र प्रकरणेऽभिमतपराधीनविशेषावाप्तिरूपोत्पत्तिमान्नवेति सन्देहः। नोत्पत्तिमानिति प्राप्तम्। "तेजोबन्नान्याकाश इति तान्यनित्यानि वायुर्वाव नित्य" इति श्रुतेः। न चाकाशवद्वायोरपि जन्मवत्वे तेजोबन्नाकाशानामनुत्पत्तिपूर्वकं वायोर्नित्यत्वोक्तेरयोगात्। न चाकाशादिपदैः भूतानामेवोक्तेः ततो मुख्यवायोः स्वरूपनित्यत्वात् विशिष्य नित्यत्वोक्तिरिति वाच्यम्। भूतमात्रग्रहणे हेतोरभावात्। "तेजोबन्नान्याकाश इति तान्यचेतनानि वायुर्वाव चेतनः" इति श्रुतौ विशिष्य चेतनत्वोक्त्या सर्वजीवसाधारणस्वरूपनित्यत्वायोगाच्च। "कुविदङ्ग"ति (ऋ. ७-९१-१) मन्त्रोक्तसर्वदेवोपास्यत्वाच्च। "नोदयो न निम्लोच" इति श्रुत्या वायोरुदयास्तमयशून्यत्वाच्च वायुर्न जनिमान् परमनित्यत्वात् परमचेतनत्वादीशवदित्यादि युक्तेश्च। एवं नित्यत्वव्याप्यानेकहेतुमतोऽपि जनिमत्वे अनुभवविरोधादिति ॥ सिद्धान्तस्तु ॥

वायुर्देहसम्बन्धाख्यपराधीनविशेषावाप्तिरूपजनिमान् प्राणाद्वा-युरित्याद्युत्पत्तिश्रुतेः। अल्पशक्तित्वयुक्तेश्च। तादृशजन्यभाव-श्रवणाच्च। ईशवदस्यापि तादृशजनिमत्वाभावे तयोर्विरुद्धस्वा-तन्त्र्यापाताच्च। न चोक्तश्रुत्यादिविरोधः। स्वरूपातिरिक्तज्ञाने नित्यत्वाभिप्रायेण तस्य सर्वस्योपपत्तेरिति। फले तु प्राग्वत् ॥ २ ॥

**॥ ॐ असम्भवस्तु सतोऽनुपपत्तेः ॐ ॥ ३ ॥**

अत्रासम्भवजन्मनो नभःप्रभृतेर्जनिरिव ईशस्यापि जनि-रस्त्विति शङ्कनात्सङ्गतिः। सर्वकर्तृत्वेनोक्तो विष्णुः किं ज-निमान्नवेति सन्देहः। जनिमानेवेति प्राप्तम्। "असतः सद-जायत" इति (ऋ. १०-७२-२) सच्छब्दितेशस्य जन्मश्रुतेः। न च "न जायते म्रियते" (का. १-२-१८) इत्याद्यनादित्वश्रुतिवि-रोध इति। अस्याः स्वरूपानादित्वपरत्वेन जनिश्रुतेश्च पराधी-नविशेषावाप्तिपरत्वेन व्यवस्थोपपत्तेः। अन्यथा प्रागुक्तचित्प्र-कृत्यादावपि समानत्वात् देहानादित्वाविशेषादिति ॥ सिद्धान्त-स्तु ॥ देहानादित्वादिना चित्प्रकृतिसमस्यापि ईशस्य स्वतन्त्र-त्वादसतः कारणत्वानुपपत्तेश्च सदजायतेति श्रुतेः "ब्रह्म वा अ-सत् सद्वाव प्राणः" इति श्रुत्या वायोरीशजन्यत्वपरत्वात् न प-राधीनविशेषावाप्तिरूपोत्पत्तिमान् विष्णुरिति। फले तु कृत्स्नज-गत्कर्तृत्वाक्षेपसमाधी ॥ ३ ॥

**॥ ॐ तेजोऽतस्तथाह्याह ॐ ॥ ४ ॥**



एवमीशानीशयोरजन्मजन्मसिद्धौ कारणत्वेन प्रत्युक्तन्या-

येन तेजःप्रभृतेरीशजन्यत्वे च सिद्धे अन्यत्रान्यस्मादपि जन्मा-
स्य नेत्युच्यत इति सङ्गतिः । तेजो देवता भूतं च किम् ईशा-
दिव वायुदेवतातो जायते उतेशादेवेति सन्देहः । वायोरग्निरिति
श्रुतेर्वायोरेवेति प्राप्तम् । सा वायोर्द्वारमात्रपरेति वाच्यम् । तेन
विनापि स्रष्टुं शक्तौ ईशस्य द्वारवैयर्थ्यात् । अशक्तौ तु स्वात-
न्त्र्येण वायुजत्वस्यापि प्राप्तेः । तत्तेजोऽसृजतेति श्रुतेः ईशवायू-
भयजत्वेऽपि उपपत्तेः ईशमात्रपरत्वे चोक्तश्रुतिविरोधेनाप्रामा-
ण्यादिति ॥ सिद्धान्तस्तु ॥ ईशादेव स्वातन्त्र्येण जनिमत्तेजः
तत्तेजोऽसृजतेति श्रुतेः । अन्यदनपेक्ष्य स्रष्टुं शक्तस्यापि ईश-
स्य लीलया वायुशब्दितभूततद्देवताद्वारा तेजोभूततद्देवतासृष्ट्यु-
पपत्त्या वायोरग्निरिति श्रुतेः द्वारमात्रपरत्वे बाधकाभावेन त-
द्विरोधाभावाच्चेति । कारणत्वनये वायुशब्दस्येशे मुख्यत्वेन ते-
जोभूततद्देवतयोस्तज्जत्वसिद्धावपि तद्वद्वायुतद्देवतातोऽपि तयो-
र्जन्मेति शङ्कानिरस्यत इति भेदः । तदनन्यत्वनये साधनान्तर-
स्यास्वातन्त्र्यम् युक्तिप्राप्तं निरस्तम् । इह तु श्रुतिप्राप्तमिति ध्ये-
यम् । फले तु प्राग्वत् ॥ ४ ॥

**॥ ॐ आपः ॐ ॥५ ॥**

अत्र तेजसोऽनन्तरप्राप्तापां जनकविशेषश्चिन्त्यत इति स-
ङ्गतिः । अब्देवताभूतं च किं तेजोभूततद्देवतातोऽपि ईशादिव-
स्वातन्त्र्येणोत्पद्यते अथेशादेवेति सङ्गतिः । अग्नेरापः इति श्रु-
तेः तेजोभूततद्देवतातोपीति प्राप्तम् । न च "ब्रह्मैवेदमग्र आ-
सीत्तदपोऽसृजते"ति श्रुतिविरोधः । स्वेदस्य घर्मजत्वदृष्ट्या आ-

पस्तेजोजन्याः अप्त्वात् स्वेदादिवदिति युक्त्या तेजस एव "तद्यापोऽजायन्त" इति श्रुत्या च सध्रीचीनत्वेन बलवत्या प्राचीनश्रुत्या बाधितत्वेन अस्याः अमानत्वादिति ॥ सिद्धान्तस्तु ॥ तदपोऽसृजतेति श्रुतेः तेजोभूततद्देवतानामपीशादेव जन्म। अग्नेरापः श्रुतिस्तु "स इदं सर्वमसृजत" "कर्ता सर्वस्य वै विष्णु"रित्यादि श्रुतिस्मृतिगतसर्वशब्दमुख्यार्थत्वात् अन्यस्य स्वतः शक्त्यभावाच्च प्रागुक्तदिशा तत्र स्थितत्वात्तेनाबाधिकं जनयतीति द्वारमात्रपरेति ॥ ५ ॥

**॥ ॐ पृथिव्यधिकाररूपशब्दान्तरादिभ्यः ॐ ॥ ६ ॥**

एवमुक्तन्यायेनापि द्वारत्वे सिद्धे कुत्रद्वारतेति विशेषोऽत्र चिन्त्यत इति सङ्गतिः। आपः किम् ईशस्यान्नसृष्टौ द्वारमुत पृथिवी सृष्टाविति सन्देहः। "आप ऐक्षन्त" "ता अन्नमसृजन्त" (छा. ६-२-४) "अद्भ्यः पृथिवी"ति (तै. २-१) श्रुतिद्वयस्य परस्परविरुद्धार्थस्य निरवकाशतया निर्णयायोगेनामानतया न कस्यापि द्वारमिति प्राप्तम्।अन्नश्रुतेः "अद्भ्यो वा अन्नमुत्पद्यते" "ता अन्नमसृजन्त" (छां. ६-२-४) "अद्भ्यः एव तदन्नाद्यं जायत" (छां. ६-२-४) इत्यादि बहुवाक्यानां प्रसिद्धार्थपरत्वरूपगुणलाभेन "यत्र क्व च वर्षति तदेव भूयिष्ठमन्नं भवति" (छां. ६-२-४) "अन्नमशितं त्रेधा विधीयते" (छां. ८-५-१) इति वर्षजत्वरूपलिङ्गद्वारानुरोधेन प्रसिद्धान्नपरतया पृथिवीपरत्वायोगात्। ओषधीभ्योऽन्नमिति श्रुतिविरोधापत्त्या पृथिपदेनान्यस्य ग्रहणायोगाच्च। उक्तश्रुतिरोधादेव आपामुभयत्र द्वारत्व-

मित्यस्यायोगात्। बहुकल्पनापत्त्या च् अन्नस्योभाभ्यां जन्मेत्यस्याप्ययोगात् मुख्यार्थत्यागापातेन अद्भ्यः परम्परया अन्नजन्मेत्यस्याप्ययोगाच्च अमानं श्रुतिद्वयमिति ॥ सिद्धान्तस्तु ॥ अपौरुषेयत्वेन निर्दोषतया श्रुत्योरप्रामाण्यायोगेन अवश्यमर्थान्तरस्य वाच्यत्वात्। ता अन्नमसृजन्तेति श्रुतेः पुर्वत्र "तत्तेजोऽसृजते"ति "तदपोऽसृजते"त्युत्तरत्र च "तासां त्रिवृतं त्रिवृतमि"ति श्रवणेन अस्य भूतप्रकरणत्वात्। "यत्कृष्णं" तदन्नस्येति कृष्णरूपश्रवात्। तस्य च "कृष्णैव पृथिवी स्वत" इति (व्योमसंहिता) स्मृत्या पृथिवीलिङ्गत्वात्। लिङ्गप्रकरणाभ्याम् "आपश्च पृथिवी चान्नमि"ति (ऐ. २-३-१) श्रौतप्रयोगेण च अन्नशब्दस्य पृथिवीपरत्वात्। "यत्र क्व च वर्षति" (छा. ८-२-४) इत्यादिवाक्यद्वयस्थान्नशब्दस्य पृथिवीवाचकस्याप्यन्यथानुपपत्त्या लक्षणया "तेजोशितं" (छां. ८-५-३) इत्यादौ तैजसपरत्ववत् पार्थिवपरत्वोपपत्त्या लिङ्गविरोधाभावात्। अपां पृथिवीजन्मन्येव द्वारत्वमिति ॥ फले तु वस्त्वन्तरद्वारा साक्षात्सर्वकारणत्वस्याक्षेपसमाधी ॥ ६ ॥

**॥ ॐ तदभिध्यानादेव तु तल्लिङ्गात्सः ॐ ॥ ७ ॥**

एवमधिभूताधिदैवजन्मश्रुत्यविरोधमुक्त्वा तल्लयश्रुत्यविरोधमत्र वक्तीति सङ्गतिः । प्रस्तुतवियदाद्यधिभूताधिदैवानि जनिमत्वेनलीयन्त इति सिद्धौ तल्लयकर्ता किं रुद्रो विष्णुर्वेति सन्देहः । रुद्र एवेति प्राप्तं संहर्तुत्वेनैतस्यैव सुप्रसिद्धेः । "रुद्रो मा विशान्तक" इति (महाना. उ.) श्रुतौ अन्तकपदेन तस्य संहर्तु-

त्वोक्तेश्च। "यत्प्रयन्त्यभिसंविशन्ति" (तै. ३-१) "यमप्येति भुवनं साम्पराये" इत्यादि विष्णुसंहर्तृत्वश्रुतिस्तु विष्णुः न मारकः जनकत्वात् रक्षकत्वात् पित्रादिवदित्यादियुक्तिसहायरुद्रसंहर्तृत्वश्रुतिविरोधात् अप्रमाण्यात्। अत एव रुद्रसंहारद्वारत्वमपि अयुक्तमिति ॥ सिद्धान्तस्तु ॥ विष्णुरेव सर्वलयकर्ता "तस्याभिध्यानादि"ति (श्वे. १-१०) श्रुतावनादिनो विष्णवधीनत्वोक्त्या सादिविश्वलयः तदधीन इति कौमुत्यसिद्धत्वात्। "यमप्येति भुवनं साम्पराये स नो हरिः" "य इदं सर्वं विलापयति" "स्रष्टापाता च संहर्ता स एको हरि"रित्यादि श्रुतिस्मृतिषु विष्णुसंहर्तृत्वस्य स्पष्टं प्रतीतेश्च। रुद्रसंहर्तृत्वश्रुतिः "निमित्तमात्रमीशस्ये" (भा. १०-७१-१) त्यादिस्मृत्या कतिपयसंहारे रुद्रस्य द्वारत्वपरा। युक्तिस्तु पित्रादेरमारकत्वस्य ममतादोषप्रयुक्ततया पितृत्वादिप्रयुक्तत्वाभावेन निर्दोषलोकविलक्षणे हरौ तदनापादिकैवेत्यप्रयोजिकेति फलं तु जन्मादिसूत्रोक्तसंहर्तृत्वाक्षेपसमाधी ॥ ७ ॥

## ॥ ॐ विपर्ययेण तु क्रमोऽत उपपद्यते च ॐ ॥ ८ ॥

सर्वस्येशे लयसिद्धौ केन क्रमेणेत्यत्र चिन्तनात्सङ्गतिः। प्रकृताधिभूतानि किं जन्मक्रमानुरोधेन लीयन्ते व्युत्क्रमेण वेति सन्देहः। जन्मक्रमानुसारेणैवेति पूर्वः पक्षः ॥ "क्रमेणैवास्योत्पत्तिलया"वित्यादिक्रमलयश्रुतिबाहुल्यात्। व्युत्क्रमाद्विलयश्चेति श्रुतिस्तु लोके प्रायेणोत्पत्तिक्रमेण लयदर्शनयुक्त्यनुगृहीतेन च प्रबलया क्रमलयश्रुत्या बाधितत्वादिति ॥ सिद्धान्तस्तु ॥

व्युत्क्रमेणैव लीयन्ते "व्युत्क्रमाद्विलयश्चे"ति निरवकाशलयश्रु-तेः (भाल्लवेय)। क्रमलयश्रुतीनां तु "द्विविधः क्रम उद्दिष्टो व्यु-त्क्रमोऽनुक्रमस्तथा। सृष्टावन्यो लये चान्यः" इत्यादि श्रुत्या व्युत्क्रमस्यापि क्रमत्वेन सावकाशत्वेन लोके पूर्वोत्पन्नानां पू-र्वनाशस्य असामर्थ्यनिमित्तत्वादिह च "पूर्वं पूर्वं यतो विष्णो-रित्यादि (वामन)स्मृत्या पूर्वोत्पन्नानां सामर्थ्याधिक्येन पश्चा-दपि लयोपपत्या प्रागुक्तयुक्तेरप्रयोजकत्वात् व्युत्क्रमश्रुत्यबाधा-दिति॥ फलं तु लयश्रुत्या विरोधेनान्यतराप्रामाण्ये अन्यत्रा-प्यानाश्वासापातेन विष्णोस्संहर्तृत्वाद्यसिद्धेः तदाक्षेपसमाधी॥ ८॥

**॥ ॐ अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॐ ॥९॥**

**॥ ॐ चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॐ ॥**

पूर्वोक्त व्युत्क्रमेण लय इत्यस्य क्वचिदपवादशङ्कानिरासा-त्सङ्गतिः। प्रस्तुताधिभूतानि सर्वाणि व्युत्क्रमेण लीयन्ते किं वा कानिचित् क्रमेणेति सन्देहः॥ पूर्वपक्षस्तु॥ "मनसश्च विज्ञा-नमि"ति क्रमादुत्पन्नत्वेन श्रुतमनोविज्ञानतत्त्वयोः "यच्छेद्वाङ्म-नसी प्राज्ञस्तद्यच्छेत् ज्ञान आत्मनि" इति (का. उ. ३-१३) क्रमे-णैव लयश्रुतेः मनोविज्ञानतत्त्वे विना अन्यानि व्युत्क्रमेण लीय-न्ते इति न च मनसश्च विज्ञानमित्यत्र मनोविज्ञानशब्दौ न तत्त्व-परौ किन्तु अन्तःकरणावबोधपराविति युक्तम्। तयोश्शब्दयो-

र्मनोविज्ञानतत्त्वयोरेव मुख्यत्वेन निर्निमित्तं मुख्यार्थत्यागायोगात्। व्युत्क्रमाद्विलयश्चेति सर्वस्य व्युत्क्रमलयश्रुतिस्तु लोके केषाञ्चित्क्रमात् केषाञ्चिद्व्युत्क्रमात् लयदर्शनेन लोकानुसारित्वयुक्त्युपेतया मनोविज्ञानयोः क्रमलयश्रुत्या बाधितेति॥ सिद्धान्तस्तु॥ मनस्तत्त्वान्तरिन्द्रिययोः विज्ञानतत्त्वावबोधयोः क्रमेण मनोविज्ञानशब्दयोः प्रयोगदृष्ट्या तत्त्वमात्रवाचित्वाभावेनेन्द्रियादावपि मुख्यत्वात्। मनसश्चविज्ञानमित्यत्र "विज्ञानतत्त्वं महतः समुत्पन्नं चतुर्मुखादि"ति स्मृतिविरोधात्। तत्त्वविषयत्वायोगेन अन्तरिन्द्रियतज्जन्यावबोधपरतया मनोविज्ञानतत्त्वयोः यथोत्पत्तिलय इत्यत्र विशेषप्रमाणाभावात् "सर्वं वैतत्क्रमादुत्पद्यते व्युत्क्रमाद्विलीयत" इति सर्वव्युत्क्रमलयश्रुतेश्च सर्वाणि व्युत्क्रमेणैव लीयन्त इति॥ फले तु श्रुत्योर्विरोधेनाप्रामाण्ये तत्समन्वयेन प्रागुक्तस्रष्टृत्वसंहर्तृत्वाक्षेपसमाधी॥ ९॥

**॥ ॐ नात्माऽश्रुतेः नित्यत्वाच्च ताभ्यः ॐ ॥ १० ॥**

एवं ब्रह्मान्यस्य सर्वस्य व्युत्क्रमेण लये श्रुत्योक्ते तर्हि ब्रह्मणोऽपि सोऽस्त्विति शङ्कनात्सङ्गतिः। सर्वोत्पत्तिलयकर्तृत्वेन प्रकृतो विष्णुः देहनाशाख्यलयवान्नवेति सन्देहः। "स इदं सर्वं विलाप्यान्तस्तमसि लीयत" इति सोऽपि लीयत इति प्राप्तम्। नित्योऽनित्यानामिति श्रुतिस्तु विष्णुर्लयवान् चेतनत्वात् जीववदिति युक्त्युपेतपूर्वश्रुत्या बाधिता। न च लयश्रुतिः अपिहितत्वपरा कल्पकाभावात्। "असम्भवस्त्वि"त्यत्र (ब्र.सू २-२-९) ईशस्य स्वातन्त्र्येण हेतुना अनुपपत्त्युक्तावपि लीलया देहोपादा-

नयोगोपपत्तेरिति ॥ सिद्धान्तस्तु ॥ विष्णुः न देहनाशाख्यलय-वान् मानाभावात्। मनसि लीयते इति श्रुतेस्तु "तुच्छेनाभ्वपि-हितं यदासीदि"ति श्रुतौ (ऋ. १०-१२०-३) पूर्वत्र नासदासीदिति सर्वस्य लयमुक्त्वा तम आसीदिति प्रकृतेः स्थितिमुक्त्वा ब्रह्मण-स्त्वपिहितत्वस्य पुनः प्रादुर्भावस्य चोक्त्या "तमसि निलीनः प्र-कृतिं पुरुषं कालं चानुपश्यति नैनं पश्यति कश्चने"ति पैङ्गिश्रुत्य-न्तरेण च अपिहितत्वार्थत्वात् अन्यथा "नित्योऽनित्यानां" "स नित्यो निर्गुणः विभुरि"त्यादि बहुनित्यत्वश्रुतिविरोधात्। युक्ते-श्च श्रुतिविरोधेनामानत्वात् ॥ फले तु ब्रह्मणो लये सृष्ट्याद्ययोगेन तदाक्षेपसमाधी ॥ १० ॥

**॥ ॐ ज्ञोऽत एव ॐ ॥ ११ ॥**

॥ ॐ युक्तेश्च ॐ ॥

एवं सूचीकटाहन्यायेन अल्पमधिभूतादिविचारं कृत्वा इ-दानीम् आपादसमाप्ति बहुः जीवविचारः क्रियत इति सङ्ग-तिः। जीवः किमुत्पत्तिमान् उत नेति सन्देहः। नोत्पत्तिमा-निति प्राप्तम्। नित्योऽनित्यानामिति षष्ठ्यन्तनित्यपदेन जीवा-नां नित्यत्वोक्तेः "सर्व एते चिदात्मानो व्युच्चरन्ती"ति तदुत्प-त्तिश्रुतेस्तु जीवस्वरूपोत्पत्तिकारणानुपलब्ध्या कारणशून्यत्वा-दिति युक्त्युपेतया जीवनित्यत्वश्रुत्या बाधात्। न च स्वरूपो-त्पत्तिकारणशून्यानामपि वियदादीनां पराधीनविशेषावाप्तिरूप-जनिवत् जीवस्यापि सा सिद्धेति वाच्यम्। जन्मश्रुतेः तादृशो-त्पत्तिपरत्वे अनुत्पत्तिश्रुतेरपि ब्रह्मणीव जीवविषयतायामपि तद-

भावपरत्वोपपत्तेः अनेकार्थत्वस्यान्याय्यत्वात्। एवं च तद्विरोध-तादवस्थ्यमिति प्रागुक्तस्यैवात्राक्षेपादिति ॥ सिद्धान्तस्तु ॥ “ते वा एते चिदात्मानोऽविनष्टाः परंज्योतिर्निविशन्त्यविनिष्टा एवोत्पद्यन्ते” (काषायण श्रुतिः) इत्यविनाशेनैव जीवस्य स्वरूपेणानुत्पत्तावपि तदुपाध्युत्पत्त्या पराधीनविशेषावाप्तिरूपोत्पत्ति-परतया तदुत्पत्त्यनुत्पत्तिश्रुत्योः उपाधिस्वरूपपरतया विषयत्वेनाविरोधात्। ब्रह्मणि पराधीनविशेषावाप्तिरूपोत्पत्तिश्रुतेरभावेन तत्रानुत्पत्तिश्रुतेस्तदभावपरत्वेऽपि जीवादौ तच्छ्रुतिसत्त्वेन तदनुत्पत्तिश्रुतेस्तदभावपरत्वायोगेन अनेकार्थत्वस्य न्याय्यत्वाच्च देहसम्बन्धाख्य तादृशोत्पत्तिमान् जीव इति। फले तु सर्वस्रष्टृत्वाक्षेपसमाधी ॥ ११ ॥

**॥ ॐ उत्क्रान्तिगत्यागतीनाम् ॐ ॥ १२ ॥**

॥ ॐ स्वात्मनाचोत्तरयोः ॐ ॥ ॥ ॐ नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॐ ॥ ॥ ॐ स्वशब्दोन्मानाभ्यां च ॐ ॥ ॥ ॐ अविरोधश्चन्दनवत् ॐ ॥ ॥ ॐ अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॐ ॥ ॥ ॐ गुणाद्वा लोकवत् ॐ ॥

जीवे धर्मिणि उत्पत्त्यनुत्पत्ती चिन्तिते। अत्र तद्धर्मे परिमानेऽणुत्वमहत्वे चिन्त्येते इति सङ्गतिः। प्रकृतो जीवः किं व्याप्तोऽणुर्वेति सन्देहः। व्याप्त इति प्राप्तम्। “व्याप्ता ह्यात्मानश्चेतना निर्गुनाश्चे”ति (काषायण श्रुतिः) बहुवचनान्तात्मव्याप्तत्वश्रुतेः बहुत्वं भिन्नाश्रितमित्युत्सर्गन्यायापवादकस्य “ऋतं

पिबन्ता"वित्यादाविवेहाभावेन जीवपरत्वात्। "अणुर्ह्येष आ-त्मे"ति जीवाणुत्वश्रुतेस्तु अणुत्वे सर्वदेहसम्बन्धस्पर्शादिज्ञाना-योगेन तद्देहपरिमाणत्वेन स्पर्शादिपरिज्ञानमित्यस्य च "नैक-स्मिन्नसम्भवादि"ति (ब्र.सू. २-२-३३) नयोक्तदोषदुष्टत्या अयो-गेन सर्वदेहसम्बन्धस्पर्शादिज्ञानरूपयुक्त्युपेतत्वेन प्रबलश्रुतिवि-रुद्धायाः अप्रामाण्योपपत्तेः। न चांशव्याप्त्या स्पर्शादिज्ञानं यु-क्तमिति युक्तिरप्रयोजिकेति वाच्यम्। अंशानां चेतनत्वेन यु-गपदनेकेषाम् ऐकमत्यायोगेन विरुद्धक्रियस्य देहस्योन्मथनप्र-सङ्गात्। अक्रियत्वस्य वापत्तेः। स्वरूपव्याप्तेरेव व्याप्तित्वा-दिति॥ सिद्धान्तस्तु॥ "सोऽस्माच्छरीरादुत्क्रम्य अमुं लोक-मधिगच्छत्यमुष्मादिमं लोकमागच्छती"ति श्रुतोत्क्रान्तिगति-मत्वात् पतत्रिवदणुर्जीवः। तासां व्याप्तेर्गगनादावदृष्ट्या ताभि-र्व्याप्तत्वायोगेन अनित्यत्वाद्यापत्त्या निरस्तमध्यमपरिमाणे अ-णुत्वस्यैव सिद्धेः। "अणुर्ह्येष आत्मेति" (गौपवन) श्रुतेश्च। "व्याप्ताह्यात्मान" इति (काषायण) श्रुतेस्तु स आत्मेदं सृज-तीति विष्णुप्रकरणेन एषो ह्यात्माऽध्युद्गतो मानशक्तेरिति वाक्य-शेषे श्रुतात्मश्रुत्युन्मानत्वलिङ्गाभ्यां गुहानयन्यायेन बहुवचनस्य न्याय्यत्वाद्विष्णुपरा। देहैकदेशस्थचन्दनबिन्दोः स्वांशैः सर्व-देहव्याप्तिवज्जीवस्यापि हृदि ह्येष आत्मेति श्रुत्या हृद्देशे सम्यक् स्थितस्य स्वरूपांशैः सर्वदेहव्याप्त्या स्पर्शादिज्ञानसम्भवेन यु-क्तिरप्रयोजिकेति। फले तु श्रुतिसमन्वयाक्षेपसमाधी॥ १२॥

**॥ ॐ व्यतिरेको गन्धवत्तथा च दर्शयति ॐ ॥ १३ ॥**

अत्र यदि जीवोऽणुः तर्हि योगिनो बहुरूपत्वायोग इति पूर्वाक्षेप सङ्गतिः। जीवः किम् एकरूपोऽथवानेकरूप इति सन्देहः। एकरूप इति प्राप्तम्। स एकधा न सप्तधा इति श्रुतेः। विभावात्मनि योगप्रभावाद्देहबाहुल्येन बहुरूपसम्भवेऽपि अणौ तदयोगादिति युक्तेश्च। अणोरपि अंशैर्बहुरूपमित्यस्यापि "स नित्यो निरवयव" इति (गौपवन) निरवयवत्वश्रुतिव्याकोपेनायोगात्। योगिनोऽघटितघटकशक्त्या अब्धिपानमिव बाहुरूप्यं स्यादितित्वीश्वरसाम्यापातेनायुक्तम्। स पञ्चधा स सप्तधेति बाहुरूप्यश्रुतिस्तु सयुक्तिकैकरूप्यश्रुतिबाधितेति॥ सिद्धान्तस्तु॥ अणोर्भिन्नांशहीनस्यापि जीवस्य योगाराधिताचिन्त्यशक्तिकेश्वरप्रसादायत्तसामर्थ्याद्गन्धवदंशविभागेन बाहुरूप्यस्योपपत्तेः बहुरूपो जीवः। ऐकरूप्यश्रुतिस्तु स्वरूपैक्यपरा। निरवयवत्वश्रुतिरपि भिन्नांशराहित्यपरेति। फले तु प्राग्वत्॥ १३॥

**॥ ॐ पृथगुपदेशात् ॐ ॥ १४ ॥**

॥ ॐ तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॐ ॥

जीवेशयोरैक्यान्नजीवशक्तेरीशायत्तत्वमिति शङ्कनात्सङ्गतिः। जीवः किम् ईशेन भिन्नोऽभिन्नो वेति सन्देहः। अभिन्न इति प्राप्तं तत्त्वमसीत्यादौ पदद्वयलक्षणया जीवपरैक्य श्रुतेः। अस्याश्च एकमेवाद्वितीयमित्युपक्रमात् तत्त्वमसीत्युपसंहारात्। तत्त्वमसि तत्त्वमसीति नवकृत्वोऽभ्यासात्। ऐक्यस्य मानान्तराप्राप्त्या अपूर्वत्वात्। तस्य तावदेवचिरमिति फलवत्त्वात्। येनाश्रुतं श्रुतं भवतीत्यर्थवादात् मृण्मयादिदृष्टान्तेनोपपाद-

नाच्च ॥ अथ तृतीयोऽध्यायः ॥। षड्विधतात्पर्यलिङ्गोपेतत्वेन बाहुल्यात्। द्वासुपर्णेत्यादि श्रुतिरप्रमाणम्। अन्यथैक्यश्रुतेर्निर्विषयत्वापात इति ॥ सिद्धान्तस्तु ॥ "भिन्नोऽचिन्त्यः परमो जीवसङ्घात्पूर्णः परः जीवसङ्घोह्यपूर्णः" इति (कौशिक) भेदश्रुतिः कदाप्यैकाधिकरण्या योग्यधर्मकत्वरूपविरुद्धधर्माधिकरणत्वादि युक्त्युपेतत्वेन "शास्त्रगम्यपरेशानाद्भेदः स्वात्मन ईयते। अनुभूतिविरोधेन कथमेकत्वमुच्यत" इत्यनुव्याख्यानोक्तदिशा उपजीव्यत्वेन प्राबल्यात्। तद्विरोधेनानुभवविरोधेन च पदद्वयलक्षणतः तत्पदमात्रगौणार्थत्वस्य ज्यायस्त्वेन च तत्त्वमसीत्यादेः तदीयज्ञानानन्दादिसदृशगुणतया तत्सदृशस्त्वमसीत्यर्थकत्वोपपत्तेः ऐक्यपरत्वायोगात्। उपक्रमादेः मानन्तराविरुद्ध एव तात्पर्यगमकत्वात्। अन्यत्र अन्यथा व्याख्यातत्वाच्च भिन्न एव ईशाज्जीव इति ॥ १४ ॥

**॥ ॐ यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॐ ॥ १५ ॥**

"बन्धान्मोक्षं तत एवाभिवाञ्छेदि"ति पूर्वोक्तानादिबन्धानन्तरमोक्षाक्षेपेण शङ्कनात्सङ्गतिः । जीवः किं नित्योऽनित्यो वेति सन्देहः । अनित्य इति प्राप्तम् । ब्रह्मन् लयमभ्युपैतीति श्रुतेः । ज्ञोत एवेत्यत्रोपाधेर्जन्मोक्त्या प्रतिबिम्बस्य जन्मावश्यं भावात् । जनिमतश्च विनाशित्वनियमादिति युक्तेश्च । न च देहाख्योपाधेर्जनिमत्वेऽपि अन्य एव जीवोपाधिरनादिनित्य इत्यत्र कल्पकमस्तीति । जीवस्यानादिकर्मसम्बन्धानन्त्यप्राप्त्युक्त्या जीवानादित्वपरा "सोऽस्मिन् पुरुषे"त्यादि श्रुतिः स युक्तिकानित्यत्व-

श्रुतिविरोधादमानमिति ॥ सिद्धान्तस्तु ॥ "नित्यः परो जीवः सुखदुःखेत्वनित्ये" इत्यादि श्रुतिस्मृत्यन्यथानुपपत्त्याऽनादिनित्योपाधेरवश्यं कल्प्यत्वाज्जीवोपाधिर्द्विधा प्रोक्त इत्यादिवचनाच्च स्वरूपोपाधेरनादिनित्यतया सर्वगतबिम्बेशोपाधिसन्निधेरपि तथात्वेनादिनित्यो जीवः। लय श्रुतिस्तु बाह्योपाधिपरेति ॥ १५ ॥

**॥ ॐ पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॐ ॥ १६ ॥**

॥ ॐ नित्यो ग्लब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वान्यथा ॐ ॥

पूर्वत्र पृथगधिकरणाद्यसूत्रे बन्धान्मोक्षं तत एवाभिवाञ्छेदिति उपदेश उपपादितः। अत्र तु तदीयद्वितीयसूत्रोक्तं तद्गुणसारत्वमुपपाद्यत इति सङ्गतिः। जीवो ज्ञानानन्दादिरूपो न वेति सन्देहः। न ज्ञानानन्दादिरूप इति प्राप्तम्। "स दुःखाद्विमुक्त आनन्दी भवती"त्यादि श्रुतेः। इदानीं ज्ञानानन्दादिरूपतानुपलब्धेश्च। अहमिति जीवे भासमानेऽपि तत्स्वरूपस्यानन्दादेः प्रतिबन्धादनुपलब्धिरित्यस्यायोगेन ज्ञानाभावादन्यस्य भावरूपाज्ञानस्य प्रतिबन्धकस्याभावाच्च। देहादेस्तु सुखाद्यनुभवरूपभोगायतनत्वेन तत्प्रतिबन्धकत्वायोगाच्च। आनन्दादिरूपत्वे मोक्षाय प्रयत्नवैयर्थ्याच्च। "विज्ञानात्मा" (प.उ. ४-११) "स आनन्दः" इत्यादि श्रुतिस्त्वनुपलब्धियुक्त्युपेतानानन्दादिश्रुत्या बाधिता न मानमिति ॥ सिद्धान्तस्तु ॥ "नित्यानन्दो नित्यज्ञानो निर्मलः परमात्मा" "नित्यानन्दज्ञानबलमेवा" इ-

त्यादि श्रुतिस्मृतिभिः जीवस्य ज्ञानादिरूपतोक्तेः। बाल्येऽनभिव्यक्तपुंस्त्वादेः पश्चाद्व्यक्त्या पुमानित्युक्तिवत्प्राक् सतामेव ज्ञानानन्दादीनां पश्चादभिव्यक्त्या आनन्दीभवतीत्यादि भेदव्यपदेशस्य श्रुत्यादिषु सिद्धत्वात् सुखाद्यात्मकस्य आवरणानङ्गीकारे नित्यं तदुलम्भापातेन अवश्याभ्युपेयावरणविशेषशक्त्या अनुपल्ब्धेश्चोपपत्त्या सम्यग्व्यक्त्यर्थं प्रयत्नसम्भवाच्च ज्ञानादिरूपोऽयं जीवः इति श्रुतौ "एवं सुराः" इत्यध्याहारादिष्टसिद्धिः ॥ १६ ॥

**॥ ॐ कर्ता शास्त्रार्थवत्त्वात् ॐ ॥ १७ ॥**

॥ ॐ विहारोपदेशात् ॐ ॥ ॥ ॐ उपादानात् ॐ ॥ ॥ ॐ व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॐ ॥ ॥ ॐ उपलब्धिवदनियमः ॐ ॥ ॥ ॐ शक्तिविपर्ययात् ॐ ॥ ॥ ॐ समाध्यभावाच्च ॐ ॥ ॥ ॐ यथा च तक्षोभयथा ॐ ॥

अस्त्वानन्दादीनां सतामभिव्यक्तिः न तु कर्तृत्वस्य तस्य कदाप्यभावादिति शङ्कनात्सङ्गतिः। जीवः किं कर्ता न वेति सन्देहः। न कर्तेति प्राप्तम्। नान्यः कर्तेति श्रुतेः। सर्वत्रेशस्यैव कर्तृत्वाङ्गीकारे लाघवाच्च। इतरव्यपदेशादित्यादौ हिताकरणादीत्युक्त्या जीवकर्तृत्वस्य निषेधाच्च। न च श्रुतिसूत्रयोः स्वतन्त्रकर्तृत्वनिषेधेऽपि परतन्त्रं तदस्त्विति वाच्यम्। पारतन्त्र्यस्य कर्तृत्वशक्तेः स्वाधीनत्वेऽपि तक्ष्णः प्रासादकारयितृपुमधीनत्ववत् वेतनदानादिना ईशाधीनरूपत्वे आत्मानमन्तरोऽयमयतीति श्रुतिविरोधात् दारुयोपावदीशाधीनचेष्टकत्वे कर्तृत्वस्याकर्तृत्व एव पर्यवसानात् तद्वदेव विधिनिषेधायोग्यः स्यात्।

एवं सयुक्तिकाकर्तृत्वश्रुतिविरोधात् “यत्कर्म कुरुते तदभिसम्पद्यते” इति जीवकर्तृत्वश्रुतिरमानमिति जडेशमुक्तानामप्रवृत्तस्य विधिनिषेधाख्यशास्त्रस्य अर्थवत्त्वान्यथानुपपत्तिरूपयुक्त्या मोक्षाद्यर्थसाधनानुष्ठानदर्शनात् प्रत्यक्षेण “आत्मानमेव लोकमुपासीते” त्यादावुपासनादिक्रियायां जीवस्य कर्तृत्वश्रवणेन च कर्तृत्वसिद्धेः अपूर्णशक्तित्वापूर्णकामत्वहेतुभ्यां “कर्तृत्वं करणत्वं चे”ति श्रुत्या च तस्य पारतन्त्र्यसिद्ध्या दारुयोषावदीशधीनचेष्टकत्वरूपपरतन्त्रकर्तृत्वाङ्गीकारेण प्रागुक्त श्रुतिस्मृतिविरोधाभावात् अन्वयव्यतिरेकाभ्यां पराधीनकर्तृत्वशक्तिकत्वस्यैव विधिनिषेधयोग्यत्वे तन्त्रत्वकल्पनेन विधिनिषेधशास्त्रावैयर्थ्यात् कर्ता जीव इति ॥ १७ ॥

**॥ ॐ अंशो नानाव्यपदेशादन्यथा चापि**
**दाशकितवादित्वमधीयत एके ॐ ॥ १८ ॥**

॥ ॐ मन्त्रवर्णात् ॐ ॥ ॥ ॐ अपि स्मर्यते ॐ ॥ ॥ ॐ
प्रकाशादिवन्नैवं परः ॐ ॥ ॥ ॐ स्मरन्ति च ॐ ॥ ॥ ॐ
अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् ॐ ॥ ॥ ॐ
असन्ततेश्चाव्यतिकरः ॐ ॥ ॥ ॐ आभास एव च ॐ ॥

परात्तु तच्छ्रुतेरिति पूर्वोक्तयोर्जीवेशयोः उपजीव्योपजीवकत्वरूपसम्बन्धः अत्र प्रसाध्यत इति सङ्गतिः। जीवः किम् ईशस्यांशत्वेनानंशत्वेन वा निर्णेतुं शक्यो न वेति सन्देहः। न शक्य इति प्राप्तम्। तथाहि। न तावदंशत्वनिर्णयः शक्यः। “अंशा एव हीमे जीवा” इति (गौपवन) अंशत्वश्रुतेः। अंशा

एव हीत्युक्तेः न व्रीहियववद्विकल्पेऽपि विशेषप्रमाणाभावात् न षोडशिग्रहणाग्रहणवत् देशकालादिभेदेन च व्यवस्थितविकल्पोऽपि। अतो न मानं श्रुतिद्वयमिति॥ सिद्धान्तस्तु॥ जीवः पुत्रादिः पित्रादेरिवेशपोऽष्यत्वादिना तद्गर्भवासित्वेन तदन्तर्भूतत्वात्तदुपजीव्यत्वेन तत्सम्बन्धिरूपतया वा ततो न्यूनत्वे सति किञ्चित्तत्सदृशतया तदंश एव। "अंशो ह्येष परस्ये"ति प्रकृत्य "नानाह्येनं व्यपदिशन्ति पितेति पुत्रेति भ्रातेति" इति नानाप्रकारेण सम्बन्धोक्त्या तथा "अन्यः परोऽन्यो जीव" इति "ब्रह्म दाशा ब्रह्मकितवा" इति च श्रुतिद्वये भेदाभेदोक्त्यन्यथानुपपत्त्या द्विरूपांशत्वसिद्धेः। "पादोस्यविश्वाभूतानी"ति मन्त्रवर्णात् "ममैवांशो जीवलोके" इति स्मरणाच्चानंशश्रुतेः स्वरूपांशनिषेधपरत्वोपपत्तेः तेजोऽभिमान्यंशयोः कालाग्निखद्योताभिमानिनोरिव "एते स्वांशकलाः पुंसः" इत्यादि भाष्योक्तस्मृत्यादिसिद्धास्वरूपस्वरूपांशत्वाभ्यां यथा सूर्यांशयोः प्रभाभिमान्यपभ्रष्टाभिमानिनोरिव स्वायत्तप्रवृत्तिराहित्यतद्वत्ताभ्यां पूर्णशक्तित्व तदभावाभ्याम् ईशाप्रतिबिम्बत्वतत्प्रतिबिम्बत्वाभ्यां च मत्स्यादीशावतारजीवयोः ईशांशत्वाविशेषेऽपि साम्यानापत्तेः श्रुतिद्वयाविरोधान्मानमेवेति॥ १७॥

**॥ ॐ अदृष्टानियमात् ॐ ॥ १९ ॥**

॥ ॐ अभिसन्ध्यादिष्वपि चैवम् ॐ ॥ ॥ ॐ प्रादेशादिति चेन्नान्तर्भावात् ॐ ॥

अवतारेण जीवस्यास्माभ्ये पूर्वहेतूकृतप्रतिबिम्बत्वाक्षेपेण श-

ङ्गनात्सङ्गतिः। जीवः किम् ईशप्रतिबिम्बो न वेति सन्देहः। नेति प्राप्तम्। "न सम्बन्धो नापेक्ष्यः जीवः परस्ये"ति बिम्बप्रतिबिम्बभावरूपसम्बन्धनिषेधश्रुतेः सुरासुरनरतिर्यगादिवैचित्र्योपेतत्वात् घटादिवत्। जीवा नैकप्रतिबिम्बा इति युक्तेश्च। रूपं रूपं प्रतिरूपो बभूवेति श्रुतिस्तु सयुक्तिकपूर्वश्रुतिविरोधादमानमिति॥ सिद्धान्तस्तु॥ बिम्बस्यैकरूपत्वेऽपि जीवस्यानादिस्वरूपोपाधि अविद्याकर्मादिवैचित्र्येण प्रतिबिम्बवैचित्र्योपपत्तेः। रूपं रूपमिति श्रुतेः प्रतिबिम्बो जीवः। न सम्बन्ध इति श्रुतिः भिन्नोपाध्यायत्तत्वरूपप्रतिबिम्बत्वनिषेधपरेति॥ अत्र प्रतिनयं समन्वयाक्षेपसमाधी फले वक्तव्ये॥ इति शीमद्राघवेन्द्रयतिकृतायां न्यायमुक्तावल्यां द्वितीयाध्यायस्य तृतीयः पादः॥

## अथ चतुर्थः पादः

**॥ ॐ तथा प्राणाः ॐ ॥ १ ॥**

॥ ॐ गौण्यसम्भवात् ॐ ॥ ॥ ॐ प्रतिज्ञानुपरोधाच्च ॐ ॥

अत्र पूर्वेण सङ्गतिः प्रागेवोक्ता। अत्र प्राणा किमुत्पत्तिमन्तो न वेति सन्देहे नेति प्राप्तम्। "प्राणा एवेदमग्र आसु"रित्यनादित्वश्रुतेः। न च स इदं सर्वमसृजतेति (तै. २-३) श्रुतिविरोधः। सामान्यव्यवधानाभावरूप स्पष्टार्थतयाऽनवकाशया प्राचीनविशेष श्रुत्या सामान्यश्रुतेर्बाधाअत्। न च "एतस्माज्जयते प्राणो मनस्सर्वेन्द्रियाणि चे"ति (मुं. २-१-३) विशेष



श्रुतिविरोधः। "नोपादानं हीन्द्रियाणामि"ति स्मृत्युक्तनिरूपा-

दानत्वयुक्त्या श्रुतेर्बाधादमानमिति ॥ सिद्धान्तस्तु ॥ "स प्राणमसृजत" "स प्राणान्" "एतस्माज्जयते प्राण" इत्यादि विशेषश्रुत्या "स इदं सर्वमि"ति सामान्यश्रुतिसध्रीचीनया तथाल्पशक्तित्वादिवियन्नयिक्तयुक्त्या च प्राणानां जन्मसिद्धेः । "नित्यान्येतानि सौक्ष्म्येणे"ति (भविष्यत्पर्व) स्मृत्या सूक्ष्मरूपेणानादित्वनिरूपादानवत्वेऽपि सृष्टिकाले भूताद्यवयवोपचयसत्त्वेन जन्मोपपत्त्या सावकाशानादित्वश्रुतियुक्तिबाधाभावात् प्राणा उत्पत्तिमन्त इति । अत्रापि प्रतिनयं प्राग्वदेव पूर्वोत्तरपक्षफले ॥ १ ॥

**॥ ॐ तत्प्राक् श्रुतेश्च ॐ ॥ २ ॥**

अत्र प्रकृतप्राणान्तर्गतमनोजन्मसमर्थनात्सङ्गतिः । मनः किं जनिमन्नवेति सन्देहे नेति प्राप्तम् । "नित्यं मनोऽनादित्वात् न ह्यमनाः पुमान् तिष्ठत्यनित्यान्यन्यानि" इति (गौपवन) श्रुतेः । अस्याश्चेन्द्रियान्तराणामनित्यत्वमुक्त्वा मनसो विशिष्यनित्यत्वोक्त्या विशेष श्रुतित्वेनैतद्विरोधात् । मनोजन्मश्रुतिबलेन प्रागिवोपपत्तेरयुक्तत्वात् । मनसः सादित्वे तन्मूलसंसारस्यापि सादित्वापत्तेश्च जन्मश्रुतिरमानमिति ॥ सिद्धान्तस्तु ॥ मनस्सर्वेन्द्रियाणि चेति इन्द्रियेभ्यः पृथक् मनसो जन्मोक्त्या विशेषश्रुत्या मनोजन्मसिद्धेः । अल्पोपचयकारणादिति (वायुप्रोक्त) स्मृत्या इन्द्रियोपचयादस्यानादित्वाविघातेनाल्पोपचयहेतुना नित्यं मन इत्यादिश्रुत्युपपत्तेः । बन्धसादित्वापत्यभावाच्च उत्पत्तिमदेव मनः इति ॥ २ ॥

**॥ ॐ तत्पूर्वकत्वाद्वाचः ॐ ॥ ३ ॥**

अत्र प्राणान्तर्गतमनोजन्माक्षिप्य समर्थनात्सङ्गतिः। वागिन्द्रियमुत्पत्तिमन्नवेति सन्देहे नेति प्राप्तम्। "वाग्वाव नित्या नह्येषोत्पद्यतेऽस्यां हि श्रुतिरवतिष्ठते" इति (पौष्यायण) श्रुतेः सदा वेदोच्चारणसामर्थ्यरूपश्रुत्याश्रयत्वरूपवाक्यशेषोक्तयुक्तेश्च। एतच्छ्रुतिविरोधेन च सूक्ष्मरूपोपचितरूपपरे जन्माजन्मश्रुतीति निरस्तम्। नित्यं वेदोच्चारणशक्तस्योपचयवैयर्थ्यात् श्रुत्याश्रयत्वोक्त्यैव वाक्शब्दः श्रुतिपरः नेन्द्रियपर इति प्रत्युक्तम्। अतस्सर्वेन्द्रियाणि चेति वाग्जन्मश्रुतिरमानमिति ॥ सिद्धान्तस्तु ॥ "मन एव पूर्वरूपं गावुत्तररूप"मिति श्रुतौ (ऐ.आ. ३-१-१) वाचः मनःकारणकत्वश्रवणात्। वाक्शब्दस्य च वाचा व्याहरतीति पूर्ववाक्यबलेन "मनसो वाव वागुत्पद्यते वाचो व्याहरण" मिति श्रुत्यन्तरे चोक्तवाक्यबलेन इन्द्रियपरत्वात्। "वागिन्द्रियस्य नित्यत्वं श्रुतिसन्निधियोग्यते"ति (वायुप्रोक्त) स्मृत्या नित्यवेदसन्निधिमात्राभिप्रायेण उपचारेण नित्यत्वश्रुत्युपपत्तेः। तदुच्चारणशक्तये चोपचयसार्थक्यात्। जन्मश्रुत्योत्पत्तिमदेव वागिन्द्रियमिति ॥ ३ ॥

**॥ ॐ सप्तगतेर्विशेषितत्वाच्च ॐ ॥ ४ ॥**

॥ ॐ हस्तादयस्तु स्थितेऽतो नैवम् ॐ ॥

प्राणानां धर्मितामाश्रित्य जनिश्चिन्तिता। सङ्ख्यारूपधर्माश्रयात् जनिश्चिन्त्यत इति सङ्गतिः। प्राणास्सप्त उत द्वादशेत्यनिर्णय उतद्द्वादशेतिनिर्णय इति सन्देहे अनिर्णय इति प्राप्तम्।

"सप्तप्राणा प्रभवन्ती"ति "द्वादश वा एते प्राणाः द्वादशमासाः द्वादशादित्या" इति विरुद्धसङ्ख्यावगमश्रुतिद्वयात्। न च प्राणानां द्वादशत्वेऽपि पञ्चाशन्न्यायेन सप्तत्वश्रुतिर्घटत इति वाच्यम्। अवच्छेदकाभावे सप्तत्वाद्युक्तेरयोगात्। एतैस्सह पञ्चानामपाठे हेत्वभावेन तदभावप्रतीतेश्च। "सप्तैव मारुता बाह्ये प्राणास्सप्त तथात्मनि" इति (स्कान्द) स्मृत्युक्त्या अभिमानिनां सप्तत्वेन तदभिमतानामपि तथात्वम् अभिमानि अभिमन्यमानयोः समसङ्ख्याकत्वनियमादितियुक्त्या सप्तत्वश्रुतेः प्राबल्यात्। द्वादशत्वश्रुतेरपि द्वादशमासा इत्यादिवाक्यशेषोक्त प्रागुक्तयुक्त्युपेतत्वेन प्राबल्यात् वाक्यशेषोदितानां द्वादशादित्यादिदेवताकत्वेन इन्द्रियाणामपि ता एव देवता इति भावेनैव द्वादशमासा इत्याद्युक्तेरिति ॥ सिद्धान्तस्तु ॥ प्राणानां द्वादशत्वेऽपि "गुहाशयां निहिताः सप्तसप्ते"ति (मु. २-१-८) वाक्यशेषोक्तज्ञानेन्द्रियत्वावच्छेदकविवक्षया श्रोत्रचक्षुस्त्वग्रसनघ्राणमनोबुद्धीनां सप्तत्वोक्त्युपपत्तेः वाक्पाणिपादपायूपस्थानां कर्मेन्द्रियत्वरूपवैलक्षण्येन सप्तत्वश्रुतौ सप्तभिस्सहपाठाभावोपपत्त्या तन्मात्रेण इतरेषामभावशङ्कायोगेन द्वादशत्वश्रुत्या द्वादशेति निर्णय एवेति ॥ ४ ॥

**॥ ॐ अणवश्च ॐ ॥५॥**

पूर्वत्र प्राणानां सङ्ख्या विचारिता। अत्र तत्प्रमाणं चिन्त्यत इति सङ्गतिः। प्राणाः किम् अणवः उत व्याप्ता इति सन्देहे व्याप्ता इति प्राप्तम्। "दिवीव चक्षुराततमि" ति (ऋ. १-२२-२०) व्याप्तत्वश्रुतेः। व्याप्तत्वे दृष्टान्तत्वेन चक्षुर्ग्राह्यत्वोक्त्या दूरश्रवण-

दर्शनस्मरणादियुक्त्या चास्याः प्राबल्याच्च सुदृढस्यैव दृष्टान्तीकरणाच्च । "अणुभिः पश्यती"त्यणुत्व श्रुतिस्तु (कौण्डिन्य) प्रबलव्याप्तत्वश्रुतिबाधादमानमिति ॥ सिद्धान्तस्तु ॥ "तद्यथा ह्यणुनश्चक्षसः प्रकाशो व्यातत एवमेवास्य पुरुषस्य प्रकाशो व्याततः अणुर्ह्येवैष पुरुषो भवति" (शाण्डिल्य श्रुति) इति श्रुत्या आत्माणुत्वादौ चक्षुषो दृष्टान्तत्वोक्त्या विशेषश्रुतित्वेन च बलवत्वात् अणुत्वाद्युक्तेः । स्वरूपेण प्राणानामणुत्वेऽपि तेजसा व्याप्तत्वोक्त्या दूरश्रवणदर्शनाद्युपपत्तेः । सामान्यतो व्याप्तत्वश्रुतेरपि प्रकाशपरत्वव्याप्तिपरत्वोपपत्तेः । प्राणानां स्वरूपतो व्याप्तौ सर्वापरोक्षप्रसङ्गेन सुप्त्यभावापाताच्च अणवः प्राणा इति ॥ ५ ॥

**॥ ॐ श्रेष्ठश्च ॐ ॥ ६ ॥**

॥ ॐ न वायुक्रिये पृथगुपदेशात् ॐ ॥

प्राणानां चिन्तानन्तरं तत्प्रेरकचिन्तात्रेति सङ्गतिः । मुख्यप्राणः किं जनिमान्नवेति सन्देहे नेति प्राप्तम् । "नैषप्राण उदेति" इति श्रुतेः "यत्प्राप्तिर्यत्परित्यागः उत्पत्तिर्मरणं तथे"त्युक्तस्मृत्युक्त्या अखिलोत्पत्तिमृत्युप्रदत्वेन उत्पत्याद्ययोग इति युक्त्युपेतत्वेन सप्राणमसृजतेत्यादि केवलजनिश्रुतितोऽस्याः प्राबल्यात् । जनिश्रुतिश्च प्राणपदस्य "चेष्टायां बाह्यवायौ चे"त्यादेः चेष्टादिवाचित्वेनाप्युपपत्तेश्च । न चैतत्तु "एतेन मातरिश्वा व्याख्यातः" (ब्रा.सू. २-३-८) इत्यनेनैव गतार्थम् । तत्र बाह्यमुख्यवायुरूपस्य जननोक्तावपि इहाध्यात्मिक प्राणादिरूपस्य तन्नयुक्तम् । तस्य अखिलजनिमृतिहेतुत्वात् ।

तादृशस्य दुःखहेतुत्वजननाय प्रवृत्त्ययोगादित्यधिकशङ्कया अस्योत्थानादिति ॥ सिद्धान्तस्तु ॥ "सौक्ष्म्येण ह वा एषोऽवतिष्ठते स्थूलत्वेनोदेति" इति (गौपवन) श्रुतौ प्राणस्य स्वभावतो देहादितश्चानुत्पत्त्युत्पत्त्युक्त्या जननाजननश्रुत्योः तत्परत्वेनाविरोधात्। जन्मश्रुतिस्थप्राणपदस्य तद्वाक्यशेषे "प्राणाच्छ्रद्धा खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नमन्नाद्वीर्यं तपो मन्त्राः" कर्म चेत्यादेः पृथगुक्त्या चेष्टादिपरत्वायोगेन मुख्यप्राणपरत्वात् जनिमानेव मुख्यप्राणः। तस्य स्वतोऽनन्यजन्मयोगेऽपि अतिमाहात्म्यवद्विष्णुजातत्वस्य सप्राणमिति श्रुतावेवोक्त्या ततस्तस्य जननोपपत्तिरिति ॥ ६ ॥

**॥ ॐ चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॐ ॥ ७ ॥**

॥ ॐ अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॐ ॥

प्रागुक्तप्राणस्य जनिरिह पूर्वपक्षे स्वातन्त्र्यादाक्षिप्यत इति सङ्गतिः। अत्र मुख्यप्राणः किं स्वतन्त्रः परतन्त्रो वेति सन्देहः। स्वतन्त्र इति प्राप्तम्। "न प्राणः किञ्चिदाश्रितः" इति (आग्निवेश्य) श्रुतेः। "यदाश्रयादस्य चेष्टा" (महाभारत) इत्यादिस्मृत्युक्त्या अखिलजगच्चेष्टकमाहात्म्यवत्त्वेन अनन्याश्रयत्वयुक्त्युपेतत्वेन अस्याः "प्राणः परवशे स्थितः" इति (पैङ्गिश्रुति) पारतन्त्र्यश्रुतितः प्राबल्याच्च। स्वातन्त्र्य श्रुतियुक्तिविरोधादेव प्रागुक्तजन्मश्रुतीनामप्रामाण्यात्। "स्थूलत्वेनोदेति" (गौपवन) श्रुतेश्च लीलाविग्रहग्रहणपरत्वेनोपपत्तेश्च प्रागुक्तयुक्तेः जनिरयुक्तेति ॥ सिद्धान्तस्तु ॥ मुख्यप्राणः परतन्त्रः "सर्वं ह्येवैत-

त्परमेव तिष्ठते प्राणश्च प्राणाश्चे''ति चक्षुरादिप्राणैः सह तद्व-देव तस्येशवशत्व (गौपवन) श्रुतेः। अस्याश्च ''यतो नैवेश्वर-द्वयमि''ति वचनोक्तेश्वरद्वया योगरूपयुक्तिसध्रीचीनत्वेन प्राब-ल्यात्। ''प्राणस्यैतद्वशे सर्वं प्राणः परवशे स्थितः'' इति च (पै-ङ्गिश्रुतिः) स्वातन्त्र्यश्रुतियुक्योस्तु अवान्तरेश्वरत्वेन ''तस्येश्वर-वचो भवेदि''त्यादि तदनन्येश्वरत्वावान्तरेश्वरत्वपरत्वात्। च-क्षुरादिसाम्येश्वरशब्दोक्तादपि सुषुप्तौ जीवप्रयत्नाभावे चक्षुरादी-नां मुख्यप्राणस्य व्यापारदृष्टिदृष्टिभ्यां कर्तृप्रत्योज्यत्वाप्रयोज्यत्व-दृष्ट्या ''तानि ह वा एतानि सर्वाणि करणानि'' (माण्डव्यश्रुति) इत्यादि श्रुत्या च करणाकरणत्वाख्यवैलक्षण्यातिशयेन अवा-न्तरेश्वरत्वस्योपपत्तेश्चेति ''सोऽध्यक्ष'' (ब्र.सू. ४-२-४) इत्यतो गतत्वमस्य तत्रैव वक्ष्यते ॥ ७ ॥

**॥ ॐ पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॐ ॥ ८ ॥**

मुख्यप्राणप्रसङ्गसन्निधापिताः प्राणादयोऽत्र चिन्त्यन्त इति सङ्गतिः। प्राणादयः पञ्च मुख्यदासत्वेन स्वरूपत्वेन वा निर्णेतुं शक्यते न वेति सन्देहे नेति प्राप्तम्। ''सर्वे वा एते मुख्यदासा'' इति दासत्वश्रुतेः। ''एष प्राणः इतरान्प्राणान् पृथक्पृथगेव स-न्निधत्ते'' (षट्प्रश्न ३-३) इत्यादिश्रुत्या ''प्राणापानादयस्सर्वे'' इ-त्यादि स्मृत्य चोक्तया तदाज्ञया कर्मकारित्वादिति युक्त्युपेतत्वेन प्राबल्यात्। मुख्यस्यैव स्वरूपाणि प्राणाद्या इति (गौपवन) स्व-रूपत्वश्रुतेरपि स्वरूपत्वसाधकव्यक्तसद्गुणत्वयुक्त्युपेतत्वेन प्रा-बल्यात्। श्रूयते च ''पायूपस्थेऽपानं चक्षुःश्रोत्रे मुखनासिका-

भ्यां प्राणः स्वयं प्रतिष्ठते" (ष.प्र. ३-४) इत्यादौ व्यक्तसद्गुणत्वं तेषाम्। न ह्येतद्दासेषु युक्तं स्वामिभृत्यभावायोगात्। वस्तुनि विकल्पायोगेन श्रुत्योर्विरुद्धार्थत्वेनाप्रामाण्यादिति ॥ सिद्धान्तस्तु ॥ "अथ पञ्चवृत्त्यैतत्प्रवर्तते" इत्यादिश्रुतौ मनोदृष्टान्तेन पञ्चदासत्वेन पञ्चस्वरूपत्वेन मुख्यप्रानस्योक्त्या पृथगुभयविधाङ्गीकारेण श्रुत्योर्युक्तियुक्त्योरविरोधेनाप्रामाण्याभावात्। "इतरान् प्राणान्" इति दासानुपक्रम्योक्तव्यक्तसद्गुणत्वस्य च "अशेषगुणपूर्णानि मुख्यरूपाणि पञ्च च। तद्दासाः पञ्च चान्येऽपि प्राणाद्याः सद्गुणैर्युताः" इति श्रुत्या स्वरूपतद्दासानां तारतम्येनोपपत्त्या स्वामिभृत्यभावाविरोधात्। इतरान् प्राणानिति दासानुपक्रम्य पायूपस्थेपानमित्यादिनोक्तं व्यक्तसद्गुणत्वं दासानामपि किञ्चिद्युक्तमिति प्राणादयो द्वेधा निर्णेतुं शक्यन्त एवेति ॥ ९ ॥

## ॥ ॐ अणुश्च ॐ ॥९ ॥

प्रागुक्तप्राणादिप्रेरकत्वाधिकसद्गुणत्वाय प्राणस्य विभुत्वमप्यस्त्विति शङ्कनात्सङ्गतिः। प्राणो व्याप्तोऽणुर्वेति सन्देहे व्याप्त इति प्राप्तम्। "प्राणा एवाधस्तात्" इत्यादि व्याप्तत्वश्रुत्या "यतस्सर्वं जगद्व्याप्य तिष्ठति" इत्यादि (वायुप्रोक्त) स्मृत्युक्तसर्वजगद्व्यापकत्वयुक्तियुक्त्या "प्राणो वाणु"रिति (सौत्रायण) अणुत्वश्रुतितः प्रबलया व्याप्तत्वोक्तेः। न चैवं वैष्णवत्वेन सावकाशा। महान् वै मुख्यप्राणः येन व्याप्तं चराचरम्" इत्यादि श्रुत्यन्तरे स्पष्टं मुख्यप्राणस्य व्याप्तत्वप्रतीतेश्चेति ॥ सिद्धान्तस्तु ॥ "एष प्राणोऽणुर्महान्नाम" (कौपिडपय) इत्यादिश्रुत्या देहान्तर्बहिर्वर्त-

मानप्राणवायुशब्दितभेदेन अणुत्वमहत्वयोर्व्यवस्थोक्तेः । "अ-णुर्वै मुख्यप्राणः यदुत्क्रामति नाडीभिः" इति अणुत्वश्रुतिरपि नाडीसञ्चारित्वयुक्तियुक्तत्वेन बलवत्वादिति ॥ ९ ॥

**॥ ॐ ज्योतिराद्यधिष्ठानं तु तदामननात् ॐ ॥ १० ॥**

॥ ॐ प्राणवता शब्दात् ॐ ॥ ॥ ॐ तस्य च नित्यत्वात् ॐ ॥

प्राणान् मुख्यप्राणं च निरूप्य इह तेषां कं प्रति करणत्व-मिति चिन्त्यत इति सङ्गतिः । चक्षुरादीन्द्रियाणि किं जीवक-रणानि उत ब्रह्मकरणानीति विशये जीवकरणानीति प्राप्तम् । "जीवस्य करणान्याहुः प्राणान्" इति (सौत्रायण) श्रुत्या जी-ववशत्वेनानुभूयमानत्वयुक्तियुक्तत्वेन ब्रह्मणो वा एतानि कर-णानीति ब्रह्मकरणत्वश्रुतितः प्राबल्यात् जीवकरणत्वोक्तेरिति ॥ सिद्धान्तस्तु ॥ "यश्चक्षुषि तिष्ठन्" (बृ. ५-७-१८) इत्यादि श्रुत्या चक्षुरादीन्द्रियस्य ब्रह्माधिष्ठानत्वोक्त्या तथा "यस्तेजसि तिष्ठ-न्नि"त्यादिना तेजःप्रभृतिभूतप्रेरकत्वोक्त्या तदंशभूत चक्षुरादेरपि ब्रह्मप्रयोज्यत्वमिति युक्तिबलात् तथा "यः प्राणे तिष्ठन्नि"त्यादि श्रुतेः सर्वेन्द्रियप्रेरकप्राणप्रेरकत्वयुक्तिबलाच्च ब्रह्मकारणान्येवे-न्द्रियाणि मुख्यस्येशप्रयोज्यत्वेऽपि "न जीवापेक्षया मुख्यम्" इति (वाराह) स्मृतेः जीवं प्रति करणत्वं युक्तम् । इन्द्रियाणां जीवकरणत्वश्रुतिस्तु "एषह्यनेनात्मना चक्षुषा दर्शयती" (भा-लवेय)त्यादि श्रुतौ "करणैः कारणं ब्रह्म" इति (वाराह)स्मृतौ च ब्रह्मणः स्वकारणेनैव चक्षुरादिना जीवं प्रति दर्शनादिकाअरय-तीत्युक्त्या चैत्रीयकुठारस्य मैत्रकरणत्वोक्तिरिव जीवं प्रति क्रि-

यासाधनत्वमात्राभिप्राया । "करणैर्वाव न वियुज्यते" इति (गौ-पवन) श्रुत्या जीवकरणसम्बन्धस्यानादिनित्यत्वात् चैत्रीयकुठारे बहुकालसम्बन्धिनि मैत्रीयत्वोक्तिरिवोपचारेण जीवकरणत्वाभिप्रायो वा । जीववशत्वानुभवोऽपि आभिमानिकतया युक्त इति ॥ १० ॥

**॥ ॐ त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॐ ॥ ११ ॥**

॥ ॐ भेदश्रुतेः ॐ ॥ ॥ ॐ वैलक्षण्याच्च ॐ ॥

पूर्वोक्त मुख्यप्राणस्य जीवं प्रत्यकरणत्वमयुक्तम् । तस्यापीन्द्रियत्वेन तं प्रतिकरणत्वात् इति शङ्कनात्सङ्गतिः । प्राक् प्रकृतमिन्द्रियत्वं किं सर्वेषां प्राणानामुत प्राणादन्येषां द्वादशानामिति सन्देहः । सर्वेषामिति पूर्वः पक्षः । "प्राणावा इन्द्रियाणी" ति (पौत्रायणश्रुति) सामान्यतः सर्वेषामिन्द्रियत्वश्रुतेः । तस्याः सामान्यत्वेऽपि इदं द्रवणरूपयुक्त्युपेतत्वेन "द्वादशैवेन्द्रियाण्याहु"रिति विशेष (काषायण) श्रुतितोऽपि बलवत्वात् । अन्यतमस्येन्द्रियत्वनिवारणं शक्यम् । सर्वेषामपीशवशत्वाविशेषादिति ॥ सिद्धान्तस्तु ॥ मुख्यप्राणम् ऋते द्वादशानामेवेन्द्रियत्वम् । "द्वादशैवेन्द्रियाण्याहुः प्राणो मुख्यस्त्वनिन्द्रियम्" (पौत्रायणश्रुति) इत्यादिविशेषश्रुतेः । इदं द्रवणरूपयुक्त्युपेतसामान्यश्रुतेस्तु मुख्यप्राणेतरविषयत्वसम्भवात् । न च प्राणस्य चक्षुराद्यविशेषः । तस्य इदं द्रवणयुक्तसर्वप्राणनियन्तृत्वेन सर्वकर्तृकारयितृत्वेन च ईश्वरसाम्यस्य चक्षुरादीनां तदभावस्य "द्रवतां हीन्द्रियाणांवि" ति (पौत्रायणश्रुति) "स्थित एव हीदं मु-

ख्यः प्राणः करोति कारयती" (पौत्रायणश्रुति) त्यादि श्रुतिसिद्धत्वात्। तस्येतरप्राणवदीशवशत्वेऽपि इतरप्राणानामिव जीवप्रयत्नापेक्षया ईशवशत्वाभावेन वैलक्षण्याच्चेति ॥ ११ ॥

**॥ ॐ संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॐ ॥ १२ ॥**

मुख्यप्राणचिन्तनानन्तरं विरिञ्चिविषयचिन्ता क्रियते तस्यैव विरिञ्चित्वादिति सङ्गतिः। प्राक्चिन्तितप्राणानाम् आश्रयत्वात् (आयतनत्वात्) प्रसङ्गसन्निधापितं शरीरं तदादिवस्तुजातं किं विरिञ्चिसृष्टम् उत परमात्मसृष्टमिति सन्देहः। "यस्माद्विरेचयेत्सर्वं विरिञ्चस्तेन भण्यते" इति (ब्राह्म) स्मृत्युक्त्या विरेचकत्वापरपर्यायस्रष्टृत्वरूपविरिञ्चत्वयुक्तियुक्तायाः "विरिञ्चो वा इदं सर्वं विरेचयती"ति (गौपवन) श्रुतेः "परमाद्ध्येते नामरूपे व्याक्रियेते" इति (आग्निवेश्य) श्रुतितो बलवत्वात्। मुख्यार्थसम्भवे वियत्पादीयन्यायेन द्वारस्रष्टृपरत्वकल्पनायोगात् विरिञ्चसृष्टमिति पूर्वः पक्षः। सिद्धान्तस्तु ॥ शरीरादिवस्तुसृष्टेः पृथिव्यादिभूतत्रयमिश्रीभावरूपत्रिवृत्करणसापेक्षत्वात् तस्य "सेयं देवतेमास्तिस्रो देवता" (छा. ६-३-३) इत्यादि श्रुत्या विष्णुधर्मत्वात् विष्णुनैव देहादिनामप्रपञ्चसृष्टिः न विरिञ्चतः। प्रागुक्तयुक्त्युपेतश्रुतिस्तु नैव देहादिनामप्रपञ्चसृष्टिः न विरिञ्चतः। प्रागुक्तयुक्त्युपेतश्रुतिस्तु "ब्रह्माद्यास्तदवान्तरा" इति (पाद्म) स्मृत्या अवान्तरसृष्टिपरेति ॥ १२ ॥

**॥ ॐ मांसादिभौमं यथाशब्दमितरयोश्च ॐ ॥ १३ ॥**



**॥ ॐ वैशेष्यात्तु तद्वादस्तद्वादः ॐ ॥**

पूर्वं देहादेः कर्तोक्तः । इह तु उपादानमुच्यत इति सङ्गतिः । मूर्तिपदेन प्रकृतो देहः किम् आप्यः किं वा पार्थिवः उत तैजसः भूतत्रयात्मको वेति सन्देहः । मांसादौ तृप्तिजनकत्वदृष्टेः तर्पकत्वयुक्त्युपेतया आपः शरीरमिति श्रुत्या आप इत्येकः पूर्वः पक्षः । काठिण्यगन्धादियुक्त्युपेतया “पृथिवीं शरीरम्” (अप्येति) इति श्रुत्या (बृ. ५-२-१३) पार्थिव इत्यन्यः । औष्ण्यदर्शनयुक्त्युपेतया “सोऽग्नेर्देवयोन्या आहुतिभ्यः सम्भूय हिरण्यशरीर” (ऐ. ७-४) इत्यादि श्रुत्या तैजस इत्यपरः । “इमास्तिस्रो देवताः पुरुषं प्राप्य” (छा. ६-४-७) इत्यादौ श्रुतोऽपि भूतत्रयात्मकत्वपक्षः आपः एव शरीरमित्यादिविशिष्योक्त्यनुपपत्तेरयुक्त एवेति ॥ सिद्धान्तस्तु ॥ देहस्यानेकभूतप्रकृतिकत्वेऽपि तत्तद्भूतविशेषसंयोगापेक्षया विशिष्योक्त्युपपत्तेः । “यत्कठिणं सा पृथिवी यद्द्रवं तदापः यदुष्णं तत्तेजः” इति (गर्भ. ३) श्रुतेरनेकभूतोपादानक एव देह इति ॥ १३ ॥

**इति श्रीराघवेन्द्रयतिकृतायां न्यायमुक्तावल्यां द्वितीयाध्यायस्य चतुर्थः पादः ।**

**॥ द्वितीयाध्यायः समाप्तः ॥**

# ॥ अथ तृतीयोऽध्यायः ॥

एवं समन्वयाविरोधाभ्यां जिज्ञासासूत्रस्थब्रह्मशब्दार्थः सिद्ध-रूपः निरूपितः पूर्वाध्याये । तत्स्थावशिष्टाथातो जिज्ञासापदा-नामर्थः साध्यरूपो निरूप्यते अनन्तराध्यायद्वये इति पूर्वोत्तरा-ध्यायद्विकद्वयस्य सिद्धसाध्यविचाररूपत्वात् पौर्वापर्यम् । तत्रा-प्यतः पदोक्तफलं प्रति अथ जिज्ञासापदाभ्याम् उक्तवैराग्यभक्त्यु-पासनापरोक्षज्ञानानां हेतुत्वेन तृतीयेऽत्राध्याये साधनविचार इ-त्यध्यायसङ्गतिः । पादानामप्युत्तरोत्तरं प्रति पूर्वपूर्वस्य हेतुत्वात् क्रमो ध्येयः ॥

**॥ ॐ तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॐ ॥ १ ॥**

पूर्वत्र चन्द्रिकाकारैरुक्ता चिन्तापरम्परा । अतो नोक्ता मया सात्र तूच्यते सन्मुदे स्फुटम् । अथ जिज्ञासासूत्रस्थाथादिपरो-क्तवैराग्यादि मोक्षसाधनमननुष्ठेयमुतानुष्ठेयमिति चिन्ता । तदर्थं

जीवस्य मृतौ निःशेषभूतवियोगोऽस्ति उत नेति। तदर्थं भूता-वियोगे प्रमाणप्रयोजने नस्त उत स्त इति। यद्याद्यः पक्षः तर्हि निःशेषभूतवियोगस्यैव मोक्षतया स्वाभाविकमृत्यैव अनायासेन मोक्षसिद्धेः नानुष्ठेयं साधनमिति। यद्यंतस्तदा भूतवियोगस्यैव मुक्तित्वेऽपि मृतौ तदभावात् अनुष्ठेयमेव मोक्षार्थं साधनमिति फलफलीभावः ॥ पूर्वपक्षस्तु ॥ नानुष्ठेयं साधनम्। तेन वि-नापि "भूतानां विनिवृत्तिस्तु मरणमि"ति (भारत)स्मृत्या सर्व-भूतविनिवृत्तिरूपमरणेनैव "मुक्तिस्तेभ्यो विमोचनमि"ति (वा-राह) स्मृत्या भूतविमोचनरूपमोक्षसिद्धेः। न च भूतानां मृत-जीवेन सह गमने प्रमाणमस्ति शरीरभोगात् प्रदाय चरितार्था-नां प्रयोजनं नास्तीति ॥ सिद्धान्तस्तु ॥ "वेत्थ यथा पञ्चम्यामा-हुतावापः पुरुषवचसो भवन्तीति (छा. ५-३-९) प्रश्नप्रतिवचन-योः अबुपलक्षितजीवस्योक्तिबलात् शरीरान्तरसम्पादनार्थतया प्रयोजनवत्त्वात् भूतानां जीवेन सह गत्यवगमेन मृतौ निःशेषभू-तवियोगाभावात् "भूतानां विनिवृत्ति"रिति स्मृतेः "स्मृतिकाले जहात्येनम्" इति (ब्रह्माण्ड) स्मृत्या भागविषयत्वात्तद्रूपमोक्षा-र्थः अनुष्ठेयमेव साधनमिति ॥ फले तु जिज्ञासासूत्रोक्तसाधना-क्षेपसमाधी ॥ १ ॥

**॥ ॐत्र्यात्मकत्वात्तु भूयस्त्वात् ॐ ॥ २ ॥**

पूर्वोक्तप्रश्नादिबलात् एकाबाख्यभूतगतिसिद्धावपि एकस्य देहानारम्भकतयाऽप्रयोजकत्वात् मृतिरेव मुक्तिरिति किं साध-नानुष्ठानेनेति आक्षेपात्सङ्गतिः। मृतं जीवं परिष्वज्य किम् आप

एव गच्छन्ति उत सर्वाणि भूतानीति चिन्ता । तदर्थं प्रश्नादिस्था-पूशब्दः किमेकभूतपरः उतानेकभूतपर इति । तदर्थमनेकभूतप-रत्वे हेतुर्नास्ति अप्शब्दस्य न युक्तः उत विपरीत इति ॥ पूर्वपक्ष-स्तु ॥ आपः पुरुषवचस इति प्रश्नादौ अप् शब्देनापामेव गतिश्र-वणात् अप् शब्दस्यानेकभूतपरत्वे हेत्वभावेन "भूतानि पुरुषव-चांसि भवन्ती"ति निर्देशापत्त्या च विशिष्याप्शब्दश्रवणायोगात् आप एव गच्छन्ति नेतरभूतानीति ॥ सिद्धान्तस्तु ॥ मिश्राणि हि भूतानीत्यादि श्रुत्या भूतानां मिश्रत्वेन श्रुतौ त्र्यात्मकाप्शा-ब्देनैव भूतानि पुरुषवचांसीत्यर्थलाभात् सर्वभूतानां मिश्रत्वेऽपि श्रुताप्शब्दस्य पार्थिवादि सर्वदेहेषु सम्भूयापामेव भूतेजोपेक्षया भूयस्त्वेन वैशेष्यात्तद्वाद इति उक्तन्यायेनोपपत्तेः सर्वाणि भूता-न्यपि गच्छन्तीति ॥ फलं तु साधनानुष्ठानाक्षेपसमाधी एवेति ॥ २ ॥

**॥ ॐ प्राणगतेश्च ॐ ॥ ३ ॥**

पूर्वत्र त्र्यात्मकापां गत्युक्तया अर्थात्सिद्धा भूतानां गतिः इह विशिष्यानुमानरूपमानेन साध्यत इति सङ्गतिः । अथादिपदो-क्तं वैराग्यादिसाधनम् अनावश्यकम् उतावश्यकमिति चिन्ता । तदर्थं प्रकृतभूतानि जीवेन सह न गच्छन्ति उत गच्छन्तीति । तदर्थं विशिष्य मानं नास्ति उतास्तीति ॥ पूर्वपक्षस्तु ॥ पूर्वोक्त-दिशा त्र्यात्मकापां गत्यर्थात् भूतगतिरिति निर्णयस्य विशेषमा-नाधीनत्वात् तस्य चेहानुपलम्भात् न गच्छन्तीति नावश्यकं सा-धनमिति ॥ सिद्धान्तस्तु ॥ भूतानि जीवेन सह गच्छन्त्येव स-

हगन्तृप्राणाविनाभूतत्वात्। यद्यत्सहगन्त्रविनाभूतं तत्तत्सहगन्तृ यथा राजसहगन्त्रमात्याविनाभूतं वस्तु राजसहगन्तृ इत्यनुमानरूपविशेषप्रमाणसद्भावात् भूतानि जीवेन सह गतिमन्त्येव करणैर्वाव नवियुज्यत इति श्रुत्या हेतौ विशेषणस्य "यत्र वाव भूतानि तत्र करणानि" इति (भाल्लवेय) श्रुतौ "न चैतानि कदाचिद्वियुज्यन्ते" इत्युक्त्या विशेषसिद्धेः आवश्यकं साधनमिति ॥ ३ ॥

**॥ ॐ अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॐ ॥ ४ ॥**

प्रागुक्तहेतोरसिद्धिर्निरस्यतेऽत्रेति सङ्गतिः। अथादिपदोक्तं साधनं नानुष्ठेयमुतानुष्ठेयमिति चिन्ता। तदर्थं प्रकृताः प्राणाः किं जीवेन सह न गच्छन्त्युत गच्छन्तीति। तदर्थं प्राणानाम् अग्न्यादिगतिश्रुतिः किं सर्वात्मना प्राणगतिपरा अथ भागशः तद्गतिपरेति। तदर्थं भागपरत्वे कल्पकं नास्ति बाधकं चास्ति उत विपरीतमिति ॥ पूर्वपक्षस्तु ॥ "यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यमि"त्यादिना वागादिप्राणानामग्न्याद्यधिदैवं प्रति गतिश्रवणेन जीवेन सहगत्यभावात्। भागशो जीवेन सह गच्छन्तीति भागान्तरेणाधिदैवमित्यस्य च कल्पकाभावेन प्रतिमरणमेव भागापगमे कालतः सर्वापगमापातेन च प्राणानामधिदैवगतौ भूतानामपि तैस्सह तत्र गतौ जीवेन सह गत्यभावेन जीवेन सह गतौ तत्र गत्यभाव इति सर्वथापि भूतानां प्राणविनाभावाभावापातेन चायोगात्। न प्राणाः जीवेन सहगन्तारः इति नानुष्ठेयं साधनमिति ॥ सिद्धान्तस्तु ॥

"पुरुषस्य मृतौ ब्रह्मन्नि"ति (ब्राह्म) स्मृतौ प्राणानां भागश एव उभयत्र गत्युक्त्या अग्न्यादिगतिश्रुतेस्तत्परत्वात्। तत्रैव स्मृतौ मृतौ वियुक्तभागानामपि जीवस्य देहान्तरप्राप्तौ पुनः प्रवेशस्योक्त्या कालतः सर्वापगमाभावात्। जीवस्य मृतिकाले प्राणानां भागशः उभयत्र गमनस्य "मृतिकाले जहात्येन"मिति (ब्रह्माण्ड) स्मृतिसिद्धत्वेन भूतानां प्राणविनाभावाभावात्। प्राणा भूतानि च जीवेन सह गच्छन्त्येवेत्यनुष्ठेयं साधनमिति ॥ ४ ॥

**॥ ॐ प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॐ ॥५ ॥**

पूर्वत्राग्न्यादिश्रुतेः भाक्तत्वोक्तिप्रसङ्गादत्र श्रुद्धाश्रुतेः भाक्तत्वोक्तिरिति सङ्गतिः। अथादीपदोक्तं साधनं नानुष्ठेयमुतानुष्ठेयमिति चिन्ता। तदर्थं भूतानां जीवेन सह गतिर्नास्ति उतास्तीति। तदर्थं तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वतीति उपक्रमे श्रुतश्रद्धाशब्दः किं श्रद्धामात्रयुक्तपरः उत श्रद्धयाद्भिश्च युक्तजीवपरः इति। तदर्थं किम् उपक्रमानुरोधेन "इति पञ्चम्यामाहुतावापः पुरुशवचस" इत्युपसंहारो (छां. ५-९-१) नेय उत विपरीत इति। तदर्थं किमुपक्रमः प्रबल उत उपसंहार इति। आद्ये उपक्रमस्य यथाश्रुतार्थतया तनुरोधेन उपसंहारस्य नेयत्वेन भूतगतौ प्रश्नोत्तरस्यामानत्वात् भूतानां न सहगतिरिति नानुष्ठेयं साधनमिति पूर्वपक्षे फलम्। अन्त्येतु उपसंहारस्य त्र्यात्मकाप्शब्दानुरोधेन उपक्रमस्थश्रद्धाशब्दस्य नेयत्वेन प्रश्नोत्तरबलेन भूतानां सहगतिरित्यनुष्ठेयं साधनमिति सिद्धान्ते फलम् ॥ पूर्वपक्षस्तु ॥ न भूतानां जीवेन सह गतिः। "तस्मिन्नेतस्मिन्नि"ति

(छां. ५-४-२ ) श्रुतौ उपक्रान्तस्य श्रद्धयेष्टवतः श्रद्धासहितस्यैव द्यारव्ये प्रथमाग्नौ छान्दोग्ये पञ्चमे होम श्रवणेन भूतगतेरश्रवणात् अन्यथा भूतानीत्युक्तिप्रसङ्गात्। न चोपसंहारस्थाप्शब्दविरोधेन श्रद्धाशब्दः तत्परः इति युक्तम्। असंजातविरोधित्वेन प्रथमोपस्थितत्वेन च उपक्रमस्य प्राबल्यात् तदनुरोधेनैवोपसंहारस्य नेयत्वादिति ॥ सिद्धान्तस्तु ॥ उपसंहारस्याप्राथम्येऽपि उपक्रमव्यारव्यानरूपतया अथानुसन्धानतः प्राथम्येन प्राबल्यात्तदनुरोधेनैवोपक्रमस्य व्यारव्येयतया तत्स्थश्रद्धाशब्दस्य अजहल्लक्षणया श्रद्धया त्र्यात्मकाद्भिश्च युक्तजीवपरत्वोपपत्तेः अस्ति भूतानां सह गतिरिति। अत्र नवीनोक्तप्रथमप्राबल्यखण्डनेनोपसंहारप्राबल्यव्युत्पादनप्रपञ्चनं तु गुरुपादकृतोपसंहारविजयादवसेयम् ॥ ५ ॥

**॥ ॐ अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॐ ॥ ६ ॥**

एवमतीतनयनिर्णीताप्श्रुतिप्राणगतिरूपमानद्वयाक्षेपेण इह शङ्कोत्थानादन्तरसङ्गतिः। पूर्वत्रैवाद्या चिन्ता। तदर्थं प्रकृतभूतानि जीवेन सह गच्छन्त्युत न गच्छन्तीति। तदर्थं प्रागुक्तार्थिकश्रवणप्राणगतिरूपयुक्ती भूतगतिसाधके न भवतः उत भवत इति। तदर्थं ताभ्यां किं नियमेन प्रत्यक्षाश्रवणं बलवदुत विपरीतमिति ॥ पूर्वपक्षस्तु ॥ प्रश्ननिरूपणयोः त्र्यात्मकाप्गत्युक्त्या अर्थाद्भूतानां गतिश्रवणादपि "अग्निं वागप्येती"त्यादिवत् भूतानि गच्छन्तीति नियमेन प्रत्यक्षाश्रवणस्यैव बलवत्वात् प्राणगतिरूपयुक्तेरपि विशेषश्रवणे सत्येव वैदिकार्थसाधकत्वात् प्र-

त्यक्षगतिश्रुत्यभावे तयोरसाधकत्वान्न सह गच्छन्ति भूतानीति नानुष्ठेयं साधनमिति ॥ सिद्धान्तस्तु ॥ कदन्नभोजनस्यापि भोजनत्ववदार्थिकश्रवणस्यापि श्रवणत्वेन युक्तेः प्रागुक्तदिशा व्याप्तिलिङ्गग्राहकप्रमाणवत्तया बलवत्तया श्रवणसामान्याभावप्रतिबन्धकत्वेन तयोः स्वयमर्थसाधकत्वात् “अथ हैनं यजमानं किं न जहाति भूतान्येव भूतैरेव गच्छति भूतैर्भुंक्ते भूतैरुत्पद्यते भूतैश्चरती”ति (कौण्डिण्यश्रुतिः) प्रत्यक्षश्रवणाच्च । अत्र श्रुतौ यजमानपदश्रवणेऽपि कर्मकृतोऽपि भूतावियोगेन तदन्येषां किमुत्यसिद्धत्वात् । भूतानि जीवेन सह गच्छन्त्येवेत्यनुष्ठेयं साधनमिति ॥ ६ ॥

**॥ ॐ भाक्तं वाऽनात्मवित्त्वात्तथाहि दर्शयति ॐ ॥ ७ ॥**

पूर्वत्र कैमुत्येन सर्वजीवानां भूतावियोगोक्तिरयुक्ता । कर्मकृतो मुक्तिश्रवणेन तस्यैव भूतावियोगाभावे कैमुत्यानवतारादिति शङ्कनात्सङ्गतिः । अत्राथादिपदेनोक्तं वैराग्यादिमोक्षसाधनं मुमुक्षुणा न कार्यमुत कार्यमिति चिन्ता । तदर्थं “अपाम सोमममृता अभूमे”त्यादौ (ऋ. ८-४८-३) कर्मतः श्रुतममृतत्वं किं मुख्यमुत भाक्तमिति । तदर्थं मुख्यत्वे बाधकं नास्युतास्तीति आद्ये अन्यतोऽपि मुक्तिलाभान्न वैराग्यादि कार्यम् । अन्त्ये तु कार्यमिति फलफलिभावः ॥ पूर्वपक्षस्तु ॥ न वैराग्यादिसाधनं कार्यं तेन विनाप्यपामेत्यादि श्रुत्या सुशकेन कर्मणैव मुक्तिसिद्धेः । न च श्रुतावमृतत्वं गौण बाधकाभावादिति । सिद्धान्तस्तु ॥ “तमेवं विद्वानमृत” (पुरुषसूक्त) इत्यादौ आत्मविद एव मु-

ख्यामृतत्वम् अन्यस्य नेत्युक्त्या निरवकाशतच्छ्रुतिविरोधरूप-बाधकेन अपामेत्यादिश्रुतेः गौणार्थत्वावश्यं भावेन अन्यतो मुक्त्यभावात् कार्यमेव मुमुक्षुणा वैराग्यादि तत्साधनमिति। श्रुतेर्गौणार्थत्वप्रकारश्च "अमृतो वाव सोमपो भवति यावदिन्द्रो यावन्मनु" रित्यादि श्रुत्या काम्यकर्मवतः किञ्चित्कालीनममृतत्वम् अकाम्यकर्मकृतो जिज्ञासोऽस्तु ज्ञानद्वारा मोक्षाख्यामृतत्वम् "अगन्मज्योतिरविदाम देवानि"ति (ऋ. ८-४८-३) वाक्यशेषे ज्योतिर्ब्रह्म व्यजिज्ञासिष्मेत्युक्तेः "उत्क्रमिष्यत एवं भावादि" (ब्र.सू. १-४-२२) त्युक्तेश्च "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववदि"ति (ब्र.सू ३-४-२६) वक्ष्यमाणत्वाच्च अकाम्यकर्मिणो ज्ञानिनस्तु "अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनादि" त्यादौ (ब्र.सू. ४-१-१६) वक्ष्यमाणदिशा मोक्षैकदेशानन्दाभिव्यक्तिविशेषरूपममृतत्वमित्येवंरूपेण ज्ञेयः। फले तु अथपदाद्युक्तवैराग्यादिसाधनानुष्ठानाक्षेपसमाधी ॥ ७ ॥

## ॥ ॐ कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्याम् ॐ ॥ ८ ॥

पूर्वत्र कर्मजफलम् अमृतत्वं भाक्तमित्युक्तम्। इह ति कर्मणः स्वर्गादौ फलजनकत्वं भाक्तं भागेनैव न तु कृत्स्नस्येत्युच्यत इति सङ्गतिः। अत्राथादिपदोक्तं वैराग्यादिकं मुमुक्षुणा न कार्यमुतकार्यमिति चिन्ता। तदर्थं बन्धकीभूतकर्मणः स्वर्गादौ निःशेषभोगोऽथैकदेशेनेति। तदर्थं कर्मणो भागशो भोगकल्पं नास्त्युतास्तीति ॥ पूर्वपक्षस्तु ॥ "कर्मणा बध्यते जन्तु"रित्यादेः बन्धकीभूत काम्यकर्मणो जीवेन सहैव स्वर्गादा-

वागतस्य भागेन भोगकल्पने मानाभावेन निःशेषभोगसम्भवा-द्भोगेन कर्म भुक्त्वा तच्छेषेन स्वर्गात्पुनरागमनाङ्गीकारेऽपि एवं द्वित्र्यावर्तनेन निःशेषकर्मसमाप्तिसम्भवाच्च । बन्धबीजाभावे ब-न्धस्य स्वत एव निवृत्तेः न कार्यं मुमुक्षुणा वैराग्यसाधनमिति ॥ सिद्धान्तस्तु ॥ “ततः शेषेणेमं लोकमायाती”ति श्रुतौ “भुक्तशे-षानुशयवानि”ति स्मृतौ च स्वर्गगतस्य यथायोग्यं कर्म सहाग-तमपि किञ्चिद्भुक्तवतः कर्मशेषयुतवत एवागमनस्य पुनः कर्म-करणस्य “दशावराणामि”त्यनल्पकर्मकृतेश्चोक्त्या भोगेन निः-शेषकर्मक्षयाभावात् कार्यमेव वैराग्यादीति ॥ ८ ॥

**॥ ॐ यथेतमनेवं च ॐ ॥ ९ ॥**

पूर्वमनुशयवान्यातीत्युक्ते किं यथागतं तथैवायाति मार्गा-न्तरेण वेत्याकाङ्क्षात्र निवर्त्यत इति सङ्गतिः । अथादिपदोक्तं वै-राग्यं न कार्यमुतकार्यमिति चिन्ता । तदर्थं गतिप्रकारेणैवागम-नमन्यथा वेति । तदर्थं मार्गश्रवणमागमनोपयोगि उतानुपयो-गीति । आद्ये बुद्धिस्थगतमार्गेणैवागमनात् आगतौ क्लेशाभा-वात् तद्धेतुकर्मणि वैराग्यं न । अन्त्ये तु अन्यथाप्यागमनेन अ-परिचितमार्गकृतक्लेशभावात् तद्धेतुवैराग्यमावश्यकमिति फल-फलिभावः ॥ पूर्वपक्षस्तु ॥ परिचितमार्गत्यागेन अपरिचितमा-र्गेनागतौ हेत्वभावात् “यथेतमागच्छती” ति श्रुतिविरोधाच्च ग-तिमार्गेणैवागमनमिति न कार्यं वैराग्यादीति ॥ सिद्धान्तस्तु ॥ गमने जीवस्यास्वातन्त्र्येण तत्स्मरणस्यागमनानुपयोगात् “धू-मादभ्रमि”ति भाष्योक्त (काषायण) श्रुतौ आकाशपर्यन्तमेव ग-

तिमार्गेणागमनं ततोऽर्वागन्यथात्वस्योक्तत्वाद्यथेतमिति श्रुतेश्च किञ्चिद्गतिप्रकारेणागतेरङ्गीकारेण तद्विषयत्वोपपत्तेः ॥ गमनप्रकारादन्यथाप्यगमनमिति कार्यं वैराग्यादीति ॥ ९ ॥

॥ ॐ चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः ॐ ॥ १० ॥

॥ ॐ आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॐ ॥ ॥ ॐ सुकृतदुष्कृते एवेति तु बादरिः ॐ ॥

एवं गत्यागतिमार्गस्थितौ सिद्धायां तत्साधननिर्णयोऽत्र क्रियत इति सङ्गतिः । अथादिपदोक्तं काम्यकर्मणि वैराग्यं नावश्यकमुतावश्यकमिति चिन्ता । तदर्थं किं गतागतं चरणफलमुत काम्यकर्मफलमिति । तदर्थं "तद्य इह रमणीयचरणाः रमणीयां योनिमापद्यन्ते" इति (छां. ५-१०-७) श्रुतौ चरणशब्दः किं कर्माङ्गाचारपरः किं वा कर्मपरः इति ॥ पूर्वपक्षस्तु ॥ चरणफलमेव गतागतं न कर्मफलम् । चरणश्रुतौ गतागतस्य चरणफलत्वोक्तेः । न चरणमेव कर्म । "स यथाकारी यथाचारी"ति श्रुतौ "आचार इति सम्प्रोक्तः कर्माङ्गत्वेन शुद्धिदः" इति स्मृतौ च कर्माचारयोर्भेदोक्तेः । श्रुतौ चरणशब्दस्य लक्षणया कर्मपरत्वे च तस्यानर्थक्यप्रसङ्गात् । यज्ञादिकारिणां प्रकृतत्वेन ये यज्ञादिकारिणो रमणीयाम् इत्यादिरूपेणोक्तिसम्भवे विनापि चरणशब्दं कर्मोपलक्षणसम्भवात् । न च "य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ती"त्यादौ (छां. ५-१०-३) गतागतस्य यज्ञादिफलत्वोक्तिविरोधः इति वाच्यम् । तत्रा-

प्युपासत इत्युपशब्देन समीपवृत्तिवाचिना कर्मसमीपवृत्तिचरणस्य गृहातेरिति ॥ सिद्धान्तस्तु ॥ भवत्येव पुण्यपापाख्यकर्मफलं गतागतम्। "इष्टापूर्तं मन्यमानावरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढा" इति (मुं. १-२-१०) श्रुतौ "त्रिविद्या मां सोमपाः पूतपापा" (भ.गी ९-२०) इत्यादि स्मृतौ च गत्यादेः कर्मफलत्वप्रतीतेस्तद्बलेन चरणश्रुतेः अजहल्लक्षणया यज्ञाद्यर्थत्वेऽपि रमणीयाद्याचारेणैव यज्ञकृतां रमणीयत्वादिकमिति सूचकतया चरण शब्दस्य सार्थक्यसम्भवात्। धर्मं कुरुतेत्यर्थे "धर्मं चरते"ति प्रयोगबलेन चरणश्रुतेः यज्ञादिपरत्वादेव "य इमे ग्राम" (छां. ५-१०-३) इति श्रुतेरर्थान्तरकल्पनमप्रमाणकम्। "अथ ये यज्ञेन दानेन तपसा लोकान् जयन्ति ते धूममभिसम्भवन्ती"ति समाख्याविरुद्धं चेति काम्यकर्मणि कार्यं वैराग्यादीति ॥ १० ॥

**॥ ॐ अनिष्तादिकारिणामपि च श्रुतम् ॐ ॥ ११ ॥**

॥ ॐ संयमनेत्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॐ ॥ ॥ ॐ स्मरन्ति च ॐ ॥

अस्त्येवमुक्तदिशा गत्यादेः पुण्याख्यकर्मफलत्वं न तु पापाख्यकर्मफलत्वमिति शङ्कनात्सङ्गतिः। अथपदोक्तं वैराग्यं किं काम्यपुण्यकर्मण्येव उत पापादावपीति चिन्ता। तदर्थं पुण्यपापाख्यकर्मफलतया प्रकृतमार्गगमनादिदुःखं किं पुण्यकृतामेव उत अपुण्यकृतामपीति। तदर्थं गतागतं किं प्रत्यवायभयफलकामनादिप्रयुक्तमुत कर्मप्रयुक्तमेवेति। तदर्थं भयादिहीनानामपि अपुण्यकृतां गत्यादौ मानं नास्तुतास्तीति। आद्ये पुण्यकृतामेव

प्रत्यवायभयादिमतां गत्त्यादि। अन्त्ये तु पुण्यकृतामपुण्यकृतामुभयेषामपीति फलम्॥ पूर्वपक्षस्तु॥ पुण्यकृतामेवगमनादिदुःखं नत्वपुण्यकृतां तेषां प्रत्यवायभयवत्त्वात्। बिभ्यत्पतति पादपादिति न्यायेन भयवत एव पतनवत्त्वादिदुःखित्वोपलम्भात् फलकामनावत्त्वाच्च। काम्यपुण्यकृतामेव गमनादि। "कामान्यः कामयते मन्यमानः स कामभिर्जायते तत्र तत्रे"ति श्रुतौ कामिन एव पुनरागमनोक्तेः। अनिष्टादिकृतां च भयाभावात्कामनाभावाच्च न पुनरागत्यादि दुःखम्। न च भयादिमत्त्वं पतनादिदुःखाप्रयोजकं किन्तु कर्मैवेति वाच्यं कल्पकाभावात्। किञ्च पुण्यकृतामिव पुण्यमकुर्वतां पापं च कुर्वतां तात्कालिककामोपरोधादिरूपक्लेशाभावेन स्रक्चन्दनवनितादिभोगाध्क्येन च भाविपुनरागमनादिमात्रक्लेशस्याकिञ्चित्करत्वात् न कार्यं तत्र वैराग्यादीति॥ सिद्धान्तस्तु॥ "तद्य इह शुभकृतो ये चाशुभकृतस्ते शुभमनुभूयावर्तत" इति (भाल्लवेय) श्रुतौ पुण्यकृताभिवान्येषामप्यागतेरुक्तत्वात्। तथा "सर्वे वा एतेऽशुभकृतः संयमने प्रपतन्ति" इति भाष्योक्त (कौण्ठरव्य) श्रुतौ "गच्छन्ति पापिनः" इत्यादि स्मृतिषु च पुण्यकृदन्येषां नित्यनरकादिमहानर्थस्य चोक्तेश्च भगवदज्ञानिनां सर्वेषामप्यस्त्येवागमनादिदुःखं भयवत्त्वाभावादि हेतुद्वयं चाप्रयोजकम्। अबिभ्यता फलकामनाशून्येनापि उपभुक्तविषस्य तन्मृतिहेतुतादृष्टेः कार्यं तत्रातिशयेन वैराग्यमिति॥

॥ॐ अपि सप्त ॐ॥१२॥

पूर्वत्र हरिद्वेषिणो नित्यनरकोक्तिरयुक्ता। "यावदिन्द्राश्चतुर्दशे"ति तदनित्यत्वोक्तेरित्याक्षेपात्सङ्गतिः। अथपदोक्तं भगवद्द्वेषादावतिशयितवैराग्यमनावश्यकम् उतावश्यकमिति चिन्ता। तदर्थं पूर्वं तत्फलत्वेनोक्तो नरकः किं पुनरावृत्तिमानुत नेति। तदर्थं नरकः किमेक एवोतानेक इति॥ पूर्वपक्षस्तु॥ नरकभेदे मानाभावादेकस्य यावदिन्द्राश्चतुर्दशेत्यादावनित्यत्वोक्तेः पुनरावृत्तिमानेव भगवद्द्वेषिनरकः। न च "महातमसिमग्नानां न तेषामुत्थितिः क्वचिदि"ति स्मृत्या नित्यत्वस्याप्यवगमेन पुरुषभेदेनैकस्यैव नरकस्य नित्यत्वमनित्यत्वं चास्त्विति वाच्यम्। "चकार नरकं शून्य"मित्यादेर्विरोधात्। अतो न भगवद्द्वेषेऽतिशयेन वैराग्यमावश्यकमिति॥ सिद्धान्तस्तु॥ "रौरवोऽथ महांश्चैवे"ति भाष्योक्त (भारत) स्मृतौ अनित्यनरकप्रपञ्चस्य नित्यनरकद्वयस्य च प्राधान्येनोक्तेः। यावदिन्द्राश्चतुर्दशेत्यादेरनित्यनरकविषयत्वोपपत्तेः। भगवद्द्वेषिनरकः पुनरावृत्तिशून्य एवेति भाव्यं तत्रातिशयितवैराग्येणेति॥ १२॥

**॥ ॐ तत्रापि च तद्व्यापारादविरोधः ॐ ॥ १३॥**

अस्त्वनिष्टादिकारिणोः द्विविधाधिकारिणोः नित्यानित्यनरकभोगः। तावता न तद्धेतौ वैराग्यमावश्यकम्। तस्य दुःखस्वरूपत्वाभावादिति शङ्कनात्सङ्गतिः। अथपदोक्तं पापादौ वैराग्यं न कार्यमुत कार्यमिति चिन्ता। तदर्थं तत्फलरूपो नरकः किमदुःखरूपोऽथ दुःखरूप इति। तदर्थं नरकस्य सदुःखत्वे तत्प्रेरकेश्वरस्य दुःखभोगः प्रसज्यते उत नेति। तदर्थं किं भोगो

नाम दुःखसाक्षात्कारमात्रमुत तत्कृतनीचत्वादिरेवेति ॥ पूर्वप-
क्षस्तु ॥ दुःखापरोक्षस्यैव तद्भोगरूपत्वान्नाराकिणो दुःखित्वे त-
त्प्रेरकस्य सर्वज्ञेश्वरस्य दुःखसाक्षित्वरूप दुःखभोगप्रसङ्गात् न-
रको न दुःखरूपः । न चेश्वरो न तत्प्रेरकः सर्वं प्रेरयतीति भा-
ष्योक्तश्रुतिविरोधात् । अतो न वैराग्यं कार्यमिति ॥ सिद्धान्त-
स्तु ॥ "नीचोच्चतैव दुःखादेर्भोग इत्यभिधीयते" इति (भागव-
ततन्त्र) स्मृत्या नीचत्वादेरेव भोगशब्दार्थत्वात्तस्यैव च दुःखिप्रे-
रकत्वेऽपि निर्विकारे अचिन्त्यशक्तौ हरावभावस्य "नासौ दुःख-
भुगि" ति श्रुतिस्मृतिसिद्धत्वेन नारकिणां दुःखित्वे बाधकाभावात्
सदुःखो नरक इति भाव्यं तत्र वैराग्येणेति ॥ १३ ॥

**॥ ॐ विद्याकर्मणोरिति तु प्रकृतत्वात् ॐ ॥ १४ ॥**

वैराग्यार्थं नरकादेः सदुःखोक्तिरयुक्ता । तेन विनापि तत्फले
गत्यादौ जीवानां स्वातन्त्र्येणेच्छया तत्फलगत्यादित्यागोपादा-
नसम्भवादिति शङ्कनात्सङ्गतिः । अथ पदोक्तं काम्यकर्मणि वैरा-
ग्यं नावश्यकमुतावश्यकमिति चिन्ता । तदर्थं जीवानां गत्यादौ
स्वातन्त्र्यमस्ति उत नेति । तदर्थं "अथैतयोः पथोर्नैकतरेण च
गच्छन्ति तानीमानि क्षुद्रमिश्राणी"ति (छां. ५-१०-८) श्रुतौ ए-
तयोरिति किं देवयानपितृयानरूपमार्गपरामर्शः उतविद्याकर्म-
णोरिति ॥ पूर्वपक्षस्तु ॥ छान्दोग्ये पञ्चमे "तेऽर्चिषमभिसम्भ-
वन्ति" (छां. ५-१०-१) "ते धूममभिसम्भवन्ति" (छां. ५-१०-
३) इति पूर्वप्रकृतौ देवयानादिमार्गौ एतयोरित्युरवाक्ये परामृ-
श्य नैकतरेण गच्छन्तीत्युक्त्या भूतानां गतौ भूतस्वातन्त्र्यमव-

गम्यते। पुरुषप्रयत्नागोचरे न गच्छन्तीयुक्त्ययोगात्। इतरव्यपदेशादित्यादौ जीवास्वातन्त्र्योक्तावपीशाधीनस्वातन्त्र्यं सम्भवत्येव। कर्तेतिनयन्यायेन साधने स्वातन्त्र्ये फलेऽपि तत्स्यादेवाविशेषात्। जीवानां स्वातन्त्र्ये सर्वैषामपि गतिप्राप्तिरिति तु साधनस्वातन्त्र्येऽपि समम्। अदृष्टादिना अतिप्रसङ्गादिवारनमिहापि समम्। तथा च गतावेव स्वातन्त्र्यात् "मूले लब्धे फले नैव शाखाग्रं गन्तुमिच्छती"ति न्यायेन फल एव स्वातन्त्र्यात् किं काम्यकर्मवैराग्येणेति॥ सिद्धान्तस्तु॥ "तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धातप उपासते तेऽर्चिषमभिसम्भवन्ति" "अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममि"ति विद्याकर्मणोरपि पूर्वत्र प्रकृतत्वाद्देवयानादिमार्गयोः तत्साधनविद्याकर्मणोश्च प्रकृतत्वाविशेषेऽपि "विद्यापथः कर्मपथो द्वौ पन्थानौ प्रकीर्तितौ। तद्वर्जितस्त्रिधा याति तिर्यग्वा नरकं तमः" इति भाष्योक्तस्मृतिसमाख्यया विद्याकर्मणोरेवैतयोरित्युत्तरवाक्ये परामर्शेन साधन एव जीवानां स्वातन्त्र्येण फले तदभावात् साधने विधिसद्भावेन विध्यादिशास्त्रावैयर्थ्यायैव तत्रेश्वरः स्वातन्त्र्यं ददातीत्यभुपगमेन फलेऽपि स्वातन्त्र्यापादनाप्रसक्तेः आवश्यकमेव काम्ये वैराग्यादीति॥ १४॥

**॥ ॐ न तृतीये तथोपलब्धेः ॐ॥ १५॥**

॥ ॐ स्मर्यतेऽपि च लोके ॐ॥ ॥ ॐ दर्शनाच्च ॐ॥ ॥ ॐ तृतीये शब्दावरोधः संशोकजस्य ॐ॥ ॥ ॐ स्मरणाच्च ॐ॥

अत्र "तिर्यग्वा नरकं तम" इति पूर्वो[illegible]चिन्त-

नात्सङ्गतिः। अथ पदोक्तं भगवद्द्वेषिफले तमस्यतिशयेन वैराग्यं न कार्यमुत कार्यमिति चिन्ता। तदर्थं तमः किमितरनरकवत् सुखदुःखमिश्रमुत दुःखैकस्वरूपमिति। तदर्थं किं दुःखं सुखाविनाभूतमुत नेति। तदर्थं यत्र दुःखं सुखं तत्रेति व्याप्तिग्राहकमानस्य तमस्यपवादकं प्रमाणं नास्त्युतास्तीति॥ पूर्वपक्षस्तु॥ यत्र दुःखं सुखं तत्रेति व्याप्तेः सार्वत्रिकसुखदुःखयोरतीन्द्रियत्वेन अप्रत्यक्षत्वेऽपि "यत्र दुःखं सुखं तत्रे"ति भाश्ःयोक्तस्मृत्या ग्रहणसम्भवेन दुःखयुक्ते तमसि इतरनरक इव सुखस्याप्यनुमानसिद्धत्वात् अपवादकमानस्य चादर्शनात् अन्यनरकापेक्षया नातिशयेन तमसि वैराग्यं विधेयमिति॥ सिद्धान्तस्तु॥ श्रुतिस्मृतिप्रत्यक्षानुमानार्थापत्तिभ्यः तमसो दुःखैकयुक्तत्वावगमात् यत्र दुःखमिति स्मृतेः तमोन्यनरकविषयत्वावश्यंभावाद्भाव्यं तत्राशयितवैराग्येणेति। तथाहि। न तमः सुखानुवृत्तं "केवलं ह्येवात्रदुःखमि"ति श्रुतिः नान्धेतमसिमग्नानां सुखलेशोऽपि कश्चने"ति (भविष्यत्पर्व) स्मृतिः। "अतिप्रिये यथा राजे" (ब्राह्म)त्यादि स्मृतिसिद्धतया प्रबलम्। विप्रतिपन्ना न दुःखवन्तः तथात्वेनेश्वरानिष्टत्वात् यद्यथेश्वरानिष्टं तत्तथा न भवति यथा शशो विषाणित्वेनेत्यनुमानं च। न चासिद्धिः। नैते सुखित्वेन ईश्वरेष्टाः अप्रियत्वात् यो यस्याप्रियः स सुखित्वेन तस्यानिष्टः यथा राजविरोधी राज्ञः इत्यनुमानेन तत्सिद्धेः। अप्रियत्वं च द्वेषित्वादेव सिद्धम्। तथा "महातमस्त्रिधा प्रोक्तमि"त्यादि (कौर्म) स्मृत्या तमसः स्वरूपश्रवणे श्रोतृणां श्रवणजदुःखाधि-

क्यजन्यमूर्छाप्राप्त्यवगमेन तदन्यथानुपपत्तिरूपार्थापत्तिश्चेति ॥ १५ ॥

**॥ ॐ तत्स्वाभाव्यापत्तिरुपपत्तेः ॐ ॥ १६ ॥**

अस्त्वेव दुःखहेतावनिष्टादौ तत्फले च वैराग्यं न तु काम्यकर्मणि। तत्फले च सुखहेतुत्वात् सुखरूपत्वाच्चेति शङ्कनात्सङ्गतिः। अथपदोक्तं काम्यकर्मादौ वैराग्यं न युक्तमुत युक्तमिति चिन्ता। तदर्थं कर्म महासुखहेतुरुत नेति। तदर्थं कर्मिणः स्वर्गादिगतौ "धूमो भूत्वाभ्रं भवती" (छां. ५-१०-५)त्यादिना श्रुतो धूमादिभावः किं धूमादिभावः किं धूमादिदैवतैक्यतत्पदप्राप्त्यन्यतररूपः उत सादृश्यादिरूप इति। तदर्थं धूमो भवतीत्यादिसामानाधिकरण्यं किं मुख्यमुत सादृश्यादिना गौणमिति। तदर्थं बाधकं नास्त्युतास्तीति ॥ पूर्वपक्षस्तु ॥ देवतैक्यपदप्राप्त्योरन्यतर एव धूमादिभावः। सामानाधिकरण्यश्रुतेर्मुख्यार्थत्यागे बाधकाभावात्। देवताभिः स्नेहादिवशेन ताभिरेव विद्याप्राप्यस्यापि स्वपदस्य दातुमपि शक्यत्वेन कर्मिणस्तत्पदप्राप्तेरसम्भावितत्वाभावाच्च सुखहेतुत्वान्न कर्मणि वैराग्यमिति ॥ सिद्धान्तस्तु ॥ लोकेऽन्यस्यान्यभावादृष्ट्यापि अत्यन्तभिन्नस्य कर्मिणो देवतैक्यस्यायोगात्तत्पदस्य च नियताधिकारिभिः विद्ययैव गम्यतया युगपदनेककर्मिसमवायेऽनेकेषामेकपदप्राप्त्यनुपपत्त्या चासम्भवात् सामानाधिकरण्यश्रुतेर्मुख्यार्थत्यागावश्यंभावेन धूमादिभावप्राप्तिश्च "तद्गतौ गतिरेवत्वि" (गारुड)त्यादि स्मृत्युक्तदिशा देवतासादृश्यपरा वा तत्प्रवेशेन स्थानैक्यपरा वा

नेयेति महासुखाहेतुत्वाद्युक्तं काम्यकर्मणि तत्फले च वैराग्यमिति ॥ १६ ॥

**॥ ॐ नातिचिरेण विशेषात् ॐ ॥ १७ ॥**

पूर्वत्रागतौ कर्मिणो धूमादिभावश्चिन्तितः अत्र तु आगतिरेव कियत्कालेनेति चिन्तनाद्वा कर्मिणो देवतास्वाभाव्यापत्तावपि तस्याश्चिरकालीनत्वेनापि महासुखवत्वान्न कर्मणि वैराग्यमिति शङ्कनात्सङ्गतिः । अत्राथपदोक्तं काम्यकर्मणि वैराग्यं न युक्तमुत युक्तमिति चिन्ता । तदर्थं तत्किं महासुखहेतुरुत नेति । तदर्थम् आगमने कालकॢप्तिर्नास्त्युतास्तीति ॥ पूर्वपक्षस्तु ॥ आगमने एतावति काल एवागन्तव्यमिति कालक्लृप्त्यभावेन "यथेतमाकाशमि" (काषायण) त्यादिनागतौ बहुस्थानप्राप्तिश्रवणेन च तत्तद्देवतास्वाभाव्येन प्राप्तातिमहासुखत्यागेन शीघ्रमागमने हेत्वभावाच्च । कल्पान्तमेव मध्येमार्गमवस्थने प्राप्तसुखहेतौ न कर्मणि वैराग्यं युक्तमिति ॥ सिद्धान्तस्तु ॥ "तद्य इह रमणीय चरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्यन्ते" (छां. ५-१०-७) इत्यादिश्रुतौ "स्वर्गाल्लोकादवाप्नोति वत्सरात्पूर्वमेवेत्वि"ति (नारदीय) स्मृतौ च आगतौ कर्मिणः कालक्लृप्त्यवगमनात् क्लृप्तकालाधिकावस्थाने कारणाभावात् तस्येष्टत्वेऽपि जीवस्यास्वातन्त्र्यात् । अन्यथा सर्वेषां दुःखाभावप्रसङ्गात् अतिचिरेणैवागमनमिति भाव्यं काम्ये कर्मणि वैराग्येणेति ॥ १७ ॥

**॥ ॐ अन्याधिष्ठिते पूर्वपदभिलापात् ॐ ॥ १८ ॥**



**॥ ॐ अशुद्धमिति चेन्न शब्दात् ॐ ॥**

पूर्वत्र श्रुत्यादिना कर्मिणोऽचिरेणागतिरित्युक्तिरयुक्ता तत्रैवानाश्वासादिति शङ्कनात्सङ्गतिः। अथ पदोक्तं वैराग्यं न कार्यमुत कार्यमिति चिन्ता। तदर्थं निर्वेदमायादित्यादिवैराग्यविधायकश्रुतौ आश्वासो न युक्त उत युक्त इति। तदर्थं वेदं क्वचित्फलव्यभिचारी उत नेति। तदर्थं सुखहेतुतया वेदोक्तकर्मवन्तः किमागतौ दुःखवन्तो न वेति। तदर्थं "त इह व्रीहियवा" इति (छां. ५-१०-६) श्रुत्युक्तकर्मिणां व्रीह्यादिभावः किं मुख्यः उत धूमादिभाववद्गौणः इति। गौणत्वेऽपि कर्मिणो दुःखप्रापकमस्त्युत नेति ॥ पूर्वपक्षस्तु ॥ न कार्यं वैराग्यं तद्विधायकश्रुतावनाश्वासात्। तदनाश्वासश्च स्वर्गकामो यजेतेत्यादिवत् वेदैकदेशे सुखसाधनतयोक्ते कर्मणि कर्मफलमार्गे व्रीह्यादि भावावगत्या तच्छेदनकुट्टनादिना दुःखप्राप्तेरावश्यकतया फलवैपरीत्येनानाश्वासात्। व्रीह्यादिभावस्य धूमाधिभाववत् गौणत्वे व्रीह्यादिदुःखिजीवैः सहावस्थानेन यागादिकर्मणः पशुहिंसारूपतया पापत्वेन कर्मिणो दुःखप्रापकसत्त्वेन च दुःखावश्यंभावाच्चेति ॥ सिद्धान्तस्तु ॥ कर्मिणः श्रुतव्रीह्यादिभावस्य जीवान्तराधिष्ठितव्रीह्यादिदेहप्रवेशरूपतया पूर्ववद्गौणत्वात् दुःखजीवेन सहावस्थानेऽपि कर्मणो हिंसारूपत्वेऽपि "वायव्यं श्वेतमालभेते"त्यादि वेदविहितत्वेन अपापतया दुःखाप्रापकत्वेन हेत्वभावेन कर्मिणो दुःखाप्राप्तेर्न क्वापि वेदनाश्वास इति भाव्यं वैराग्येणेति ॥ १८ ॥

**॥ ॐ रेतस्सिग्योगोऽथ ॐ ॥ १९ ॥**

पूर्वत्रान्याधिष्ठिते व्रीह्यादिदेहे इव स्वर्गादागतस्य कर्मिणः

पितृदेहे प्रवेशसाधनात्सङ्गतिः। अथ पदोक्तं कर्मादावतिवै-राग्यमनपेक्ष्यमुतापेक्ष्यमिति चिन्ता। तदर्थं स्वर्गादागतस्य क-र्मिणः पितृप्रवेशो नास्त्युतास्तीति। तदर्थं "योवा रेतस्सिञ्चति तमेवानुप्रविशती"ति श्रुतिः दुर्बला "स्वर्गादवाग्गतश्चापि मातु-रेवोदरं व्रजेदि"ति वचनं प्रबलमुतविपरीतमिति। तदर्थं वचनं सयुक्तिकमुतनेति। तदर्थं कर्मिणः पितृप्रवेशे प्रयोजनं नास्त्यु-तास्तीति॥ पूर्वपक्षस्तु॥ कर्मिणः पितृप्रवेशे फलाभावात् रे-तसो देहपरिणामायापेक्षितत्वेऽपि सेकानन्तरं मातृप्रवेशेऽपि त-दुपपत्तेः मातुरेवोदरं व्रजेदिति वचनात् सयुक्तिकसाधारणवचन-बाधिततया पितृप्रवेशश्रुतेः दौर्बल्येन पितृप्रवेशाप्रापकत्वात् ना-स्ति पितृप्रवेश इति नापेक्ष्यमतिवैराग्यमिति॥ सिद्धान्तस्तु॥ देहक्लृप्त्यर्थमावश्यकतया रेतस उक्तविधया अन्यथोपपत्तावपि "ईशक्लृप्त्यैव पितरं प्रविष्टो याति मातरमि"ति ईशक्लृप्तिवचनेन "रेतःसिचमेवानुप्रविशती"ति (कौण्ठरव्य) श्रुत्या च पितृप्रवेश-सिद्धेः मातुरेवेत्येवकारस्य अयोगव्यवच्छेदकत्वेनोपपत्त्या सयु-क्तिकत्वाभावेन च पितृप्रवेशाप्रतिबन्धकत्वादस्ति पितृप्रवेश इति भाव्यं कर्मादावतिवैराग्येणेति॥ १९॥

**॥ ॐ योनेश्शरीरम् ॐ ॥२०॥**

पूर्वसूत्रे अथ पदोक्ता पितृद्वारा मातृप्राप्तिरेवात्र साध्यत इति सङ्गतिः। अथ पदोक्तकर्मादावतिवैराग्यम् अनावश्यकमुताव-श्यकमिति चिन्ता। तदर्थं कर्मिणो देहप्राप्तौ आयासो नास्त्युता-स्तीति। तदर्थं पितृदेहयोनिद्वारा मातृदरं प्राप्य स्वदेहं प्राप्नोति

उत तथैवाप्नोतीति। तदर्थमुक्तक्रमादन्यथापि जन्म सम्भवत्युत नेति ॥ पूर्वपक्षस्तु ॥ उक्तक्रमादन्यथापि कर्मिणो जन्म सम्भवति। तथा हि। पितुस्सकाशादेव तस्मिन् बहिरेव वा मान्धातृद्रोणादेरिव जन्मसम्भवेन मातुरुदरप्राप्ते रनावश्यकत्वात्तदावश्यकत्वे वा "देहगर्भस्थितं क्वापि प्रविशेत्स्वर्गतो गतः" इत्युक्तेः। आस्तिकादेरिव संस्पर्शद्वारा पितुस्सकाशान्मातुरुदरप्रवेशसंभवेन योनिप्राप्तेरनावश्यकत्वात्। "देहं गर्भस्थित"मिति वचनान्मात्रुपभुज्यमानान्नादिना मातृदरप्रवेशसम्भवात् मातृदेहस्थरेतसैव देहपरिणतिसम्भवाच्च पितृप्रवेशस्यापि व्यर्थत्वात्। अतो जन्मप्राप्तावत्यायासाभावात् नातिवैराग्येण कृत्यमिति ॥ सिद्धान्तस्तु ॥ पितृप्रवेशपूर्वं योनिद्वारा मातृदरप्रवेशेनैव कर्मिणो जन्म नान्यथा। "दिवः स्थास्नुं गच्छति स्थास्नुभ्यः पितरं पितुः मातुश्शरीरं शरीरेण जायते" इत्यादि (पौष्यायण) श्रुतेः। देहं गर्भस्थितमित्यादेः योगाराधितभगवत्प्रसादलब्धसामर्थ्यातिशयवतां महात्मनां जन्मविषयमिति कर्मिणो देहप्राप्तौ आयाससद्भावात् भाव्यं कर्मादावति वैराग्येणेति ॥ २० ॥

इति श्रीराघवेन्द्रयतिकृतायां न्यायमुक्तावल्यां तृतीयाध्यायस्य प्रथमः पादः ॥

## ॥ अथ द्वितीयः पादः ॥

यद्दार्ढ्यार्थं वैराग्यमुक्तं पूर्वपादे या च वक्ष्यमाणोपासनाङ्गं तादृ-

शभक्त्यर्थमत्र पादे भगवन्महिमोच्यत इति पूर्वोत्तरपादसङ्गतिः।

एतत्पादार्थश्च भाष्यादितो व्यक्तः ।

**॥ ॐ सन्ध्ये सृष्टिराह हि ॐ ॥ १ ॥**

॥ ॐ निर्मातारं चैके पुत्रादयश्च ॐ ॥ ॥ ॐ मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॐ ॥ ॥ सूचकश्च हि श्रुतेरचाक्षते च तद्विदः ॐ ॥

पूर्वत्र योनेश्शरीरमिति जीवानां जन्मावगताववस्थावर्णनस्य अवसरप्राप्तत्वात् तत्रावस्थानां मध्ये “योनिमन्ये प्रपद्यन्ते” इत्यादि काठकश्रुतौ (२-२-७) योनिप्राप्त्यनन्तरं स्वप्नोक्त्या तदनुरोधेनात्रादौ स्वप्नार्थतत्प्रतीतिनियन्तृत्वरूपो महिमा हरेर्निरूप्यते । अत्र जिज्ञासासूत्रस्थाथशब्दोक्ताधिकारिविशेषणीभूता हरिभक्तिः न कार्योत कार्येति चिन्ता। तदर्थं स्वप्नोऽर्थः किमीशानधीन उत तदधीन इति। तदर्थं किमसत्य उत सत्य इति । तदर्थं किं सत्यत्वे साधकं नास्ति बाधकं चास्ति उत विपरीतमिति ॥ पूर्वपक्षस्तु ॥ नेशाधीनः स्वप्नार्थः तस्यासत्त्वात् । असतोऽपि शशविषाणादेरसत्यत्वेन ईशाधीनत्वस्य एतेन सर्वे व्याख्याता इत्यत्रोक्तावपि घटादितौल्येन योगक्षेमादिरूपतदधीनत्वस्य असतोऽनुपपत्तेः । न चासिद्धो हेतुः । सत्यत्वे साधकाभावाद्बाधकबाहुल्याच्च स्वप्नार्थानां सत्यत्वे नित्यत्वमनित्यत्वं वा वाच्यम्। उभयथापि प्रागूर्ध्वमुपलम्भप्रसङ्गात्। तदैवोत्पत्तिविनाशवत्त्वं तु प्रमाणाभावदयुक्तम्। कर्त्रुपादाननिमित्तानामभावाच्च। बाह्योपादानादिकारणकत्वे कपालाद्युपलम्भापाताच्च। तदजन्यत्वे च शुक्तिरूप्यवदसत्त्वस्य दुर्वारत्वाच्च। अस-

न्तः एव गजादयः स्वप्ने दृष्टा इति बाधबोधयोगाच्च। एवं बाधकान्तराणि टीकोक्तानि ज्ञेयानि ॥ सिद्धान्तस्तु ॥ "यदा कर्मसु काम्येषु स्त्रियं" (छां. ५-२-९) इत्यादि श्रुतिस्मृतितः स्वप्नार्थानां शुभादिसूचकत्वप्रमाणेन शाकुनवत्सत्यत्वात्। "न तत्र रथा" इत्यादि (ब्र. ६-३-१०) श्रुत्या प्रागसतामेवार्थानां स्वप्न एव दृष्टेः। सृष्टेश्चोक्त्या तदैवोत्पत्तिनिरोधयोः सम्भवेन प्रागूर्ध्वमुपलम्भप्रसङ्गात्। 'य एषु सुप्तेषु' इति (का. ५,७) श्रुतौ "एतस्माद्ध्येव पुत्रो जायते" इति (गौपवन) श्रुतौ च स्वप्नार्थानाम् ईशकर्तृत्वस्योक्त्या कर्त्रभावचोद्यस्य तथा बाह्यार्थघटादिवत् स्फुटमनभिव्यक्तत्वयुक्त्या "मनोगतांस्तु संस्कारान्" इति (ब्रह्माण्ड) स्मृत्या च बाह्योपादानविलक्षणमानसवासनोपादानकत्वावगमेन निरुपादानकत्वचोद्यस्य चानवकाशात्। स्वप्नानां जाग्रत्पदार्थत्वस्यासत्त्वेन बाधोपपत्तेश्च साधकसद्भावाच्च स्वप्नार्थाः सत्या एवेति स्वप्नार्थाः तद्धियः तत्तिरोधानं चेति सर्वमीशाधीनमिति। फले तु पूर्वाध्यायोक्तसर्वनियन्तृत्वरूपमहिमोक्षेपादि द्वारा भक्त्याक्षेपसमाधी ॥ सूत्रक्रमस्तु ॥ बाधकनिरास एव साधकं सुस्वस्थं भवतीति त्रिसूत्र्या बाधकानि निरस्यान्ते साधकोक्तिः। अत एव दोषपरिहाराय सूत्रमिति टीका। तत्रापि सृष्टौ सिद्धायां कर्त्रादिकारकचिन्ता। तत्रापि कर्तुः प्राधान्यमित्यादिरूह्यः ॥ १ ॥

**॥ ॐ पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॐ ॥२॥**

अस्तु स्वप्नपदार्थानामुक्तदिशा ईशायतत्त्वं न तु तद्धीतत्ति-रोधानयोः। तयोः बाह्यार्थाज्ञानज्ञानाभ्यामेव सिद्धेः इति श-ङ्कनात्सङ्गतिः। अत्राथपदोक्तभक्तिर्न कार्या उत कार्येति चि-न्ता। तदर्थं प्रकृताविर्भावतिरोभावौ किमीशाधीनौ उत तदनधी-नाविति। तदर्थं बाह्यार्थाज्ञानज्ञाने किं स्वप्नधीतिरोधानयोः स्व-तन्त्रहेतुरुत निमित्तमात्रमिति ॥ पूर्वपक्षस्तु ॥ स्वाप्नाविर्भावति-रोधानयोः बाह्यार्थाज्ञानज्ञानाधीनानुभवेन तदाविर्भावतिरोधा-नयोः बाह्यार्थज्ञानाज्ञानयोः स्वनिबन्धनस्वाप्नार्थधीतन्निवृत्त्यो-रन्यापेक्षास्तीति ॥ सिद्धान्तस्तु ॥ यथा बन्धमोक्षयोः ईशज्ञा-नज्ञाननिबन्धनत्वप्रसिद्धावपि तयोर्जडत्वेनास्वतन्त्रतया बन्धको भवपाशेन भवपाशाच्च मोचक इत्यादि वचनेनेशाधीनावेव बन्ध-मोक्षौ तथा बाह्यार्थज्ञानाज्ञाननिमित्तकतया प्रतीयमानावपि स्व-प्नाविर्भावतिरोभावौ इशाधीनावेव। ज्ञानाज्ञानयोरस्वातन्त्र्यात्। ते तु निमित्तमात्रम्। "स्वप्नादिबुद्धिकर्ता च तिरस्कर्ता स एव चे"त्यादेरिति। टीकायां तु सूत्रे बन्धविपर्ययाविति द्विवचन-स्य स्वप्नादि बुद्धिकर्तेति स्मृत्युक्तेश्च स्वारस्यानुरोधेन आविर्भा-वस्य अज्ञानाधीनत्वनिरासकाधिकरणान्तरस्याभावेन तिरोधा-नस्य ज्ञानाधीनत्वनिरासकन्यायसमानविषयत्वात् आद्यसूत्रादौ तिरोहितमित्यस्योपलक्षणतया सिद्धान्ते स्वप्नाविर्भावतिरोभाव-योः साम्येन द्वन्द्वेन निर्देशाद्यथाश्रुतं सूत्रानुरोधेन तिरोधानमात्र-प्राधान्येन पूर्वपक्षोक्तावपि द्वयोस्साम्येनैव पूर्वपक्षोभिमत इत्य-विरोधः ॥ २ ॥

**॥ ॐ देहयोगाद्वासोपि ॐ ॥ ३ ॥**

षष्ठे काण्वश्रुतौ ज्योतिर्ब्राह्मणो "सवा एष एतस्मिन् (संप्रसादे) रत्वा चरित्वे" त्यादिना (बृ. ६-३-१५) स्वप्नोक्त्यनन्तरं जाग्रदुक्त्या स्वप्नाविर्भावादिचिन्तानन्तरम् अत्र जाग्रच्चिन्तनात्सङ्गतिः। अत्र जाग्रदर्थानां स्वप्नार्थवन्न मिथ्यात्वं बहुजनविवादाभावात् बाधकाभावत्। अल्पजनविवादस्य "ना भाव उपलब्धेः" (ब्र. सू. २-२-२८) "वैधर्म्याच्च न स्वप्नादिवत्" (ब्र.सू. २-२-२९) इत्यत्र निरासात्। अत्र भगवदधीनतामात्रं चिन्त्यते। देहाभिमानादिनावस्थितिरूप जाग्रदवस्था अहरादिकालाधीनेति प्राप्ते पूर्ववदेव कालस्यास्वातन्त्र्यादीशाधीनैवेति सिद्धान्तः। विशेषशङ्का तु कालास्वातन्त्र्यबुद्धेः बाधकाभावेन भ्रमत्वायोगात् न निमित्तमात्रपरत्वमिति। परिहारस्तु "स एव जागरितास्थापयती"त्यादि श्रुतिबलान्निमित्तमात्रपरत्वमिति। फले तु पूर्ववत् ॥ ३ ॥

**॥ ॐ तदभावो नाडीषु तच्छ्रुतरात्मनि हि ॐ ॥ ४ ॥**

पूर्वत्र स्वप्नजागरणयोः कालादेरस्वातन्त्र्येणेश्वराधीनत्वोक्तौ अवशिष्टसुप्तेरपि पूर्वन्यायेनेशाधीनत्वसिद्धौ अत्रेशस्य सुप्तजीवप्राप्यत्वलाभाय सुप्तिस्वरूपमेव निरूप्यते। अत्र जीवस्य सुप्तिः नाडीपरमात्मनोरन्यतरत्र उतोभयत्रेति चिन्ता। तदर्थं "सता सौम्य तदासम्पन्न" इति (छां. ६-८-१) "आसु तदा नाडीषु सृप्तो भवति" इति (छां. ७-६-२) च श्रुतिद्वयमुभयत्र सुप्तिव्यवस्थापकं न भवत्यथ भवतीति। तदर्थमुभयत्र सुप्तिविरुद्धोत

नेति। तदर्थम् आद्ये तच्च किं परमात्मन्युत नाड्यामिति। तदर्थं नाड्यां सुप्तौ औत्तरिकानुस्मृतिर्न युक्तोत युक्तेति। तदर्थं सा किं सौषुप्तिकसुखाद्यनुभवजन्यस्मृतिरूप उत दुःखाभावानुमितिरूप इति। यद्याद्यः पक्षः तदा सुखानुस्मृतिसिद्धसौषुप्तिकसुखैकानुभवस्य ईशादन्यत्रस्थितौ स्वप्नादाविवायोगात्परमात्मनीति फलम्। यद्यन्त्यः तदा सुप्तौ सुखानुभवस्यैवाभावेन नाड्यामेवेति फलम्॥ पूर्वपक्षस्तु॥ उभयत्र सुप्तेर्विरुद्धत्वेन श्रुतिद्वयस्योभयत्र सुप्तिव्यवस्थापकत्वाभावात् अन्यतरत्रेत्यवश्यं वाच्यम्। सुप्तिकालस्याज्ञानेन पक्षीकरणायोगात् अनुमानानुदयेन "एतावन्तं कालं सुखमहमस्वाप्समित्यस्य स्मृतित्वेन तत्सिद्धसुखैकानुभवस्य भगवतोन्यत्रावस्थाने जाग्रदादाविवायोगात् परमात्मन्येवेति।" सता सौम्य तदा सम्पन्नो भवतीति श्रुतेश्च। न च नाडीषु सुप्तो भवतीति श्रुतिविरोधः प्राचीनश्रुतेस्सयुक्तिकत्वेन प्राबल्यादिति॥ सिद्धान्तस्तु॥ नित्यनिर्दोषतया प्रमाणभूतयोरुक्तश्रुत्योः साक्षादसाक्षात्त्वाभ्यां नाडीस्थपरमात्मनीति व्यवस्थया विरोधाभावे सम्भवति अप्रामाण्यायोगात् सुखैकानुभवस्य चोपपत्तेः नाडीस्थपरमात्मन्येवेति। फले तु श्रुत्याद्यवस्थाद्वारा भक्त्यादि साधनशास्त्रानास्थातन्निरासमुखेन भक्त्याक्षेप समाधी। टीकायां त्वन्यतरत्रेति पक्षं सिद्धवत्कृत्य परमात्मनि नाडीषु वा इत्येतत्सन्दिह्य वाद्यन्तरपक्षनिरासाय नाड्यामेवेति पक्षं व्युदस्य परमात्मन्येवेति पूर्वपक्षव्याजेन स्थापयित्वा उभयत्रेत्येव सिद्धान्तितम्॥ ४॥

॥ ॐ अतः प्रबोधोऽस्मात् ॐ ॥५ ॥

अत्र प्रागुक्तसुप्तप्राप्यत्वहेतुनैव सिद्धान्तकरणात्सङ्गतिः । प्रकृतसुप्तप्रबोधः किं क्वचित् भेरीताडनादि हेत्वन्तराधीनः उत सर्वत्रेशैकाधीन इति चिन्ता । क्वचित् भेरीताडनादि हेत्वन्तरदृ-ष्टेः निमित्तमात्रकल्पकं नास्त्युतास्तीति ॥ पूर्वपक्षस्तु ॥ क्वचि-द्भेरीताडनादि कारणान्तराणामप्युपलम्भात्तत्रापि ईश्वरकल्पने मानाभावेन कारणान्तराभावस्थले प्रबोधस्येशाधीनत्वेऽपि न कारणान्तरसद्भावस्थले तत्र तेषामेव स्वातन्त्र्योपपत्तौ निमित्त-मात्रत्वकल्पने हेत्वभावादिति ॥ सिद्धान्तस्तु ॥ "एष एव सुप्तं प्रबोधयती"ति (कौण्डिण्य) सावधारण श्रुतिविरोधेन हेत्वन्त-राणां निमित्तमात्रत्वात् सुप्तप्रबोधकोऽपि ईश्वर एव न तु का-रणान्तरस्वातन्त्र्यमिति । फले तु अथ पदोक्तभक्त्याक्षेपसमाधी एवेति ॥ ५ ॥

॥ ॐ स एव च कर्मानुस्मृति शब्दविधिभ्यः ॐ ॥ ६ ॥

पूर्वत्र सामान्यतः स्वप्नाद्यवस्था ईशाधीनेत्युक्तम् । अत्र तु सर्वजनीनाः सर्वकालीना अपि तदधीना इति चिन्त्यत इति स-ङ्गतिः । स्वप्नाद्यवस्था प्रेरकत्वेन प्रकृतो विष्णुः किं केषाञ्चित्का-दाचित्कावस्थाप्रेरकः उत सर्वजीवानां सर्वकालीनावस्थाप्रेरकः इति चिन्ता । तदर्थं लोकदृष्टिर्नियामिका भवति उत नेति । त-दर्थं राजादिलोकदृष्ट्यपवादकं मानं नास्त्युतास्तीति ॥ पूर्वपक्ष-स्तु ॥ केषाञ्चित्कादाचित्कावस्थाप्रेरको न सर्वजनीनसर्वकाली-नावस्थाप्रेरकः लोके राजादौ खण्डशत्वदर्शनात् । न च दृष्टिर-

प्रयोजिका। तथात्वे प्रत्यक्षसिद्धा ज्ञानकालभेरीताडनादि कारणापेक्षापि स्वप्नाद्यवस्थाप्रेरणेन स्यात्। न च 'अन्यभावव्यावृत्तेश्चे'त्यादौ (ब्र.सू. १-३-१२) लोकदृष्टित्यागेनोक्ताणुत्वमहत्वस्त्रीत्वपुंस्त्वादि सहभाववत् "अल्पश्रुते" (ब्र.सू. १-३-२१) रित्यत्रोक्तव्योमांशवैलक्षण्यवत् "श्रुते" (ब्र.सू. २-१-२८) रित्यादौ निरंशस्याप्येकदेशेन प्रवृत्त्यादिवच्चास्तु लोकदृष्टित्यागे सर्वप्रेरकत्वमिति वाच्यम्। तत्राणोरणीयान् अस्थूलमनण्वित्यादि एषमेऽन्तर्हृदये ज्यायान् योऽसौविरुद्धोऽविरुद्धः इत्यादि प्रमाणवत् इह सर्वावस्थाप्रेरकत्वे मानाभावात् येन दृष्टित्यागः स्यादिति ॥ सिद्धान्तस्तु ॥ विष्णुरेव सर्वत्र सर्वजनीन सर्वकालिक सर्वावस्थाप्रेरकः न तु क्वचिदन्योऽपि प्रेरकः। "एष ह्येव साधुकर्म कारयती"त्यादि भाष्योक्त (कौशीतकी ३-८) श्रुतिबलेन "आत्मानमेवलोकमुपासीते"त्यादौ (ब्र.उ. ३-४-१५) आत्मन एवोपास्यत्वोक्त्यन्यथानुपपत्या च अस्यैव सर्वप्रेरकत्वावगमात्। अन्यथा अन्यस्यापि क्वचित्प्रेरकत्वे श्रुतावधारणायोगात्। न चैवं लोकदृष्टिविरोधः। श्रुत्यादिप्रमाणबलेन लोकदृष्टस्यापि लौकिक धेन्वादावदृष्टस्य कामधेन्वादाविवोपपत्तेरिति। फले तूक्ते एव ॥ ६ ॥

**॥ ॐ मुग्धेऽर्धसम्पत्तिः परिशेषात् ॐ ॥ ७ ॥**

एवं प्रधानावस्थानां चिन्तानन्तरं अत्रावांतरावस्थाचिन्तनात्सङ्गतिः। अत्र स्वप्नाद्यवस्थाचिन्ताप्रसङ्गसन्निधापितो मोहः किं स्वप्नाद्यवस्थान्यतमान्तर्भूतः उत ततोऽवस्थान्तरमिति। त-

दर्थं स किं भगवत्प्राप्तितदन्यत्रस्थित्योरन्यतररूपः उत ताभ्यामन्यादृश एवेति। तदर्थमन्यादृशत्वे मानं नास्त्युतास्तीति।यद्याद्यस्तदा अवस्थान्तरमिति व्यक्तम्। तथान्यतररूप इत्यत्रापि किमुक्तभगवत्प्राप्तिरूपः किं वा अन्यत्रस्थिति रूप इति चिन्ता। तदर्थं किमयं सुप्तिसधर्म स्वप्नजाग्रत्सधर्मेति। अत्रापि व्यक्तं फलफलीभावः। अत्र टीकायामाद्यसंदेहः सिध्दान्तोक्तदिशा सुज्ञान इति प्रधानावस्थान्तरं नेति प्रदर्शनाय स्वप्नादित्रितयान्यतमत्वं सिध्दवत्कृत्य मोहे ब्रह्मप्राप्तिरेव पृथगवस्थात्वादिति न्यायविवरणे जाग्रत्स्वप्नयोः पृथगवस्थादियर्थं - मुपेत्य तदनुगुणत्वेन संदेहपूर्वपक्षौ दर्शितौ। अत एव सिद्धान्ते मोहस्य अवस्थात्रयातिरिक्तत्वे भवेदेतदित्यायुक्तमिति ज्ञेयम्॥

पूर्वपक्षस्तु॥ मोहः स्वप्नादि व्यवस्थान्तर्भूत एव न तु ततोरिक्तः मानाभावात्। ब्रह्म प्राप्तितदन्यत्रस्थित्योः सुप्त्याद्यवस्थात्वेन ततो अन्यादृशस्थितेरभावेन अतिरिक्तत्वासम्भवाच्च। बाह्यार्थाज्ञानसाम्येन सुप्त्याद्यन्तीवसम्भवाच्च। अन्तर्भावपक्षेषि न भगवदन्यत्रस्थितिरूपस्वप्नजाग्रदवस्थांतर्भूतः। तयोः स्वप्नवाह्यगजतुरगाद्यर्थ ज्ञानवत्वरूपत्वान्मोहस्य च तदुभयज्ञानशून्य -सुप्तिसमानधर्मतया समग्रभगवत्प्राप्तिरूपसुप्त्यवस्थांतर्भूत एवेति॥ सिद्धान्तस्तु॥ दुःखमात्रप्रतिस्मृतेरिति(वाराह) स्मृत्या दुःखात्मकालातिरिक्तविपर्यातरज्ञानशुन्य रुपत्वेन सुखादिज्ञानोपेतसुप्तयाद्यंतर्भावायोगात् मोहावस्थात्रयातिरिक्तावस्थैव दुःखैकानुभवत्वस्यैव भानत्वात्। न चातिरिक्तत्वासम्भवः। पर-

मात्मविदूरत्वसामीप्य प्रवेशानां तदन्यत्रस्थिति तत्प्राप्तिरूपाणां "हृदयस्था" दिति(वाराह) स्मृत्यार्धप्रवेशस्य मोहत्वेनावशयं वाच्यतया परिशेषप्रमाणसिध्दत्वादिति। फले तु अवस्थान्त-रावस्थितजीवप्राप्यत्वरूपमाहात्म्याभावतद्भावाभ्यां भक्त्याक्षेप-समाधी। अत्र मोहः किं बाह्यकारणाधीन उत ईश्वराधीन इति सन्देहे बलवदभिघातादिबाह्यकारणाधीनत्वान्ने-शाधीन इति प्रा-प्ते "स एव च" इत्यत्रोक्त (ब्र.सू. २ ३-९) सिद्धान्तन्यायेन ईशा-धीन एव। बाह्यकारण दृष्टिस्तु "मूर्छाप्रबोधनं चैव तत एव प्रव-र्तत" इति विशिष्यकौर्मस्मृत्या निमित्तमात्रविषयेत्यर्थस्य पूर्व-न्यायेनैवसिध्दत्वात् नात्र तच्चिन्तनं कृतमिति ज्ञेयम् ॥७॥

**॥ ॐ न स्थानतोऽपि परस्योभयलिंगं सर्वत्र हि ॐ ॥८॥**

॥ ॐ न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॐ ॥ ॥ ॐ अपि चैवमेके ॐ ॥

पूर्वत्र सर्वावस्थाप्रवर्तकत्वस्य हरेरुक्तौ इह तत्प्रवर्तकवि-श्वादिरूपेषु भेदशङ्कानिरासात्सङ्गतिः। प्रतिशरीरं जाग्रदादि-स्थानेषु स्थितो विश्वादिरूपी भगवान् किमन्योन्यं भेदवानु-ताभिन्न इति चिन्ता। तदर्थं किं तस्य भेदसाधकं भिन्नाने-कस्थानत्वं कार्यकारणबद्धत्वादिभेदश्रवणं च किं निरवकाश-मुत गौणत्वादिना सावकाशमिति।पूर्वपक्षस्तु॥ अन्योन्यं भे-दवानेव अक्षिकण्ठादिरूपभिन्नस्थानकत्वात् घटादिवत्। न च भिन्नस्थानकत्वं भेदरूपसाध्येन विना व्योमवदित्यत्रोक्तदिशा व्योम्न इव वा हरेरप्यभिन्नमिति वाच्यम्। व्योम्नोऽशतोऽनेक-

स्थानत्वसम्भवेपि हरेरनेकस्थानस्थितविश्वादिरूपाणां "सप्तङ्ग एकोनविंशतिमुख"(मां१-३-) इत्यादिना प्रत्येकं समग्ररूपश्रवणेन व्योमवैषम्येण भेदसाध्येन विना हेतोरनवकाशात्। किं च "कार्यकारणबध्दौ तौ" (मां. २-२) इत्यादिना विश्वादिरूपाणां जाग्रत्स्वप्नसुषुप्तिरूपकार्यबद्धत्वकारणबद्धत्वाबध्दत्वस्थूलभुक्तवसूक्ष्मभुक्तवादिरूपेण भेदव्यपदेशाच्चान्योन्यं भेदवानेव। न चायं व्यपदेशो भेदं विनापि हेत्वन्तरेणैव युक्तः कल्पकाभावात् हेत्वन्त्रादृष्टश्चेति ॥ सिद्धान्तस्तु ॥ अन्योन्यं तत्र तत्र स्थितरूपैरभिन्न एव भगवान्। "सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते" (ऐ.उ.३. ३ २-) सर्वेषु भूतेषु चक्षुरादिस्थानेषु एतमेकमेव पूर्णगुणमाचक्षते इति "एष त आत्मान्तर्याम्यमृतः"(बृ. ५-७-३) इति "अमात्रोऽनन्तमात्रश्चे"ति (मां. ४-७) श्रुतौ च भिन्नांशशून्यः पुनरनन्तांशश्चेति विश्वाद्यनन्तरूपाणां अभेदोक्तेश्च। भेदानुमानस्य भेदप्रतिनिधिविशेषेण वा उक्तानेकश्रुतिबाधिततया अप्रामाण्येनैवोपपत्तेः। भेदव्यपदेशस्य च " भिन्नौभिन्नेषु संस्थितेः" (ब्रह्मतर्क) " ऐश्वर्याद्रूपमेकं च सूर्यवद्बहुधेयते"( ) इत्यादिस्मृत्या गोष्ठे गावः एकीभवन्तीत्यत्रैक्योक्तिवत् व्याप्ते हरौ " अंगुष्ठमात्रः पुरुषः "(का. २- १-१२) इत्युक्तिवच्च स्थानभेदेनोपचारेण वा ऐश्वर्यबलेन वा उपपत्तेः। तदुक्तमन्यत्र श्रुतिबलास्थानानां भेदः तस्याभेदएवे" ति (न्या.वि.)। फले तु भेदप्राप्तौ अनुग्रह्यानुग्राहकभावाद्यापत्त्या "स एव च"(ब्र. सू. ३-२-९) इत्यत्रोक्तैश्वर्यनिरासद्वारा भक्तयाक्षेपसमाधी ॥ ८ ॥

**॥ ॐ अरूपवदेव हि तत्प्रधानत्वात् ॐ ॥ ९ ॥**

॥ ॐ प्रकाशवच्चावैयर्थ्यम् ॐ ॥ ॥ ॐ आह च तन्मात्रम् ॐ ॥ ॥ ॐ दर्शयति चाथोऽपि स्मर्यते ॐ ॥

पूर्वत्रोभयलिङ्गमिति लिङ्गपदेन प्रकृतभगवद्रूपाणामत्र अप्राकृतत्वसाधनात्सङ्गतिः। यदर्थं पूर्वत्र महिमोक्तः सा भक्तिः विष्णौ न यता थ युक्तेति चिन्ता। तदर्थं तत्र माहात्म्यं न युक्तमुत युक्तमिति। तदर्थं रूपवत्त्वारूपवत्त्योर्दोषोस्त्युत नेति। तथा रूपित्वारूपित्वश्रुत्योः किमेकविषयकत्वमुत भिन्नविषयकत्वमिति ॥ पूर्वपक्षस्तु ॥ भक्तिर्हरौ न युक्ता तस्य रूपित्वेऽरूपित्वे वा न अंगीकृते दोपापातेन माहत्म्यायोगात्। रूपित्वे चैत्रवदनित्यत्वप्रसंगात। "नात्माश्रुते"

(ब्र.सू. २-३-१०) रित्यत्रोक्त नित्यदेहत्वस्यापि इहाक्षएपात्।" अरूपमव्ययं"(का. ३-१५) इत्यादिश्रुत्यप्रामाण्यापाताच्च। अरूपित्वे च सौंदर्यसुलक्षणत्वाद्योगात्। रुग्मवर्ण -मादित्यवर्णमित्यादि श्रुत्यप्रामाण्यप्रसंगाच्च। न च रूप्यरूपित्वश्रुत्योरप्राकृतप्राकृत -विषयत्वेनाविरोधान्न कोपि दोष इति युक्तं कल्पकाभावादिति ॥ सिद्धान्तस्तु ॥ "ऐकात्म्यप्रत्ययसारं"(मां-२-१) "आनन्दमात्रमजरं"(चतुर्वेदशिख) "आनन्दरूपममृतं"(मु. २-२-८ ) इत्यातिभाष्योक्तश्रुतिस्मृतिबलेन ज्ञानानन्दाद्यात्मक -दिव्यरूपश्रवणेन रूपश्रुतेस्तद्विषयत्वस्य च" भौतिकानिहरूपाण भूतेभ्येसौ परो यतः। अरूपवानत"(मात्य) इत्यादिस्मृत्या प्रकृत्याद्यतीतत्वहेतुना प्राकृतरूपहीने गृहान्त-

श्चाक्षुषप्रकाशे सत्यपि बाह्यप्रकाशाभावेन प्रकाशो नेत्युक्तिवत् अरूपश्रुतेः अप्राकृतविग्रहेपि हरौ प्राकृतरूपाभावविषयोपपत्तेः । अप्राकृतदिव्यविग्रहस्य च अनित्यत्वाद्यनापादकत्वात् सौन्दर्यादिसम्भवाच्च माहात्म्यवत्तवात् युक्ता तत्र भक्तिरिति । फले तु भक्तयाक्षेपसमाधी ॥९ ॥

**॥ ॐ अत एवचोपमा सूर्यकादिवत् ॐ ॥ १० ॥**

यत्पूर्वनद्धये भगवदंशानां "अमात्रोऽनन्तमात्र" इत्यन्तम् ऐक्यकथनं यच्चारूपवदिति प्राकृतरूपाहित्यकथनं तदुभयमयुक्तम् । जीवस्य भगवदंशानां भेदाभेदात् प्राकृतरूपवत्वाच्चेति शङ्कनात्सङ्गतिः । अथपदोक्तभक्तिरयुक्तोत युत्केति चिन्ता । तदर्थं किं जीवः परामत्मना भिन्नाभिन्नो भिन्न एवेति । तदर्थं किं परमात्मना जीवानां समुदाय समुदायिभावोऽथ बिम्बप्रतिबिम्बभाव इति । तदर्थं प्रतिबिम्बत्वं किमुपाधिकृतत्वादिरूपमुत तदधीनत्वादिरूपमिति । आद्ये त्वनादिनित्यजीवानामौपाधिकप्रतिबिम्बत्वायोगेन समुदायित्वरूपतया समुदायरूपेश्वरेणभेदाभेदौ औपाधिकभेदे सत्यापि स्वाभावकस्वाभेदवति स्वस्मिन्निव भक्तिरयुक्तेत्याद्ये फलम् । अन्ते तु तदधीनत्वादिरूपप्रतिबिम्बत्वस्य जीवानां युक्तत्वेनात्यन्तभिन्ने हरौ भक्तिर्युक्तेति फलम् ॥ पूर्वपक्षस्तु ॥ पृथगुपदेशादित्यत्र जीवेशभेदोक्तावपि सर्वचेतनसमुदायस्येशत्वेन एकैकजीवस्य परमात्मना भेदाभेदेपि भेदाविरोधात् । औपाधिकभेदस्य च स्वाभाविकाभेदकार्याप्रतिबन्धकत्वेन स्वाभिन्ने स्वस्मिन्भक्तिरयुक्तेति । न च भेदोऽसिद्धः चे-

तनत्वादंशत्वान्मत्स्यादिवदिति तत्सिध्देः। बिम्बप्रतिबिम्बभावस्तु औपाधिकोऽनादिनित्ययोर्जीवेशयोर्न युक्त इति ॥ सिद्धान्तस्तु ॥ जीवो नेशाभिन्नः तत्प्रतिबिम्बत्वात्। यो यत्प्रतिबिम्बः स तेनाभिन्नो न भवति यथा सूर्यकादिरित्यनुमानविरोधेन चेतनत्वादेरभेदासाधकत्वात्। न चासिध्दो हेतुः। जीवस्यापीश्वरस्वरूपांशत्वेमत्स्यादिसाम्यापत्त्या ज्ञानैश्वर्याद्यविशेष प्रसङ्गरूपयुक्तया "रूपंरूपं प्रतिरूपो बभूवे"ति (बृ. ४-५-१९) श्रुत्या "बहवस्सूर्यका यदूत्सूर्यस्य सदृशा जले" इति स्मृत्या च तत्सिध्देः। न चानादिनित्यस्यौपाधिकप्रतिबिम्बत्वायोगः। "पृथगुपदेशात्"(ब्र.सू. २-३-२८) "सन्ध्ये सृष्टिराह हि" (ब्र.सू. ३-२-१) "तद्गुणसारत्वा" (ब्र.सू. २-३-२९) दित्युक्तैः भिन्नत्वतदधीनत्वतत्सदृशैरेव धर्मैं प्रतिबिम्बत्वोपगमादिति ॥ १० ॥

**॥ ॐ अम्बुवदग्रहणात्तु न तथात्वम् ॐ ॥ ११ ॥**

पूर्वत्र बिम्बसादृश्यादिना जीवस्येशप्रतिबिम्बत्वोक्तो तर्हि ज्ञानानन्दादिरुपसादृश्यरूपमुक्तेर्नित्यसिध्दत्वान्न तदर्था भक्तिः कार्येति शंकोदयात्सङ्गतिः। अत्र अथपदोक्तेश्वरभक्तिः न कार्येति कार्येति चिन्ता। तदर्थं ईशज्ञानतत्प्रसादद्वारा ज्ञानानन्दादिब्रह्मसादृश्याभिव्यक्तेः श्रुतं फलत्वं न सम्भवत्युत सम्भवतीति ॥ पूर्वपक्षस्तु ॥ ज्ञानानन्दादिब्रह्मसादृश्यस्य "पुंस्त्वादिवत्त्वस्ये" (ब्र.सू. २-३-३१) त्यत्रोक्तदिशा जीवस्वरूपतया नित्यसिध्दत्वात्तदभिव्यक्तेस्तु "अनुबन्धादिभ्यः" (ब्र.सू. ३-३-५१) इति वक्ष्यमाणदिशा ज्ञानहेतुभक्तिफलत्वायोगात्। सुप्रा-

विव कदाचित् स्वयमेव सम्भवेन च ईश्वरापरोक्षज्ञानतत्प्रसाद-द्वारापि भक्तिफलत्वं तस्य न युक्तमिति फलाभावान्न कार्या भक्तिरिति ॥।सिद्धान्तस्तु ॥ सादृश्यस्य नित्यसिध्दत्वेऽपि ईषदभिव्यक्तेः भक्तिं विना सुप्तौ भावेपि सम्यगाभिव्यक्तिरूपमुक्तेः " यमेवैष"(मु. ६-३) इत्यादिभाष्योक्तश्रुतिस्मृतिबलेन भक्तिसाध्यत्वात्तदर्थं भक्तिरवश्यं कार्येति ॥ ११ ॥

**॥ ॐ वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम्**

**ॐ ॥ १२ ॥**

॥ ॐ दर्शनाच्च ॐ ॥

अत्र प्राक् फलहेतुत्वेन उक्तभक्तेः तदुपलक्षितत्वेन साधनजातस्य तरतमभावनिरूपणात्सङ्गतिः। पूर्वसूत्रोक्तं भक्त्युपलक्षितभक्त्यादिसाधनजातं किं भक्तेष्वेकप्रकारमुतानेकप्रकारमिति चिन्ता। तदर्थं तत्फलतयोक्तानन्दादिब्रह्म -सादृश्याभिव्यक्तिः सर्वत्रैकप्रकारा उतानेकप्रकारा इति। सैषानन्दस्येत्यादेः वैराग्यप्रशंसापरत्वेन आनन्दतारतम्ये मानाभावेन फलतारतम्यासिध्दया भक्त्यादितत्साधनमपि भक्तेष्वेकप्रकारमेवफलवैषम्येपि साधनावैषम्ये बाधकाभावाच्चेति पूर्वपक्षः ॥ सिद्धान्तस्तु ॥ सैषेतिश्रुतेः वैराग्यप्रशंसादिपरत्वस्य तद्वाक्यवैयर्थ्यादिनाऽन्यत्र बृहद्भाष्यादिस्थलेषु भाष्यकारैरेव निरासान्नयायामृतेपि (पृ. ६४३-नि) खण्डितत्वात् सैषात्यादिभाष्योक्तश्रुत्यादिसिध्दानन्दादिरूपफलतारातम्यान्यथानुपपत्या तत्साधनेषु तारतम्यमवश्यमभ्युपेयम्। अन्यथा विषमफलदातुरीश्वरस्य वैषम्यादिदैषापा-

तात्। स च नेत्युक्तं वैषम्यनये(ब्र.सू. २-१-३५)। साधनस्यो-त्तमत्वेनेतिभाष्योक्तस्मृति -विरोधाच्चेति। आनन्दादिश्रुतेर्मुक्त-परत्वं च "अक्षरधियां तु"(ब्र. सू. ३-३-३४) इत्यत्राग्रे व्य-क्तम् ॥ १२ ॥

**॥ ॐ प्रकृतैतावत्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॐ ॥ १३ ॥**

पूर्वत्र श्रौतानन्दतारतम्यान्यथानुपपत्त्या तध्देतुतारतम्य-निर्णय इवेहापि श्रुतावधिकव्यापारोक्त्यन्यथानुपपत्त्या पालना-ख्यव्यापारनिर्णयात्सङ्गतिः। अथपदोक्तभक्तिरयुक्तोत युक्त इति चिन्ता। तदर्थं पालकाख्यगुणो हरेर्न युक्त उत युक्त इति। तद-र्थं पालनं नाम कश्चिव्द्यापारो नास्त्युतास्तीति ॥ पूर्वपक्षस्तु ॥ सृष्टस्य वस्तुनो यावत्संहारं स्थितेः स्वत एव सिध्देः संहारदिक-र्तुः असंहाराद्यतिरिक्तो रक्षारूपो व्यापार एव नेति न पालकत्वं हरेर्युक्तमिति ॥ सिद्धान्तस्तु ॥ युक्तैव हरौ भक्तिः पालकत्वा-ख्यगुणवत्त्वात्। न चासंहारातिरिक्तः स नेति वाच्यम्। "नैता-वदेनापरोन्यदस्त्युक्षा स द्यावा पृथिवी"ति (ऋ. १०-३१-८) श्रुतौ पूर्वत्र " अस्येदेषा सुमतिः पप्रथाने " (ऋ. १०-३१-६) त्यादि-नोक्तसृष्टिसंहारकतृत्वस्य "नैतावदि" त्यनेन तावन्मात्रत्वं निषि-ध्य "परोऽन्यदस्तीत्यादिना पालनाख्यव्यापारान्तरस्याप्युक्तया अन्नादिदानेन पोषणादिरूपव्यापारान्तरस्य पालनस्य सम्भवात् सृष्टिं च पालनं चैवेति स्मृतेश्चैवेति ॥ फलेतु व्यक्ते ॥ १३ ॥

**॥ ॐ तद्व्यक्तमाहहि ॐ ॥ १४ ॥**

॥ ॐ अपि संसाधने प्रत्यक्षानुमानाभ्याम् ॐ ॥ ॥ ॐ प्रकाशवच्चावैशेष्यम् ॐ ॥ ॥ ॐ प्रकाशश्च कर्मण्यभ्यासात् ॐ ॥ ॥ ॐ अतोऽनन्तेन तथाहि लिङ्गम् ॐ ॥

पूर्वत्र जन्मादिसूत्रोक्तसृष्ट्याद्यष्टके पालकत्वं प्रसाध्य अत्र स्वज्ञानदत्वमहि साध्यत इति सङ्गतिः। अत्राथपदोक्तभगवद्भक्तिः न कार्यौति चिन्ता। तदर्थं किमफलोत फलवतीति। सा किं ईशस्य व्यक्तत्वेऽव्यक्तत्वे चोभयथापि परमपुमर्थहेत्वीशापरोक्षहेतुरुत अव्यक्तत्वैपि ईश्वरप्रसादद्वारा तध्देतुरिति ॥ पूर्वपक्षस्तु ॥ हरेः स्तम्भादिवत्प्रत्यक्षयोग्यत्वे स्तम्भादिप्रत्यक्षस्येव भक्तिं विनापि प्रत्यक्षत्वसम्भवात् अव्यक्तैकस्वभावत्वे धर्मादिरिव भक्तयादिसाधनेनापि प्रत्यक्षत्वासम्भवात् अन्यथा तादृशस्यापि प्रत्यक्षत्वे समाराधनेनापि यक्षसाक्षात्कारवदीश्वरसाक्षात्कारसम्भवात् अग्नयादिभूतानां स्थूलसूक्ष्मविशेषेण प्रत्यक्षाप्रत्यक्षत्ववन्मूलरूपेण अव्यक्तस्यापि गृहीतरूपेण प्रत्यक्षत्वसम्भवात् न भक्तिः अपोक्षहेतुरिति व्यर्था सती न कार्येति ॥ सिद्धान्तस्तु ॥ "अरूपमक्षरं ब्रह्म सदाऽव्यक्त"मिति(कौण्ठरव्य) श्रुत्या अव्यक्तैकस्वभावस्यापि "आत्मा वा अरे द्रष्टव्यः श्रोतव्य"(बृ. ४-४-५) इत्यादिश्रुतिबलेन भक्तिपूर्वकश्रवणाद्याभ्यसात्प्रसन्नेन अचिन्त्यशक्तिकेश्वरेणैव तदापरोक्ष्यस्य "नित्याव्यक्तोपि भगवानीक्ष्यते निजशक्ति" इति (नारायाणाध्यात्म) श्रुत्युक्तेन मोक्षस्य ज्ञानजप्रसाद साध्यत्वलिंगेन अव्यक्तत्वप्रत्यक्षत्व श्रुतिद्वयान्यथानुपपत्त्या च सिध्दत्वात्। "न तमाराधयित्वापि कश्चिद्व्य-

क्तीकरिष्यती''ति (ब्रह्मवैवर्त) स्मृतिसिध्दमहत्प्रत्यक्षात् अव्य-क्तत्वलिंगेन सूक्ष्मत्वानुमानात् भक्तिहीनाराधनेन ''नासौ सूक्ष्मो न स्थूल'' इत्यादि (माण्डव्य) श्रुत्यादितो गृहीतरूपेण च ईश-प्रत्यक्षत्वस्य अभावावगमात् भक्तिरेव श्रवणादियुक्ता भगवदप-रोक्षहेतुरिति अर्थवतीभक्तिरवश्यं कार्येति ॥ १४ ॥

**॥ ॐ उभयव्यपदेशात्तवहृकुण्डलवत् ॐ ॥ १५ ॥**

॥ ॐ प्रकाशाश्रयवद्वा तेजस्त्वात् ॐ ॥ ॥ ॐ पूर्ववद्वा ॐ ॥ ॥ ॐप्रतिषेधाच्च ॐ ॥

पूर्वत्र हरेरव्यक्तत्वे प्रत्यक्षत्वे च मानभावेन अव्यक्तस्यापि व्यक्तत्वोक्तिवदिहापि गुणात्मत्वेऽपि गुणित्वे चोभयत्र मानभा-वात् गुणात्मनोपि गुणित्वमिति कथनात्सङ्गतिः। अथपदोक्ता हरिभक्ति र्न कार्योति चिन्ता। तदर्थं तस्य गुणत्वं नास्त्युता-स्तीति। तदर्थं गुणात्मनो हरेः गुणित्वं संभावनाप्रमाणाभ्यां हीनं युक्तिविरुध्दं चाथ विपरीतमिति ॥ पूर्वपक्षस्तु ॥ तदात्मके तदूत्वस्य क्वाप्यदर्शनात् गुणरूपस्य हरेः गुणवत्त्वमसंभावितं अत व प्रमाणशून्यं च। हरिर्न गुणवान् गुणात्मकत्वात् यथा न स्वः स्ववान् यो यद्वान् स तदात्मको न यथा दण्डवान् चै-त्रः इति वा इत्यादि युक्तिविरुध्दं च। न च गुणात्मकत्वमसिध्दं समवायाभ्युपगमाच्चेत्यत्र (ब्र.सू. २-२-१३) समवायापाकरणेन ''एकमेवाद्वितीयमि'' ति (छां. ६-२-१) गुणगुण्यादि भेदनिषे-धेन तत्सिध्देः। अतो गुणित्वाभावात् न हरौ भक्तिः कार्येति ॥ सिद्धान्तस्तु ॥ कुण्डलात्मकस्याप्यहेः विशेषबलात्कुण्डलित्व-

वत् प्रकाशात्मकस्याप्यादित्यस्य प्रकाशित्ववत् कालस्य पूर्वेण-भेदेपि पूर्वः कालः इति विशेषणविशेषभाववच्च गुणात्मनोपि ह-रेः गुणित्वंप्रतिनिधिविशेषबलान्नसंभावितम्। "आनन्दं ब्रह्मणो विद्वान्" (तै. २-४) "अथैष परमः आनन्दः" इति गुणत्वगुणि-त्वोभयवयपदेशरूपप्रमाणाच्च "शास्त्रयोनि" नयन्यायेन (ब्र.सू. १-१-३) युक्तयगम्यतया "श्रुते" स्त्वित्यत्रोक्तन्यायेन (ब्र.सू. २-१-२८) युक्तयविरुध्दं चेति हरौ भक्तिः कार्येति ॥ १५ ॥

**॥ ॐ परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॐ ॥ १६ ॥**

॥ ॐ दर्शनात् ॐ ॥ ॥ ॐ बुध्दयर्थः पादवत् ॐ ॥

पूर्वत्रेशगुणानां तदात्मकत्वं तध्दर्मवत्त्वं चोक्तम्। इहतु अ-लौकिकत्वं लौकिकशब्दवाच्यत्वं चोच्यत इति सङ्गतिः। अथ-पदोक्ता हरावतिशयितभक्तिः न कार्योत कार्येति चिन्ता। तदर्थं तदीयगुणजातं लौकिकमुतालौकिकमिति। तदर्थं तस्यालौकि-कत्वे ज्ञानानन्दादितत्तत्पदवाच्यत्वं अयुक्तमुतयुक्तमिति ॥ पू-र्वपक्षस्तु ॥ घटविलक्षणे घटपदवाच्यत्वादृष्टया भगवदानन्दादौ च "आनन्दं ब्रह्मण" इत्यादौ आनन्दादिपदप्रयोगेण तदन्य-थानुपपत्तयाऽलौकिकत्वे मानाभावेन च तद्गुणजातं लौकिक-मेव। अन्यथा तत्र तत्पदप्रयोगायोग इति ॥ सिद्धान्तस्तु ॥ "एषसेतुर्विधृतिः"(छां. ८-४-१) "य एष आनन्दः परस्ये" ति "यतो वाचो निवर्तन्ते"(तै. २-४) इति "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती" ति(बृ. ६-३-३२) "अन्यज्ज्ञानं तु जीवानां अन्यज्ज्ञानं परस्य चे" ति "अदृष्ढव्यवहार्यमव्यपदे-श्यमि" त्यादौ (कौण्डिण्यश्रुति) ब्रह्मानन्दादिगुणेषु लौकिका-



नन्दादावसंभाव्यमान सेतुत्वोन्मात्वशब्दितपूर्णत्वबिम्बत्वलोक-

विलक्षण अदृष्टत्वाव्यपेदेश्यत्वादिधर्माणां उक्तया अलौकिक-त्वावश्यंभाविनितत्तच्छब्दप्रयोगस्य जीवेश्वरयोरंशांशित्वज्ञाप-नार्थत्वेन प्रसिध्दपादविलक्षणेपि जीवे पादोस्य विश्वभूतानी-त्यादौ पादशब्दप्रयोगस्य जीवेशगुणानां अर्थप्रकाशकत्वानुकू-लवेद्यत्वादिज्ञापनार्थत्वेनोपपत्तेः । "अलौकिकोपिज्ञानादिः त-च्छब्देनैवभण्यते । ज्ञापनार्थाय लोकस्ये" ति स्मृतेश्च अलौकि-कमेवेशगुणजातमिति युक्ता तत्रातिशयभक्तिरिति । व्युत्पत्तिरेव पदानां तत्रायुक्तेति तु "कार्याख्यानादि"त्यत्र (बृ.सू. ३-३-१९) निरसिष्यते ॥ १६ ॥

**॥ ॐ स्थानविशेषात्प्रकाशादिवत् ॐ ॥ १७ ॥**

॥ ॐ उपपत्तेश्च ॐ ॥

प्रागुक्तबिम्बत्वहेतुकालौकिकत्वस्येह आक्षेपेण शंकोदया-त्सङ्गतिः । अथपदोक्तअतिशयितभक्तिसिध्दयर्थं प्रागुक्तमीश-गुणानां बिम्बत्वहेतुकमलौकिकत्वं न युक्तमुत युक्तमिति चि-न्ता । तदर्थं भगवदानन्दादिगुणस्य विचित्रब्रह्माद्यानन्दादिबि-म्बत्वमयुक्तमुत युक्तमिति । तदर्थं प्रतिबिम्बवैचित्र्यमेव कार-णमुतान्यदपीति ॥ पूर्वपक्षस्तु ॥ "वृध्दिह्रासभाक्तवमि" त्यत्रो-क्तदिशा (ब्र.सू. १-२-२०) ब्रह्माद्यानन्दादीनांमिथो विचित्रत्वा-त्तेषां चेशगुणप्रतिबिम्बत्वे तांश्च प्रतीशगुणानां बिम्बत्वे च त-द्वदेव वैचित्र्यं स्यात् । "अदृष्टानियमादि" त्यत्र (ब्र.सू. २-३-५१) अदृष्टादिवैचित्र्येण प्रतिबिम्बवैचित्र्योक्तावपिस्वाभाविकान-न्दादेरादिमत्कारणकत्वायोग इति तस्यैवेहाक्षेपेण बिम्बवैचि-त्र्यनिबन्धनत्वात्प्रतिबिम्बवैचित्र्यस्य तथा च भगवद्रूपेषु गुण-

तारतम्यं च स्यात्। तच्च नेत्युक्तम् "न स्थानत"(ब्र.सू. ३-२-११) इत्यत्र। अतो बिम्बत्वाभावान्नेशगुणानामलौकिकत्वमिति न तत्रातिशयितभक्तिः कार्येति॥ सिद्धान्तस्तु॥ बिम्बवैचित्र्याभावेपि सूर्यकान्तादिस्थानगुणेन सूर्यादिप्रतिबिम्बत्वेऽग्निजनकत्वादिवैचित्र्यवत्ब्रह्माद्यनादिभक्त्यादिस्थानगुणवैचित्र्येण बिम्बभूतभगवदैश्वर्यवशेन च अविचित्र भगवदानन्दादिप्रतिबिम्बवैचित्र्यस्योपपत्तेः।"ब्रह्मादिगुणवैशेष्यादि"ति(वाराह) "ऐश्वर्यात्परमाद्विष्णोः" इति च (पाद्म) स्मृतेश्च ईशगुणानामवैचित्र्येपि बिम्बत्वं युक्तमित्यलौकिकत्वादतिशयिताभक्तिरावश्यकीति॥१७॥

**॥ॐ तथान्यत्प्रतिषेधात् ॐ॥१८॥**

स्थानविशेषादित्यस्य बिम्बप्रतिबिंभावरूपहेतुसाधकतया "परमत" (ब्रू.सू. ३-२-३२) इत्यनेनैकार्येनाव्यवधायकत्वात् परमतइत्यत्रोक्तन्यायातिदेशकत्वात्सङ्गतिः। अथपदोक्ता भक्तिः न कार्येत कार्येति चिन्ता। तदर्थं ब्रह्म व्यक्तमुताव्यक्तमिति। तदर्थं ध्यानप्रतीतमेव ब्रह्मोत तदन्यदिति॥पूर्वपक्षस्तु॥ "फलमत" इति(ब्र.सू. ३-२-३९) वक्ष्यमाणदिशाब्रह्मण एव फलप्रदत्वात् "तं यथायथे" त्यादेरुपासितस्यैव फलदातृत्वात् ध्यातस्या ब्रह्मत्वे तस्याः फलदातृत्वेन ध्यानवैयर्थ्यात् ध्यातृपुरुषबहुत्व प्रयुक्तध्येयबहुत्वस्य "न स्थानत" इत्युक्तन्यायेन भेदहीनेपि हरौ तद्रूपाणां नानात्वेनोपपत्तेश्च ध्यानकालप्रतीतमेव ब्रह्मेति भक्तिं विनापि पुरुषप्रयत्नेन व्यक्तत्वासम्भवान्न

तत्र भक्तिरावश्यकीति ॥ सिद्धान्तस्तु ॥ "सेतून्मात्वादि" ना ईशगुणजातस्य लोकतोन्यत्ववत् "अरूपवद्देवे" त्यादावुक्तदिशा अप्रकृतनिर्दोषसर्वसुलक्षणदिव्यर्वरूपविग्रहस्य हरेः नानादुर्लक्षणयुक्तध्यानप्रतीते वस्तुत्वायोगेन तदन्यत्वावश्यंभावात् "तदेव ब्रह्म त्वं विध्दि नेदं यदिदमुपासते" इति (तलं. १-३) श्रुतौ ध्यानप्रतीतस्य ब्रह्मत्वं प्रतिपिध्य तदन्यदेव ब्रह्मेत्युक्तत्वाच्च ध्यानप्रतीतादन्यदेवाव्यक्तं ब्रह्मेति। न च फलाभआवापातः "पश्यंति परमं ब्रह्मे" ति (ब्रह्मतर्क) स्मृत्या ध्यानकाले प्रतीतवासनामय प्रतिमास्थस्यैव फलप्रदत्वोपपत्तेः भक्तिरावशयकीति ॥ १८ ॥

**॥ ॐ अनेन सर्वगतमायामयशब्दादिभ्यः ॐ ॥ १९ ॥**

एवमव्यक्तत्वेऽपि हरेः प्रसन्नस्य अपरोक्षदानमिव स्वस्वातन्त्र्यमपि अन्यस्य क्वचिद्दद्यादिति शङ्कनात्सङ्गतिः। अथपदोक्तहरावेवातिशयितभक्तिः न युक्तोत युक्तेति चिन्ता। तदर्थं किं क्वचित् कदाचिदन्योपि कर्ता उत सर्वत्र सर्वदा सर्ववस्तुनः हरिरेव सृष्ट्यादि कर्तेति। तदर्थं स्वस्सवातन्त्र्यं कदाचिदन्यस्यापि ददात्युतनेति ॥ पूर्वपक्षस्तु ॥ हरेः कृष्णाद्यवतारेषु परप्रेष्यत्वाद्यसंभावितविविधलीलादर्शनेन क्वचित्कदाचित् स्वातन्त्र्यस्याप्यन्यस्य दानसम्भवात् हरेरेव सर्वसृष्ट्यादौ मानाभावाल्लोके राजादीनां स्वंडेश्त्वदर्शनात् देशान्तरादावन्योपि सृष्ट्यादिकर्तेत्यनुमानसम्भवाच्च न हरावेवातिशयिता भक्तिर्युक्तेति ॥ सिद्धान्तस्तु ॥ "स्वातन्त्र्यात्क्रीडते विष्णुः न हि स्वातन्त्र्यमन्यगम्। क-

रोति क्वापि”(न्यायविवरण) त्यादेरत्यक्तस्वातन्त्र्यस्यैव क्रीडाव-गमादन्यत्र स्वातन्त्र्यदानस्यासंभावितत्वात् हरिरेव सर्वकर्तृत्व-स्य “एष सर्वगत” इत्यादि भाष्योक्तश्रुतिसिध्दित्वादनुमानस्य एतच्छ्रुतिबलेन कर्त्रन्तरे मानाभावाच्च हरिरेव सृष्ट्यादिकर्तेति युक्ता तत्रैवातिशयिता भक्तिरिति ॥ १९ ॥

**॥ ॐ फलमत उपपत्तेः ॐ ॥ २० ॥**

॥ ॐ श्रुतत्वाच्च ॐ ॥ ॥ ॐ धर्मंजैमिनिरत एव ॐ ॥ ॥ ॐ पूर्वं तु बादरायणे हेतुव्यपदेशात् ॐ ॥

एवं हरेरेव सर्वकर्तृत्वे तस्य वैषम्यादिदोषनिरासाय पूर्वोक्त-दिशा कर्मसापेक्षत्वे तर्हि कर्मण एवास्तु फलप्रदत्वमिति वा क-र्मण एव फलोदयात् प्रागुक्तं हरेः सर्वस्रष्टत्वमयुक्तमिति वा श-ङ्कनात्सङ्गतिः । अथपदोक्ता भक्तिः न कार्येत कार्येति चिन्ता । तदर्थं किं कर्मैव फलदात- हरिस्तत्र शेषभूत उत विपरीतमिति । तदर्थं “रातिर्दातुः परायण” मिति (बृ. ५-९-२८) श्रुतं हरेः फ-लदातृत्वं गौणमुत मुख्यमिति । तदर्थं कर्मणः फलान्वयव्यति-रेकौ शेषित्वकल्पकौ उत शेषतयापि युक्ताविति । तदर्थं क-र्मणः शेषित्वकल्पकं नास्त्युतास्तीति ॥ पूर्वपक्षस्तु ॥ ईश्वरः फलदातेतिपक्षेपि कर्मणोऽवैयर्थ्याय वेदप्रामाण्याय हरेः वैष-म्याद्यभावाय कृतकर्मणः फलदृष्ट्या च कर्मापेक्षत्वेऽवश्यंभा-विनि फलस्य कर्मान्वयव्यतिरेकित्वात् तस्य च अन्यथासिध्दि-कल्पकाभावात् “रातिर्दातु” रिति श्रुतेः “एषह्येव साधुकर्म कार-यती”(कौषी. ३-८)त्यादिना हरेः फलप्रदकर्महेतुतया गौणत्वे-

नाप्युपपत्तेः आप्ततमगौतम जैमिनिमतत्वाच्च कर्मैव प्राधान्येन फलप्रदं हरिस्तु कर्मशेष इति न तत्र भक्तिः कार्येति ॥ सिद्धान्त-स्तु ॥ चेतनत्वयुक्तया "पुण्येन पुण्यं लोकं नयति" (ष.प्र. ३-७) इत्यादिविशेषश्रुत्या च "रातिर्दातु"रिति श्रुतेर्बलेवत्तया गौणर्थ-त्वायोगात् ब्रह्मणः प्राधान्येन फलदातृत्वेऽपि कर्मणः कारण-त्वान्वयव्यतिरेकयोः जैमिनिमतस्य चोपपत्तेः ब्रह्मैव फलप्रदं न कर्म किंतु करणमेवेति युक्ता तत्र भक्तिरिति ॥ २० ॥

इति श्रीमद्राघवेन्द्रयतिकृतायां न्यायमुक्तावल्यां
तृतीयाध्यायस्य द्वितीयः पादः समाप्तः ॥

## अथ तृतीयः पादः

प्रागुक्ताथपदार्थवैराग्यभक्तिसाध्यज्ञानहेतुजिज्ञासाशब्दितोपासना अस्मिन्पादेः उच्यते । सा च द्वेधा सर्वसच्छास्त्रश्रवणमननरूपा ध्यानरूपाचोति । तत्राद्या ध्यानांगत्वादादावुच्यते ।

**ॐ सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॐ ॥ १ ॥**

॥ ॐ भेदान्नेति चेदेकस्यामपि ॐ ॥ ॥ ॐ स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च ॐ ॥ ॥ ॐ सलिलवच्च तन्नियमः ॐ ॥ ॥ ॐ दर्शयति च ॐ ॥

अत्र जिज्ञासाशब्दोक्ते सर्वसच्छास्त्रश्रवणमनने न कार्ये उत कार्ये इति चिन्ता । तदर्थं ब्रह्म स्वस्वशाखोक्तरीत्या ज्ञेयमुत सर्ववेदोक्तदिशेति । तदर्थं हरेर्ज्ञेयत्वे साधकं नास्त्युत बाधकं चास्ति अथ विपरीतमिति । तदर्थं शाखाभेदः प्रतिशाखं अ-

र्थभेदोक्तिश्च निरवकाशा उत सावकाशेति ॥ पूर्वपक्षस्तु ॥ ब्रह्म तथा ज्ञेयमित्यत्र साधकाभावात् प्रत्युत वेदराशेरेकैकाधिकारिकत्वे काण्वादिशाखाभेदायोगस्य विज्ञानमानन्दं ब्रह्मेत्यादिरूपेण प्रतिशाखमर्थभेदोक्तत्ययोगस्य एकैकस्य सर्वशाखाध्ययनाभावेन तदर्थं ज्ञानायोगस्य मन्दानां ब्रह्मज्ञानवैमुख्यप्रसङ्गरूपस्य च बाधकस्यभावात् तत्तच्छाखोक्तमेव तेन तेन ज्ञेयमिति नोक्तरूपश्रवणमनने कार्ये इति ॥ सिद्धान्तस्तु ॥ भगवज्ज्ञानसम्पादनार्थं प्रवृत्तानां "आत्मेत्येवोपासीते" (बृ. ३-४-७) त्येवमादिकाण्वादितत्तच्छास्वागतविधीनां ज्ञानार्थं प्रवृत्तविध्यर्थमुक्तानां "अत्र ह्येते सर्व एकं भवन्तीति"(बृ. ३-४-७) "न हास्य कर्मक्षीयते" (बृ. ३-४-१५) "वेदः कृत्स्नो ऽधगन्तव्यः सरहस्यो द्विज्ञन्मना" इत्येवमादेः अर्थावबोधफलकस्वाध्यायाध्ययन विधयश्च सर्वाधिकारिसाधारण्येन "सर्ववेदोक्तमार्गेण कर्मकुर्वीते" ति (समाचार) स्मृत्या सर्ववेदोक्तमार्गानुष्ठाने सर्वेषामधिकारावगमेन च तदन्यथानुपपत्तिरूपयुक्तया च "सर्ववेदानधीत्य विचार्य च ज्ञातुमिच्छेन्मुमुक्षुः" इति (चतुर्वेदशिखा) श्रुत्या "सर्वान् वेदान् सेतिहासान्" इति (ब्रह्मतर्क) साधकसद्भावात् "शाखाभेदो ह्यशक्तिजः" इति (समाचार) स्मृत्या काण्वादिशाखाभेदस्य अशक्तिहेतुकत्वेन प्रतिशाखमर्थभेदोक्तेः एकशाखस्थार्थभेदोक्तिवत् प्रसङ्गभेदादनुवादादिरूपतया सर्ववेदोक्तरीत्या ब्रह्म ज्ञेयमिति नियमस्य सर्वासामपां समुद्र एकायनमित्युक्तनियमस्येव "यथा नदीनां सलिलं शक्ये सागरंग भ-

वेदि" ति (आग्नेय) स्मृत्या तत्तच्छक्तत्यनुसारितयोपपत्त्या प्रागुक्तबाधकानामभावाच्च सर्ववेदोक्तदिशा यथाशक्ति सर्वसच्छास्त्रश्रवणमनने सर्वैरपि कार्ये एवेति। फले तु जिज्ञासाशब्दार्थैकदेशाक्षेपसमाधी ॥ १ ॥

**॥ ॐ उपसंहारोऽर्थाभेदाद्विशेषवत्समाने च ॐ ॥ २ ॥**

॥ ॐ अन्यथात्वं च शब्दादिति चेन्नाविशेषात् ॥ ॐ ॥ ॥ ॐ नवाप्रकरणभेदात्परोवरीयस्त्तवादिधत् ॐ ॥ ॥ ॐ संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॐ ॥

वैयर्थ्यहेतुना प्रागुक्तयथाशक्तिसर्ववेदार्थपरिज्ञानस्याक्षेपेणेह शङ्कनात्यंगतिः। अत्र पूर्वोक्तसर्ववेदोक्तपरिज्ञानं नावश्यकमुतावश्यकमिति चिन्ता। तदर्थं सार्वत्रिकगुणोपसंहारानुपसंहाराभ्यां वेदार्थभूत ब्रह्मध्यानं न युक्तमुतयुक्तमिति ॥ पूर्वपक्षस्तु ॥ नोभयथापि ध्यानं सम्भवतीति। तथाहि। न तावदुपसंहृत्य ध्यानं कार्यमिति पक्षो युक्तः। सर्वपरिज्ञानस्य क्रमभावित्वेन शक्यत्वेषि सार्वत्रिकसर्वगुणोपसंहारेण ध्यानस्य विक्षिप्योक्तगुणानामेकबुध्दयुपारुढत्वरूपस्याशक्यत्वात्। सर्वाशक्यत्वेऽपि कांश्चित्प्रति तथा ध्यानं शक्यमिति कल्पनस्य कल्पकशून्यतयाऽयोगात्। आत्मेत्येवोपासीतेति सावधारणात्मत्वमात्रोपासनविधिवाक्यविरुध्दं च परोवरीयः प्रभृतिप्रकरणभेदायोगात्। नाप्यनुपसंहृत्य ध्यानं कार्यमिति पक्षः स्पष्टप्रमाणाभावात्। आत्मेत्येवेत्यत्र एवकारस्य अयोगव्यवच्छेदकतयापि सावकाशतोपपत्तेः। न च परो-

वरीयोवैश्वानरादिप्रकरणभेद एवानुपसंहारे मानमन्यथा स न स्यादिति युक्तम्। एकस्मिन्नपि प्रकरणे सर्वगुणोक्तेरपि सम्भवात्। अत उभयथापि ध्यानस्यायुक्तत्वात् यध्द्या-नांगतया प्रागुक्तं शक्तानां सर्ववेदार्थपरिज्ञानं अशक्तानां यथाशक्ति कतिपयशाखार्थपरिज्ञानं संपाद्यमिति तत्रान्यतरदपि व्यर्थत्वान्नावस्यसंपाद्यतामर्हतीति ॥ सिद्धान्तस्तु ॥ उभयथापि ध्यानं सम्भवतीति प्रागुक्तं द्विरूपमपि वेदार्थपरिज्ञानं युक्तमेवेति। तथाहि। सर्ववेदोक्तगुणानां दोषाभावानां चोपसंहारेण ध्यानस्य "उपास्य एकः" इति भाष्योक्त(भाल्लवेय) श्रुतौ "सर्वै गुणाः सर्वदैव ह्युपास्या" इति (न्यायविवरणोक्त) श्रुतौ च विहितत्वात् अन्यथा विहितक्रियालोपेनानर्थप्रसंगात्। तथा छान्दोग्ये सप्तमे "ऋग्वेदं भगवोऽध्येमि"(छां-७-१-२) इत्यादिना नारदेनात्मनः सर्वविद्यावेदित्वमुक्तवा "सोहं भगवो मन्त्रविदेव नात्मविदि" ति(छा. ७-१-३), श्रुत्यन्तरे च "सोऽहं नामविदेव नात्मविदि" त्युक्त्या च सर्वविद्यानां भगवन्नामत्वेन तद्गुणाभिधायकत्वान्यथा नुपपत्तियुक्तया च तथा ध्यानस्य सि-ध्दत्वात् गुणाभिधानस्य "आध्यायनाय प्रयोजनाभावादि" ति (ब्र.सू. ३-३-१५) न्यायेन ध्यानार्थत्वात् "नाम वा एताः ब्रह्मणः सर्वविद्यास्तस्मादेकः सर्वगुणैर्विचिन्त्य" इति (कौण्डिण्य) श्रुतिसिध्दत्वाच्च। आत्मेत्येवेत्येवकारस्यायोगव्यवच्छेदकत्वेन अविरोधकत्वात् प्रकरणभेदगतेश्च "पुरुषविद्यामि" (ब्र.सू. ३-३-१५) त्यत्र वक्ष्यमाणत्वात् उपसंहृत्य ध्यानं कार्यमिति

पक्षो युक्तः। तथानुपसंहृत्य ध्यानं कार्यमिति पक्षोपि युक्त एव उपसंहृत्य ध्यानस्य अशक्यत्वात्प्रकरणभेदात्। "स एष परोवरीयानुद्गीथः स एषोऽनन्तः"(छां. १-९-२) इत्यादि प्रकरणेषु परोवरीयस्तवादिकतिपयगुणस्यैवोक्त्या एकत्र सर्वगुणोक्तेरभावात्। तस्मादुभयथा ध्यानस्य प्रामाणिकत्वेन युक्तत्वादुक्तसूपवेदार्थपरिज्ञानमर्थवदेवेति। फले तु पूर्वाक्षेपसमाधी ॥२॥

**॥ ॐ प्राप्तेश्च समंजसम् ॐ ॥३॥**

अत्र प्रागुक्तगुणोपसंहारानुपसंहारपूर्वकध्यानयोरधिकारिभेदेन युक्तत्वसमर्थनात्सङ्गतिः। जिज्ञासाशब्दाभिमत प्रागुक्तद्विरूपध्यानं अयुक्तमुत युक्तमिति चिन्ता। तदर्थं अधिकारिभेदेन व्यवस्था न सम्भवत्युत सम्भवतीति। तदर्थं व्यवस्थापकं नास्त्युतास्तीति॥ पूर्वपक्षस्तु॥ द्विरीपध्यानस्य विरोधेनैकस्यायोगात् अधिकारिभेदेन व्यवस्थितत्वस्य चात्रास्याधिकारोऽत्र तस्येति व्यवस्थापकप्रमाणाभावेनायोगादयुक्तं द्विरूपध्यानममिति ॥ सिद्धान्तस्तु ॥ "यस्य यावद्गुणाः स्पष्टं प्रतिभासन्त्युपासने युगपत्स्वभुजौ यद्वध्दयायोत्तावत एव स" इति (न्यायविवरणोक्त) श्रुत्युक्तदिशा "गुणैस्यसर्वैरुपास्योसौ ब्रह्मणे"त्यादि (भविष्यत्पर्व) स्मृत्युक्तदिशा च ध्यानकाले च युगपत्स्पष्टसर्वगुणप्रतीत्या सर्वगुणप्रतीतिरूपयोग्यताविशेषयुक्त ब्रह्मतदन्याधिकारिभेदेन व्यवस्थोपपत्तेः युक्तं द्विरूपध्यानमिति ॥३॥

॥ ॐ सर्वाभेदादन्यत्रेमे ॐ ॥४ ॥

अत्र पूर्वत्र सर्वगुणध्यानाध्यानायोरविरोधोक्तौ अत्रान्यतर-वैयर्थ्यं निरस्यत इति सङ्गतिः । अत्र जिज्ञासापदोक्तं पूर्वत्र प्रकृतं सर्वगुणध्यानं न कार्यमुत कार्यमिति चिन्ता । तदर्थं तस्य फला-तिशयवत्त्वनिर्णयो न सम्भवत्युत सम्भवतीति । तदर्थं तन्निर्णा-यकं नास्त्युतास्तीति ॥ पूर्वपक्षस्तु ॥ मोक्षरूपफलस्यासर्वध्या-नेनापि सिध्देः सर्वगुणध्यानस्य असर्वगुणध्यान साध्यफला-तिशायवत्वनिर्णयस्य च निर्णायकाभावेनायोगात् व्यर्थं तन्नका-र्यमिति ॥ सिद्धान्तस्तु ॥ सर्वगुणध्यानमसर्वगुणध्यानादधिक-फलवत् ततो महत्त्वात् । यत्साधनं यतो महत् तत्ततोऽधिक-फलवत् यथा अग्निष्टोमादितो वाजपेयादिकमित्यनुमानेन "सं-पूर्णोपासनाद्ब्रह्मा संपूर्णानन्दबाम्भवे" दित्यादि (पाद्म) स्मृ-त्या च फलातिशायवत्त्वनिर्णयोपपत्तेः कार्यमेव सर्वगुणध्यान-मिति ॥४ ॥

॥ ॐ आनन्दादयः प्रधानस्य ॐ ॥५ ॥

पूर्वोक्ताधिकारिभेदेन फलभेदेन च द्विरूपोपास्तिरयुक्ता स-र्वमुमुक्षुसाधारणोपास्तिमात्रानिर्णये तद्विशेषानवसरादिति शङ्क-नात्सङ्गतिः । जिज्ञासापदोक्तं भगवध्दयानं न युक्तमुत युक्त-मिति चिन्ता । तदर्थं सर्वमुमुक्षुध्येयगुणनिर्णयो न सम्भवत्युत सम्भवतीति । तदर्थं सर्वध्येयगुणाः संख्यानिर्देशाभ्यांक्लृप्ताः पृ-थक् न सन्त्युत सन्तीति ॥ पूर्वपक्षस्तु ॥ न संख्यानिर्देशाभ्यां क्लृप्ताः पृथक्सन्ति गुणाः । यदि भवेयुः तर्हि कियन्तः । यदि

चतु पञ्चषाः आनन्दादय इत्युच्येत तर्हि केषांचित्समुच्चयेषामपि समुच्चयप्रसङ्गेन नियमासम्भवात्। आनन्दादिभ्योऽन्य एवेत्यपि वक्तुं शक्यत्वेन एत एवेतिनिर्देशकल्स्यभावाच्चेति सर्वमुमुक्षुध्येय-गुणानिर्णयाभावान्न भगवध्दयानं कार्यमिति ॥ सिध्दन्तस्तु ॥ सर्वेषां बहुगुणोपासनेऽशक्यत्वात् सर्वापेक्षितस्य निर्दोषानन्दा-नुभवरूपमोक्षस्य "तं यथा यथोपासते" इति श्रुत्या तदनुगु-णोपासनसाध्यत्वाच्च निर्दोषत्वज्ञानानन्दानां त्रयाणामावश्यक-त्वात् आत्मत्वशब्दित स्वामित्वस्य स्वसम्बन्धानुस्मरणस्य भ-गवत्प्रीतिहेतुत्वेन "आत्मेतितूपगच्छन्ती" ति

(ब्र.सू. ४-१- २) वक्ष्यमाणदिशावश्यकत्वात् "सच्चिदानन्द आत्मे"त्यादि(ब्रह्मतर्के) स्मृतेश्च सदादयश्चत्वार एवेति संख्या-निर्देशाभ्यां क्लृप्तिस्मभवेन ध्येयगुणनिर्णयात् युक्तमेव भगवध्द-यानमिति ॥५ ॥

**॥ ॐ प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॐ ॥ ६ ॥**

चत्वार एवेति प्रागुक्तनियमाक्षेपेण शङ्कनात्सङ्गतिः। च-त्वार एवेति प्रागुक्तनियमो युक्त उतायुक्त इति चिन्ता। तद-र्थं "प्रियमेवशिर" इत्यादिना श्रुतप्रियशिरस्त्वादयः सर्वोपास्या उत नेति। तदर्थं तेषां सर्वानुपास्यत्वे प्रागुक्तफलप्राप्तिर्नास्त्यु-तास्तीति ॥ पूर्वपक्षस्तु ॥ प्रियशिरस्त्वादयोपि सर्वोपास्यास्ते-षां आनन्दविशेषत्वात्। आनन्दादीनां च स्वाभिमतफलावाप्त्य-र्थं सर्वोपास्यत्वोक्तेः अन्यथा फलाभावपातात्। अतः प्रागुक्त-नियमो न युक्त इति ॥ सिद्धान्तस्तु ॥ आनन्दविशेषमात्रेण प्रि-

शिरस्त्वादेः सर्वोपास्यत्वे सर्वगुणानामपि गुणचतुष्टयविशेषत्व-स्य वक्तुं शक्यतया सर्वेषां सर्वगुणोपास्तिप्रसंगात्तस्य च "दर्शा-नाच्चे"त्यत्रोक्त(ब्र.सू. ३-२-२१) आनन्दश्रुतिसिध्दफलभेदपरि-लोपापत्त्या अनिष्टत्वेन फलभेदसिध्दयर्थं गुणोपासनेति तारत-म्यस्य च वाच्यत्वात् "नैव सर्वगुणास्सर्वैरुपास्या मुक्तिभेदतः" इति (वाराह) स्मृतेश्च न सर्वोपास्याः प्रियशिरस्तवादयः । न चैवं फलाभावः । "यथा योग्यान् गुणपूर्णानुपास्य फलं भवेदि"त्यादिश्रुत्या विशेषानुपासनेपि योग्यगुणोपासनेनैव मुक्तिफल-प्राप्तेरवगमादिति नोक्तनियमभङ्ग इति ॥ ६ ॥

**॥ ॐ इतरेत्वर्थसामान्यात् ॐ ॥ ७ ॥**

पूर्वत्र यथायोग्यानितिश्रुत्या योग्यगुणोपासनेनैव फलप्रा-प्त्युक्तौ देवानां चतुर्गुणाधिकगुणोपासने योग्यतानिश्चियासम्भ-वात् तेषां अधिकगुणोपास्तिरयुक्तेति शङ्कनात्सङ्गतिः । जिज्ञा-सापदोक्तं अधिकगुणोपासनं न कार्यमुत कार्यमिति चिन्ता । त-दर्थं तदधिकारिणां देवानां योग्यतानियमनिर्णयोऽशक्य उत श-क्य इति । तदर्थं प्राप्तेश्चेत्यत्रोक्तं ध्यानकालीनगुणभानस्य योग्य-तानिर्णायकत्वमयुक्तमुत युक्तमिति ॥ पूर्वपक्षस्तु ॥ ध्यानात्पू-र्वमेव योग्यतानियमाज्ञानेऽयोग्योपासनप्रसंगात्तस्य च "अचे-तनासत्यायोग्यान्यनुपास्यान्यफलत्वविपर्ययाभ्या"मिति सांक-र्षणसूत्रोक्तदिशा अनर्थफलत्वेन ध्यानकालीनगुणभानस्य यो-ग्यतानिर्णायकत्वाभावान्नाधिकोपासनं कार्यमिति ॥ सिद्धान्त-स्तु ॥ तत्तत्साध्यफलापेक्षयोपासनयोग्यतानिर्णयोपपत्तेः भा-

व्युत्कर्षज्ञसर्वज्ञगुरुणा तत्तत्प्राप्यभविष्यत्फलानुसारिगुणोपदेशोपपत्तेश्च चतुर्योधिकोपासनं कार्यमेवेति ॥ ७ ॥

**॥ ॐ आध्यायनाय प्रयोजनाभावात् ॐ ॥ ८ ॥**

॥ ॐ आत्मशब्दाच्च ॐ ॥

एवं पूर्वत्र मन्दमध्योत्तमाधिकारिभेदेन अनुपसंहारोपसंहारौ अक्तवा तयोः "संज्ञातश्चे" दिति (ब्र.सू. ३-३-९) "प्रकरणभेदादि" ति (ब्र.सू. ३-३-८) च यन्मानमुक्तं तदेवेहाक्षिप्य समाधीयत इति सङ्गतिः । अत्र जिज्ञासापदाभिमतौ प्रागुक्तगुणोपसंहारानुपसंहारौ न कार्यावुत कार्यौ इति चिन्ता । तदर्थं तयोर्मानं नास्त्युतास्तीति । तदर्थं प्राक् "संज्ञात" इति "प्रकरणभेदादि" ति चोक्तमुभयत्र मानं न युक्तमुत युक्तमिति ॥ पूर्वपक्षस्तु ॥ संज्ञातश्चेत्यत्रोक्तदिशा सर्वविद्यानां भगवन्नामत्वेन तत्र गुणाभिधानस्य उपसंहारार्थत्वे सर्वगुणानां एकत्रैवोक्तिप्रसंगेन विक्षिप्य नानास्थानेपूक्तेः व्यर्थत्वात् मोक्षस्यानुपसंहारेणापि सिध्द्या उपसंहारस्य व्यर्थत्वाच्च । अत एव व्यर्थबिधेः अश्रध्देयत्वेन "विधिशेषवदि"(ब्र.सू. ३-३-६) त्यत्रोक्तविहितत्वयुक्तेरप्यप्रयोजकत्वात् तत्द्विद्याप्रकरणेषु एतावदेवोपासनामित्युक्त्यभावेन प्रकरणभेदस्यानुपसंहारेऽमानत्वेन मानाभावान्न कार्यावेतौ द्वाविति ॥ सिद्धान्तस्तु ॥ गुणोक्तेरूपसंहारान्यप्रयोजनाभावात् नानास्थानेषूक्तानामपि उपसंहारे मुक्तौ फलातिशयभावेन तथोक्तेरर्थवत्तवात् "आत्मेत्येवोपासीते"ति(ब-.३-४-७)श्रुत्यान्यव्यवच्छेदपूर्वं आत्मप्रत्ययोपासनविधानात् प्रागेवका-

रस्यायोगव्यवच्छेदकत्वोक्तावपि इह “प्राप्तेश्च” त्यत्रोक्त(ब्र.सू. ३-३-१०) न्यायेन अधिकारिभेदेनाव्यवच्छैदकत्वा विरोधाच्च द्वावपि कार्याविति ॥८॥

**॥ ॐ आत्मगृहीतिरितरवत्तदुत्तरात् ॐ ॥९॥**

“आत्मेत्येवोपासीते” ति पूर्वोक्तश्रुतिस्थैवकारस्य स्वामित्वान्यज्ञानादिगुणव्यवच्छेदकत्वप्राप्तावत्र स नेत्युच्यत इति सङ्गतिः। अत्र जिज्ञासापदाभिमतं “आनन्दादयः”(ब्र.सू. ३-३-१२) इत्यत्रोक्तं चतुर्गुणोपासनं न युक्तमुत युक्तमिति चिन्ता। तदर्थं तत्किं प्रागुक्तश्रुतिविरुध्दं नवेति। तदर्थं आत्मेत्येवेति प्रागुक्तात्मशब्दः किं सुशकत्वादियुक्त्या स्वामित्वमात्रवचनः उत वाक्यशेषबलात् ज्ञानादिचतुर्गुणवचन इति ॥ पूर्वपक्षस्तु ॥ आत्मत्वमात्रोपास्तेः सुशकत्वादाश्वापरोक्ष्यहेतुत्वाच्च सावधारणश्रौतात्मपदस्य स्वामिमात्रवचनत्वेन तन्मात्रोपासनस्यैव कार्यत्वादयुक्तं चतुर्गुणोपासनम्। वाक्यशोषस्तु स्तुतित्वेनाप्युपपद्यत इति ॥ सिद्धान्तस्तु ॥ अत्यलौकिकपरमपुमर्थहेत्वापरोक्ष्ये ऽतिसुशकत्वस्यागुणत्वात् गुणत्वेऽपि वा सर्वेषां मुमुक्षूणां “फलसाम्यादपेक्षिते” त्यानन्दनयोक्तन्यायेन (ब्र.सू- ३-३-१२) स्वापेक्षितज्ञानानन्दादिफलप्राप्त्यर्थत्वेन अन्योपासनस्याप्यावश्यकत्वात् वाक्यशेषस्यार्थवादत्वेऽपि अविरुध्दे स्वार्थे तात्पर्याभावात्। “प्राणन्नेव प्राणनामा भवति मन्वानोमन” इत्यादि पूर्ववाक्ये प्राणपदादिना प्रकृतानन्दादिगुणानां परामर्शेन “अत्र ह्येते सर्व एकं भवन्ती”(बृ. २-४-१) इत्यात्मगुणे आनन्दा-

दिगुणानामन्तर्भावोक्ति - परवाक्यशेषानुरोधेन “आनन्दानुबव-त्वाच्चे” त्यादि (बृहत्तन्त्र) स्मृत्यनुरोधेन च आत्मशब्दस्य स्वा-मित्वादिचतुर्गुण वचनत्वेन तदविरोधाद्युक्तं सर्वाधिकारिकचतु-र्गुणो - पासनमिति ॥ न चैवमनुपसंहारमानत्वोक्तिविरोधः अ-स्यानुपसंहाररूपत्वात् ॥ ९ ॥

**॥ ॐ अन्वयादितिचेत्स्यादवधारणात् ॐ ॥ १० ॥**

अत्रात्मपदस्य प्रागुक्तानुपसंहारमानत्वमाक्षिप्य साध्यत इति सङ्गतिः । अत्र प्रागुक्तमात्मपदस्यानुपसंहारमानत्वमयुक्त-मुत युक्तमिति चिन्ता । तदर्थमात्मपदोक्तगुणाः उपसंहर्तृमात्रो-पास्याः उतानुपसंहर्त्रूपास्या अपीति । तदर्थं आत्मशब्दोऽखि-लगुणानामपि प्रत्यायकत्वैनानुपसंहर्तृन् प्रति विभ्रमकरः अथ व्यवस्थया तत्तद्योग्यगुणप्रत्यायकतया निर्णयकर इति ॥ पूर्व-पक्षस्तु ॥ आत्मेत्येवोपासीतेत्यस्य “चोदनाद्यविशेषादि” ति-न्यायेन (ब्र.सू. ३-३-१) अखिलगुणध्यातृब्रह्मादीन् प्रत्यपि प्र-वृत्तेः तत्र आत्मशब्दस्य अनुपसंहर्तृमात्रयोग्य -गुणबोधकत्वे आत्मेत्येवेत्यवधारणायोगेन तदन्यथानुपपत्त्या “आप्तव्याप्तेरा-त्मशब्दः परमस्य प्रयुज्यते” इति स्मृत्या च आत्मशब्दस्य सर्व-गुणवाचित्वेनानुपसंहर्तृन चतुर्गुणाद्युपासकान् प्रति तत्तद्योग्य-मात्रगुणाप्रत्यायकतया तस्य विभ्रमकरत्वात् तदुक्तगुणानुपसं-हर्तृभिरनुपास्या इत्ययुक्तमनुपसंहारमानत्वम् । न च तस्य स-र्वगुणप्रत्यायकत्वेऽपि स्वस्वयोग्यगुणमात्रं सर्वैरुपास्यमिति शं-क्यम् । आत्मेत्येवेत्यवधारणेनात्मशब्दस्य यावत्प्रतीतं ताव-

तोप्युपास्यत्वप्रतीतेः। अन्यथावधारणविरोधादिति ॥ सिद्धा-न्तस्तु ॥ आत्मशब्दस्य सर्वगुणवाचित्वेऽपि तत्तद्गुणोपासनयो-ग्यान् सर्वगुणान् वक्तीत्यस्य तत्तदनुभवसिध्दत्वेन तस्य अ-विभ्रमकरतया तदुक्तगुणानां सर्वोपास्यत्वाद्युक्तमनुपसंहारमा-नत्वमिति ॥ १० ॥

**॥ ॐ कार्यख्यानादपूर्वम् ॐ ॥ ११ ॥**

पूर्वत्राधिकारिणां स्वस्वयोग्यगुणान्यगुणानामात्मशब्देना-प्रतीत्या तत्तन्मात्रगुणोपासनं युक्तमित्युक्तमयुक्तम्। योग्या-नामपि "परमत"(ब्र.सू. ३-२-३२) इत्युक्तदिशाऽलौकिकत्वेन आत्मशब्देनाप्रतीतेरिति शङ्कनात्सङ्गतिः। ईश्वरे गुणा ध्येया इत्युक्तम्। ते हि लौकिका एव ध्येया उतालौकिका इति चिन्ता। तदर्थं लौकिकानामध्याने गुणध्यानस्यैवाभावः प्रस-ज्यत उत नेति। तदर्थं अलौकिकगुमानामनुभवो न सम्भव-त्युत सम्भवतीति ॥ पूर्वपक्षस्तु ॥ अलौकिकगुणविषये प्रत्य-क्षानुमानोरप्रसक्तेः प्रसक्तस्य च शब्दस्य सङ्गतिग्रहण सापेक्ष-त्वात् तस्य च सम्बन्धिज्ञानाधीनत्वात् शब्दरूपसम्बन्धिनः प्र-त्यक्षत्वेऽपि अर्थरूप सम्बन्धिनः शब्दादन्यनाप्रतीतेः शब्दा-न्तरेण तत्प्रतीतौ तत्राप्येवमित्यनवस्थापत्त्या सङ्गतिग्रहणायो-गेन शब्देनाप्यनुभवायोगेन ध्यानकाले तत्प्रतीतेरभावात् तादृ-शस्य च ध्यानायोगात् लौकिकानामध्याने गुणध्यानस्यैवाभाव-प्रसक्तया ध्यानसाध्यापरोक्षज्ञानजन्मनोऽभावापातेन गुणध्या-नस्यावश्यकत्वात् लौकिका एव ध्येयाः। तथा चाविद्यमानध्या-

नस्य "न प्रतीके न हि सः"(ब्र.सू. ४-१-३) इति चतुर्थाद्य-पादे निरसिष्यमाणत्वेन ईश्वरे ध्येयानां गुणानां लौकिकत्वस्य वास्तवत्वावश्यं भावात् "परमतस्सेतून्माने" ति सूत्रे भगवद्गु-णानामुक्तालौकिकत्वमयुक्तमिति ॥ सिद्धान्तस्तु ॥ "अलौकि-कास्तस्य गुणाह्युपास्या" इति श्रुतौ मोक्षस्यालौकिकत्वकथनात् तादृशमोक्षस्य चालौकिकगुणोपासनेन विनाऽयोगात् "अर्थसा-मान्यात्"(ब्र.सू. ३-३-१४) इत्युक्तन्यायेन फलानुसारिध्यानस्य कर्तव्यतया अलौकिका एव गुणा ध्येयाः । न च तादृशगुणा-प्रतीतिर्दोषः । "शास्त्रोक्तवस्तुनश्चैव व्यत्पत्तिः शास्त्रलिङ्गतः" इत्यभिमानिनयानुव्याख्यान सुधयोरुक्तरीत्या "यः सहस्राक्षः स इन्द्रः यः पाशहस्तः स वरुण इत्यादौ वाक्यार्थमर्यादयोप-स्थिते वस्तुनि इन्द्रादिशब्दस्य व्युत्पत्तिवदनुकूलवेदनीयो भग-वद्गुणो यः सः आनन्द इति साक्षात्कृतेशगुणानां विदुषामुपदेशे-नोपस्थितौ तत्र तत्पदशक्तिग्रहोपपत्त्या शब्देनैतत्प्रतीतिसम्भ-वात् प्रागुक्तगुणानामलौकिकत्वं युक्तमिति ॥ ११ ॥

**॥ ॐ समान एवं चाभेदात् ॐ ॥ १२ ॥**

॥ ॐ सम्बन्धादेवमन्यत्रापि ॐ ॥

अर्थसामान्यादित्यक्त (ब्र.सू. ३-३-१४)न्यायेन पूर्वत्रापूर्व-कार्याख्यानादपूर्वगुण –जातध्यनं कार्यमित्युक्तमयुक्तम् । ध्या-नस्य स्वानुसारिफलदत्वानियमादिति शङ्कनात्सङ्गतिः । अत्र "अर्थसाभान्यादि" ति प्रागुक्तध्यानस्य फलानुसारित्वं नास्यु-तास्तीति । सदर्थं तयोः समविषमफलयतोः उपासनमपि स-

मविषमरूपं न सम्भवत्युत सम्भवतीति। तदर्थं त्रिविक्रमत्वादि क्रियाविशेषाणां ब्रह्मब्रह्माणीभ्यां यथाक्रममुपास्यानुपास्यत्वे न युक्ते उत युक्त इति ॥ पूर्वपक्षस्तु ॥ त्रिविक्रमत्वादिक्रियाविशेषाणामनित्यत्वेन ध्यानकालेऽभावादविद्यमानस्य च निन्दितत्वेन ब्रह्माणी- ब्रह्मणोरपि क्रियाविशेषानुपासनस्य वाच्यत्वेन गुणविषयेसाभ्यस्य क्रियाविशेषविषये वैषम्यस्य दुर्वचनत्वेन प्रकारान्तरेण ब्रह्माणीब्रह्मभ्यां क्रियमाणोपासनयोः समत्वस्य विषमत्वस्य चाभावेन समविषमत्वायोगात् तदुभयप्राप्यफलस्य स्थानैक्यगुणतारतम्यरुपतया समविषमत्वेन ताभ्यां क्रियमाणोपासनस्य स्वसदृशफलानुसारित्वाभावादर्थसामान्यादित्युक्तमिति ॥ सिद्धान्तस्तु ॥ "गुणक्रियादयो विष्णोः स्वरूपं नान्यदिष्यते" इति तत्त्वनिर्णयोदाहृत (तृतीय परिच्छेदे) श्रुत्या गुणक्रियादीनां विष्णुना तादात्म्यरूपसम्बन्धेन नित्यतया ध्यानकाले असत्त्वाभावेन तदुपासने ब्रह्मणोऽसदुपासनाप्रसक्तेः। क्रियादिविशेषाणामलौकिकत्वपि "गुणास्त्रैविक्रमाद्याश्च संहर्तव्या न संशयः। विरिंचस्यैव नान्येषा"मिति (बृहत्तन्त्र) स्मृत्या विरिंचस्यैव योग्यत्वेन तेषां ब्रह्मोपास्यत्ववत् ब्रह्माण्या नित्यविक्रान्त्यादिक्रियान्तर्भावेनैवोपास्यतया पृथगुपास्यत्वाभावेन क्रियाविषये विषमत्वस्य गुणादिविषये समत्वस्य च सम्भवेन ब्रह्माणीब्रह्मभ्यां क्रियमाणोपासनस्यापि फलस्यैव समविषमत्वेन क्वाप्युपासने फलानुसारित्वस्य व्यभिचाराभावात् अर्थसामान्यादित्युक्तं युक्तमिति ॥१२॥

**॥ ॐ नवा विशेषात् ॐ ॥ १३ ॥**

॥ ॐ दर्शयति च ॐ ॥

“आत्मेत्येवोपासीते” त्यात्मपदोक्तगुणोपासनस्यावश्यकत्वादात्मपदेन च ब्रह्माण्यभिमतगुणेभ्यो न्यूनगुणोक्तेरपि सम्भवेन सर्वगुणानां क्रियासामान्यस्य च उक्तनियमाभावात् ब्रह्माण्याः प्रागुक्तसर्वगुणोपसंहारं क्रियासामान्योपसंहारश्चायुक्त इति शङ्कनात्सङ्गतिः। अत्रात्मशब्दस्य “आत्मशब्दाच्चे”त्यत्रोक्तं (ब्र.सू. ३-३-१६) अनुपसंहारमानत्वं न युक्तमुत युक्तमिति चिन्ता। तदर्थं आत्मशब्दोक्ताः गुणाः न सर्वोपास्या इति। तदर्थं गुणाभिधायकत्वेऽपि अधिकारिणंप्रति तत्तद्योग्यगुणाभिधायकत्वमपि प्रागुक्तं न युक्तमुत युक्तमिति। तदर्थं तत्तदुपासनायोग्यगुणमात्राभिधायकत्वनियमो न सम्भवत्युत सम्भवतीति ॥ पूर्वपक्षस्तु ॥ आत्मशब्दो ब्रह्माणं प्रति सर्वानीश्वरधर्मान् ब्रह्माणीं प्रति अशेषगुणान् क्रियासामान्यानि अन्याश्च प्रति तदुपासनायोग्यगुणानेव तन्नयूनाधिकान् वक्तीति प्रातिस्विकनियमाभावेन प्रागुक्ततत्तदधिकारियोग्यगुणा- भिधायकत्वस्य “अन्वयादि” त्यत्रोक्तस्यायोगात् (ब्र.सू. ३-३-१७) न सर्वोपास्या आत्मशब्दोक्ता गुणा इत्यनुपसंहारमानत्वमात्मशब्दाच्चेत्यत्रोक्तमयुक्तमिति ॥ सिद्धान्तस्तु ॥ आत्मशब्दस्य सर्वगुणोक्तिशक्तस्यापि तत्तद्योग्यगुणप्रत्याय -कत्वान्न्यूनाधिकसम्भवेपि तत्तदधिकारिसामर्थ्यवशेन आत्मशब्देन यस्य यावन्तो गुणाः प्रतीयन्ते तत्र तावन्तो ध्येया इति व्यवस्थासम्भवात् “सर्वान्

गुणानि" तिभाष्योक्त (भाल्लवेय) श्रुतिबलाच्चात्मशब्दोक्तगुणाः सर्वोपास्या एवेति युक्तमनुपसंहारमानत्वमिति ॥ १३ ॥

**॥ ॐ संभृतिद्युव्याप्तयपि चातः ॐ ॥ १४ ॥**

अत्र "उक्षा स द्यावा पृथिवी"(ऋ० १०-३१-७) "एषहि सर्वेषु लोकेषु भाती"ति (छां०४-१५-४) श्रुतसंभृत्यादिगुणस्य सर्वोपास्यत्वशंकायां प्रागुक्ताधिकारिविशेषेण सिद्धान्तकरणात्सङ्गतिः । अत्र "आनंदादयः" (ब्र० सू० ३-३-१२) इत्यत्रोक्तं चतुर्गुणोपासनं न युक्तमुत युक्तमिति चिन्ता तदर्थं संभृतिद्युव्याप्ती सर्वोपास्ये उत नेति । तदर्थँ गुणोपास्तौ तज्जन्यफलापेक्षैव हेतुरुत योग्यताविशेषोपीति ॥ पूर्वपक्षस्तु ॥ सर्वेषां मुमुक्षूणां मोक्षए ज्ञानानंदादेरिव स्वावरसम्भरणस्य प्रकाशव्याप्तेरपेक्षितत्वात् फलापेक्षाया एव च तत्साधनानुष्ठाने नियाकत्वात् योग्यताविशेषस्य हेतुत्वे वा सर्वेषामपि योग्यताविशेषस्य सत्त्वेपि विरोधाभावात् तदभावे वा साधनानुष्ठानेन तदनुगुणफलप्राप्तिविरोधाच्च अपेक्षितसम्भरणादिफलस्य "यादृशो भावतिः श्रीशस्तादृशो जीव आभवेदि" ति (भागा.तृतीयस्कंध तात्पर्य) स्मृत्या अर्थसामान्यादित्युक्तन्यायेन संभृत्यादिगुणविशिष्टतया भगवदुपासनेनैव प्राप्यत्वाच्च सर्वोपास्ये एव संभृतिद्युव्याप्ति । न चैवं "सर्वगुणा अपी" ति शंक्यं सर्वेषां सर्वगुणापेक्षाभावात् । अतो न युक्तं सर्वेषां चत्वार एव गुणा उपास्या इति ॥ सिद्धान्तस्तु ॥ फलापेक्षाया एव तत्साधनानुष्ठाने नियामकत्वे त्रैवर्णिकेतरेषामपि स्वर्गहेतुयागाद्यनुष्ठानात्फलप्राप्तिप्रसंगेन "अन्यथा अनर्थकृद्द-

वेदि" ति भाष्योक्त (ब्रह्मतर्के) स्मृतावयोग्यानुष्ठानस्यानर्थफलत्वोक्तया च योग्यताविशेषस्यैव नियामकत्वात्तस्य च "देवादीनामुपास्यास्तु भृतिव्याप्यादयो गुणाः" इति (ब्रह्मतर्के) स्मृत्या देवादीनामेव भावेन सर्वेषामभावात् न सर्वोपास्ये संभृतिद्युव्याप्ती किंतु देवोपास्ये इति युक्तं प्रागुक्तं चतुर्गुणोपासनं। अपेक्षितं प्रकाशादिमात्रं तु भगवद्रूप –प्रतीत्यविनाभूतप्रकाशादिनैव लभ्यमिति ॥ १४ ॥

**॥ ॐ पुरुषविद्यायामपि चेतरेषामनाम्नानत् ॐ ॥ १५ ॥**

एवं इयता ग्रन्थेन सुरनरविरिंचिरूपमध्यमाधमोत्तमाधिकरिणां बह्वल्पसर्वगुणध्यानाय त्रिविधैरपि स्वस्वयोग्यगुणा इतस्ततः उपसंहार्या इति यत्सिध्दं तदयुक्तम्। एकैकत्रैव विद्यायां तत्तद्योग्यगुणोक्तिसम्भवादिति शङ्कनात्सङ्गतिः। अत्र "सर्ववेदान्त" नये(ब्र.सू. ३-३-१) त्रिविधाधिकारिणां यथाशक्ति यत्रसर्वपरिज्ञानमुक्तं तदयुक्तमुत युक्तमिति चिन्ता। तदर्थं तेषां स्वस्वयोग्यगुणा -नामुपासनाय इतस्ततो नोपसंहार्या उतोपसंहार्या इति। तदर्थं स्वस्वयोग्यगुणा एकैकत्र विद्यायामाम्नायन्ते अथ नेति। तदर्थमेकैकत्र तत्तद्योग्यगुणानामनुक्तिज्ञापकं नास्तयुतास्तीति ॥ पूर्वपक्षस्तु ॥ एकैकत्र तत्तद्योग्यगुणा नोच्यन्ते इत्यत्र ज्ञापकाभावेन एकैकत्रैव तत्तदपेक्षितगुणोक्ति - सम्भवेन तन्मात्रपरिज्ञानेनापि स्वस्वयोग्यध्यानविषयगुणानां बुध्दयारूढसम्भवेन कृत्याभावात् न इतस्ततो ध्येयपुंगुणा उपसंहार्या इति त्रयाणां यथाशक्ति सर्वपरिज्ञानं युक्तमिति ॥ सिद्धान्तस्तु ॥

"सर्वतः पौरुषे सूक्ते" इति भाष्योक्त (ब्रह्मतर्क) स्मृत्या सर्व-विद्योत्तमपुरुषसूक्तविद्यायामपि केषांचिदेव गुणानामेव पठित-त्वेन अन्यविद्यासु सर्वगुणपाठाभावस्य कैमुत्यसिध्दत्वेन उत्त-माधिकारिणां सर्वतो गुणोपसंहारस्यावश्यकत्वात् मध्यमाधि-कारिणामपि महदल्पगुणाभिधायकविद्यासु संख्यासाम्यसम्भ-वेपि स्वस्वाभिमतगुणानामेकैकत्रैवोक्तिनियमाभावात् इतस्ततः कार्य एवोपसंहारः इति युक्तं सर्वेषां यथाशक्ति सर्वपरिज्ञान-मिति ॥ १५ ॥

**॥ ॐ वेधाद्यर्थभेदात् ॐ ॥ १६ ॥**

पूर्वत्र इतरततोपेक्षितगुणोपसंहासस्य सर्वैः कर्तव्यत्वप्रस-क्तौ सत्यां वेधादिगुणोपसंहारोऽप्यपेक्षितफलहेतुत्वात् सर्वैः का-र्यैति शङ्कनात्सङ्गतिः । अत्र "आनंदादयः" इत्यत्रोक्तः पूर्वनये प्रसक्तः सर्वेषां चतुर्गुणोपास्तिनियमो न युक्त उत युक्त इति चि-न्ता । तदर्थं "तं प्रत्यंचमर्चिषाऽऽविध्य मर्मन्"(ऋ. १०-८७) इत्यादिश्रुत्युक्तोवेधादिगुणः किं सर्वोपास्योऽथ नेति । तदर्थं त-त्फलेऽपेक्षायोग्यत्वे स्तः उत नेति ॥ पूर्वपक्षस्तु ॥ वेधादिभग-वद्गुणोपासनाफलस्य दुष्टजननिग्रहस्य सर्वज्जनानामपेक्षितत्वात् "प्राणस्त्वा वंशो हास्यती त्येनं ब्रूयात्"(ए. ३-१-४) । "आ-ततायिनमायान्तं हन्यादेवाविचारयन्नि" ति श्रुतिस्मृत्योः वि-हितत्वेनयोग्यतावत्वस्याप्यबगमाच्च वेधादेः सर्वोपास्यत्वात्प्रा-गुक्तनियमो न युक्त इति ॥ सिद्धान्तस्तु ॥ "भिन्धि विध्दि श्रु-णीही" ति (बृहत्तन्त्र) स्मृतौ वेधादिगुणोपास्तिफलस्य यति-

प्राप्यफलाद्विलक्षणफलत्वोक्तिपूर्वं यतीनां तत्रायोग्यत्वस्योक्त-त्वात्। तत एव तत्रापेक्षाया अप्ययोगात्। प्रागुक्तश्रुतेस्तु "वि-ष्णुना वंशभूतेन सहितं वायुना सहा (तथा)। न शक्रोपीति मा-मात्थ हास्यतस्त्तवामतो हि तौ। ज्ञानसामर्थ्यवानित्थं ब्रूयादे-वादिरुत्तमः"(ऐ.भाष्य. ३-१-४) इति स्मृत्या देवविषयत्वेन स्म-ृतेश्च क्षत्रियपरत्वेन च सर्वेषां योग्यत्वानिर्णायकत्वात् योग्य-तापेक्षयोरभावे तन्निबन्धनवेधादिगुणोपास्तेः अभावसिध्देर्युक्तः प्रागुक्तनियम इति ॥ १६ ॥

॥ ॐ

**हानौतूपायनशब्दशेषत्वात्कुशाच्छंदस्तुत्युपगानवत्तदुक्तम् ॐ ॥ १७ ॥**

॥ ॐ सांपराये तर्तव्याभावात्तथाह्यन्ते ॐ ॥

एवमतीतैर्नयैः त्रिविधाधिकारिणामुपासनोपयुक्ततत्तद्यो-ग्यगुणोपसंहारो निर्णीतः। इतः परं उपासनायाः फलनैयत्य-योग्यतातारतम्याधिकारेयत्तागुरु –प्रदानादीतिकर्तव्यतादिकं निरूपयितुं अत्रोपासनायाः निरुपाधिकत्वरूपस्वभाव उच्यते इति सङ्गतिः। यदर्थं पूर्वं गुणोपसंहारो निर्णीतः यस्माच्च अर्थसामान्यादि – त्युक्तस्वसदृशफलत्वं "समान एवं चे" त्यत्र (ब्र.सू. ३-३-२०) समर्थितं सोपासना मुक्तेन न क्रियत उत क्रियत इति चिन्ता। तदर्थं मुक्तेन क्रियत इत्यत्र प्रमाणं नास्त्युतास्तीति। तदर्थं "एतत्सामगायन्नास्ते" इति (तै. ३-१०) श्रुतिः गौणमुक्तिपरा उत परममुक्तिपरेति। तथा

क्रियते इत्यत्रापि किं विध्याद्युपाधिना क्रियते अथ कुशाच्छ-
न्दस्तुत्युपगानवदीश्वरक्रियावत् स्वेच्छया लीलरूपतयेति
चिन्ता। तदर्थं उपासनाविधीनां मुक्तेपि प्रवृत्तिरस्त्युत नेति।
तदर्थं मुक्तौ प्राप्तव्यफलमस्त्युत नेति। मुक्तस्य निष्क्रियत्वेन
साममगायनादिक्रियायोगेन "एतत्सामगायन्नित्यादेः गौणमु-
क्तिपरत्वेन मुक्तावुपासनास्तित्वे मानाभावात्। न चाफलस्य
करणायोगेन सफत्वोपगमेऽपूर्णताप्रसंगेन च मुक्तेन उपासना
न क्रियते इति प्राप्ते "स य एवं विदस्माल्लोकात्प्रेत्ये"ति पूर्ववाक्ये
ब्रह्मज्ञानिनश्वरमदेहत्यागमुक्त्वा पश्चादानन्दमयन्यायेन आन-
न्दमयादिभगवद्रूपपञ्चकप्राप्तिं "एतमन्नमयमात्मानमुपसंक्रम्ये"
त्यादिनोक्तवा आम्नातस्य "एतत्सामे" ति वाक्यस्य गौणमु-
क्तिपरत्वायोगेन परममुक्तिपरत्वेन प्रमाणसद्भावात् "कृष्णो
मुक्तै रिज्यते" इति (भारत) मुक्तस्य यजनादि क्रियासत्त्वेन
कैमुत्यन्यायाच्च मुक्तेनोपासनं क्रियत एवेति सिद्धान्त इत्याद्यः
पक्षः। द्वितीयस्तु विधीनां इष्टसाधनत्वम्। तद्बोधकाश्च "उपा-
सीते" त्यादि विधिप्रत्ययार्थाः। ते "ब्रह्मविदाप्रोति पर" मिति
(तै. २-१) ब्रह्मज्ञानेन मोक्षो भवतीत्युक्ते तत्कथमित्यपेक्षायां
तादर्थे प्रवृत्ता अपि यथा बध्दान् प्रति उपासनं मोक्षरूपेष्टसा-
धनमिति प्रत्याययन्ति एवं मुक्तं प्रत्यपि आनन्दातिशयस्य
प्राचिनकर्मफलत्वस्य "अग्निहोत्रादितु तत्कार्यायैवे" ति
(ब्र.सू. ४-१-१६)वक्ष्यमाणत्वेन तत्साधनत्वबोधनासम्भवेपि
मुक्तौ तदा तदा प्राप्तानिष्टपरिहाररूपफलस्येष्टस्य सम्भवेन

तत्साधनताबोधकत्वसम्भवेन मुक्तेऽप प्रवृत्तिरस्ति। अन्यथा

तत्कृतेरेवायोगात्। अतो विधिफलकामनाद्युपाधिनैव उपासनाक्रियत इति प्राप्ते "तीर्णोंहि तदा सर्वान् शोकान् हृदयस्य भवती"(बृ. ६-३-२२) त्यादेः मुक्तौ सर्वारिष्टपरिहारस्य सिध्दत्वेन प्राप्तव्यानिष्टपरिहारस्याप्यभावेनैव तत्साधनत्वमादायापि इष्टसाधनत्वमुपासनस्य् मुक्तं प्रतिबोधयितुमशक्यत्वेन बध्देन मुक्तस्य समानधर्मतापत्त्या च मुक्ते उपासना विधीनाममप्रवृत्तेः। विधिफलकामनयोरभावेपि नियतब्रह्मयज्ञानन्तरं कुशैः स्वेच्छया द्विजानां मन्त्रसामाध्ययनवत् ईश्वरक्रियावच्च स्वेच्छया लीलारूपतयैवोपपत्तेः क्रियते मुक्तेननोपासनेति। तथा च स्मृतिः "तीर्णतर्तव्यभागाश्च स्वेच्छयोपासते परं" (वायुप्रोक्त) इति सिद्धान्त इति। अत्र प्रयोजनं पूर्वपादोक्त भक्तयाक्षेपसमाधी। अत्राद्यमधिकरणशरीरं भाष्ये "एतत्सामगायन्नास्ते" इति श्रुत्युक्तया भवेदियं चिन्ता यदि मुक्तस्य उपासनमेव स्यात्तदेव कुतः इति टीकया मुक्तौ उपासनभावे फलादिकमपि स्यादिति न्यायविवरणेन च सूचितम्। द्वितीयं तु भाष्यविवरणयोरेकवाक्यतासम्पादनाय व्यामिश्रेण निरुपणं कृतमित्यविरोधः। यद्वा मुक्तेनोपास्तिः न क्रियते क्रियते वेति चिन्ता। तदर्थं मुक्तावुपास्तिभावे साधकं नास्त्यथ विपरीतमिति। तदर्थं मुक्तस्य विधिविषयत्वादिकं बाधकं भवत्युत नेति ॥ पूर्वपक्षस्तु ॥ मुक्तस्योपासनावत्त्वे मानाभावेन विधिबध्दत्वेन वा तदबध्दत्वेन वा उभयथाप्युपासनाभावे फलप्राप्त्या अपूर्णतप्रसंगेन आद्ये संसारिसमानधर्मापत्त्याअन्त्ये

अविहितकरणस्यैवायोगेन बाधकेन मुक्तेनोपासना न क्रियत इति ॥ सिद्धान्तस्तु ॥ एतत्सामगायन्नित्यादि साधकभावेन उपासनाविधीनां मोक्षवाक्यशेषतया मुक्तयर्थत्वेन मुक्तस्य तदविषयत्वेऽपि कुशाच्छन्दस्तुत्युपगान- वत्स्वेच्छयैवानन्द-वृध्देः प्राचीननिवृत्त -कर्मफलत्वेन सर्वानिष्टनिवृत्तेः प्राप्तत्वेन प्राप्यफलाभावेपि ईश्वरक्रियावन्मुक्तस्य लीलात्वेनोपासनाक्रि-यायाः स्वभावोपपत्तेः बाधकाभावेन च मुक्तेनोपासना क्रियत इत्येकरूपेणैव पूर्वोत्तरपक्षौ ध्येयौ ॥ १७ ॥

**॥ ॐ छन्दत उभयाविरोधात् ॐ ॥ १८ ॥**

॥ ॐगतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ॐ ॥

॥ ॐ उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॐ ॥

उपासनाप्रसङ्गसन्निधापितं कर्माप्युपासनावन्मुक्तौ नियत-मेवेतिशङ्कनात्सङ्गतिः । पूर्वत्र प्रकृता मुक्ताः किमुपासनवन्निय-मेन कर्म कुर्वन्त्युत नेति चिन्ता । तदर्थं नियमेन तदनुष्ठापक-मस्त्युत नेति । तदर्थं शक्तत्वाद्येवानुष्ठापकमुत विध्यादिवत्त्वम-षीति ॥ पूर्वपक्षस्तु ॥ साधनानुष्ठाने हि तज्जन्यफलार्थित्वे सति शक्तत्वं प्रयोजकम् । मुक्तानां च प्राप्तफलत्वेनार्थित्वाभावेपि सि-ध्दवैदुष्याणां स्वेच्छयोपासनानुष्ठनानवत् कर्मकरणेपि शक्तिस-द्भावात्कर्मणो भगवत्पूजारूपत्वाच्च अनुष्ठापकसद्भावात्कर्मापि नियमेन कुर्वन्त्येव । अन्येषां तस्याननुष्ठापकत्वे उपासन मपि नियमेन न कुर्युः अविशेषादिति ॥ सिद्धान्तस्तु ॥ कर्मणो भग-वत्पूजा - त्मकत्वेऽपि मुक्तानां तदनुष्ठानशक्तत्वेपि न तावन्मात्रं

नियमेनानुष्ठाने हेतुः । किं तु विहितत्वं अकरणे प्रत्यवायवत्वं अप्राप्तफलत्वं च । न चैतत्सर्वं मुकतानामपि मोक्षस्यापुमर्थत्व-बप्रसंगेन विध्यादेरभावतप्राप्तफलत्वाच्च तेषाम् । अतो नियमेन न कर्म कुर्वन्ति किंतु भगवत्पूजात्वात् पुर्वानुष्ठानेन कुर्वन्ति क-दाचिन्नैव कुर्वते । नित्य - ज्ञानस्वरूपत्वान्नित्यंध्यायन्ति केश-वमि" त्यादि(ब्रह्माण्ड) स्मृतेरिति ॥ १८ ॥

**॥ ॐ अनियमः सर्वेषामविरोधाच्छब्दानुमानाभ्याम् ॐ ॥ १९ ॥**

पूर्वं ज्ञानद्वारा कर्मफलस्य मोक्षस्य प्राप्तत्वानन्न कर्मानुष्ठान-नैयत्यमित्युक्ते तर्हि ज्ञानिनां सर्वेषां फलप्राप्तिरुत केषांचिदेवेति चिन्तनात्सङ्गतिः । यद्वा उपासनाविधीनां ज्ञानद्वारा मोक्षवा-क्यशेषत्वमुपायनशब्दशेपत्वादित्यत्र उक्तमयुक्तम् । सत्यपि ज्ञाने केषांचिन्मोक्षाभावादित्याशयेनात्रशङ्कनात्सङ्गतिः । पूर्वन-यस्य तु प्रासंगिकत्वात् न व्यवधायकत्वम् । "तल्लक्षणार्थोपल-ब्धेरि" त्यादौ(ब्र.सू. ३-३-१३) पूर्वत्रार्थपदेन प्रकृतो मोक्षः किं केषांचिदेव ज्ञानिनां प्राप्य उत सर्वेषां ज्ञानिमामिति चिन्ता । त-दर्थं ज्ञानिष्वपि उपासने योग्यायोग्यविभागोऽस्त्युत नेति । तद-र्थं ज्ञानिष्वपि योग्यायोग्यविभागभावे ज्ञापकं नास्त्युतास्तीति ॥ पूर्वपक्षस्तु ॥ केषांचिदेव ज्ञानिनां मोक्षो न सर्वेषां । ज्ञानिष्वपि केषुचिदयोग्यत्वसम्भवात् । "कामं भवेम बृजिनैर्निरयेषु नष्टाश्चे-तोऽलिवद्यर्हि ते पदयो रमेत" इति (भागा. ३-१ ६-४९) तृतीय-स्कन्धे कृमारोक्तेः । अयोग्यानां च मोक्षस्योपासकेष्वयोग्यानां

सर्वगुणोपसंहारस्येवाप्राप्यत्वात्। न चोपासकेषु सर्वगुणोपसं-हारायोग्यजनवत् ज्ञानिषुमुक्तययोग्यजनो नास्त्येव। प्रागुक्त-कुमारोक्तिस्तु भगवत्पादरतिस्तुतिपरेति वाच्यम्। सर्वगुणोप-संहारयोग्यायोग्यविभागोस्ति ज्ञानिषु नास्तीयत्र ज्ञापकाभावा-दिति ॥ सिद्धान्तस्तु ॥ सर्वेषामेव ज्ञानिनां मोक्षो न केषांचिदे-वेति नियमः "सर्वैर्गुणैर्ब्रह्मणैव ह्युपास्यो नान्यै" रिति निषेध ब-लेनोपसंहारे योग्यायोग्यविभाग -सत्त्वेपीह ज्ञानिषु केषांचिन्मु-क्तिनिषेधाभावेन प्रत्युत "न कश्चिद्द्ब्रह्मवित्सृतिमनु -भवति मु-क्तोह्येप भवति" इति (कौण्डिण्य श्रुतिः) सर्वज्ञानिनां मुक्तिनैय-त्यवचनेन विमता ज्ञानिनो नियतमोक्षाः ज्ञानित्वात्संमतज्ञानि-वदिति निर्बाधश्रुतिमूलानुमानेन च ज्ञानिष्वयोग्याभावनिश्चया-त्सर्वज्ञानिप्राप्यो मोक्ष इति तत्साधनोपासनं निःशंकं कार्यमेव। युक्तं चोपायनशेषत्वं तध्दिद्धीनामिति ॥ १९ ॥

**॥ ॐ यावदधिकारमवस्थितिराधिकारिकाणाम् ॐ ॥ २० ॥**

॥ ॐ अक्षरधियां त्वविरोधः

सामान्यतध्दावाभ्यामौपसदवत्तदुक्तम् ॐ ॥

यद्येवमनियमेन ज्ञानिनो मोक्षः तर्हि अकिञ्चित्करोसौ यो-ग्यताविशेषः तत्प्रयोजकफलतारतम्यस्यान्येनैवोपपत्तेरिति पू-र्वोक्तर्कप्रतिहतशङ्कनात्सङ्गतिः। येषामुपासकानां ज्ञानप्राप्तौ स-त्यां मोक्षनैयत्यं प्रागुक्तं तदुपासकाः किं योग्यतातारतम्यव-न्तो उत न तद्वन्त इति चिन्ता। तदर्थं तत्र प्रमाणं नास्त्यता-स्तीति। तदर्थं मुक्तावानंदादितारतम्यं क्रिमुपासनादिप्रयत्नता-

रतम्येनैवोपपन्नं उत योग्यतातारतम्येनैवेति। तथा मुक्तावानन्दतारतम्ये साधकं नास्ति बाधकं चास्ति अथ विपरीतमिति ॥ पूर्वपक्षस्तु ॥ “वृध्दिह्रासभाक्तवमि” ति नये(ब्र.सू. ३-२-२०) दर्शनाच्चेतिगुणसूत्रोपात्तया “अथात आनन्दस्य मीमांसा भवती” त्यादिश्रुतेः संसारिपरत्वेन मुक्तावानन्दतारतम्ये मानाभावात् द्वेषेर्ष्यादिप्रसङ्गरूपबाधकाच्च मुक्तौ तारतम्यमेवायुक्तम्। युक्तं चेदपि कृष्यादिप्रयत्नतारतम्येन धान्यादिफलतारतम्यवदुपासनादिप्रयत्नतारतम्येनैवोपपद्यते इति तस्य योग्यतातारतम्याप्रोयजकत्वेन प्रमाणाभावान्नोपासकाः योग्यतातारतम्यवन्तः इति ॥ सिद्धान्तस्तु ॥ “नानाविधा देवसंघा विमुक्तौ” इत्यादि विशेष(तुर) श्रुत्या “नरादिब्रह्मपर्यन्तं विमुक्तानां शतोच्छ्रयः। अप्यानन्दे मिथोप्युक्तस्त्वध्वर्यूणां श्रुतौ पृथगि”ति स्मृत्या च आनन्द –श्रुतेरमुक्तविषयत्वायोगेन मुक्तौ तारतम्ये प्रमाणभावात् विषयलंपटत्वमत्सरादिदोषि -त्वानुपकारित्वानामेव लोके द्वेषेर्ष्यादिप्रयोजकत्वस्य दृष्टत्वेन द्वेषेर्ष्यादिनिमित्त – विषयलंपटत्वादेः ब्रह्मज्ञानितया मुक्तेष्वभावात् उत्तमेभ्योऽधमानांम ज्ञानादिलक्षणोपकारभावेन अनुपकारित्वाभावात् बाधकाभावाच्च युक्तमेव मुक्तौ तारतम्यं। तत्तु प्राचीनयोग्यता - तार तम्येन विनाऽनुपपद्यमानं योग्यतातारतम्यं गमयेत्। नचोपासनादिप्रयत्नतारतम्येनान्यथोपपत्तिः। “स्वाधिकाराधिको यत्नः प्रायशो नोपपद्यते। कथञ्चिदधिके यत्ने दोषः कश्चित्समापतेत्” इति वचनेन प्रयत्नतारतम्यस्यापि योग्यतातारतम्यनिब-

न्धनत्वात्। अतो योग्यतातारतम्यंवत एवोपासका इति। फलं तु प्राप्तेश्चेत्यत्रोक्तयोग्यताभेद समर्थनम्॥ २०॥

**ॐ इयदामननात् ॐ ॥२१॥**

॥ ॐ अन्तरा भूतग्रामवदिति चेत्तदुक्तम् ॐ ॥

॥ ॐ अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत् ॐ ॥

प्रागुक्तयोग्यतानियमस्य निरवधिकत्वमाशंक्य सावधिकत्वरूपविशेष चिन्तनात्सङ्गतिः। छान्दोग्ये सप्तमे नामवाङ्मनस्संकल्पचित्तध्यानविज्ञानबलान्नाप्तेज आकाशस्मराशाप्राणशब्दिताः उषास्वाहा पर्जन्यमित्राग्निवरुण – विद्युत्प्रवाहानिरुध्दाहंकारिकप्राणेंद्रोमारुद्रवाणीमारुतांतदेवताः उत्तरोत्तरमाधिक्येनोक्ताः। पूर्वत्राधिकारिपदेन प्रकृतास्ते उपासनाधिकारवन्तः। किं मुख्यप्राणावधिका न भवन्ति उत तदवधिका एवेति चिन्ता। तदर्थं प्राणादधिकाधिकारिसाधकमनुमानं "प्राणो वा सर्वेभ्यो भूयान्न प्राणाद्भूयानिति श्रुतिबाधितं न भवत्युत भवतीति। तदर्थं श्रुतौ सर्वशब्दः किं परमात्मान्यपर इव अधिकार्यंतरान्यपरतयापि सङ्कुतदूत्तिः सम्भवत्युत नेति॥ पूर्वपक्षस्तु॥ "प्राणो वाव सर्वेभ्य" इत्यत्र सर्वशब्दसस्यासङ्कुचद्वृत्तित्वे मुख्यप्राणस्य निरुपचरितसर्वोत्तमत्वप्राप्त्यासर्वोत्तमवस्तुद्वयायोगेन श्रुत्यादिसिध्दसर्वोत्तमताकविष्णवभेदे वाच्ये "चक्षुरादिवत्त्वि" त्यादौ (ब्र.सू. ३-४-११) भाष्योक्तानेकमान – सिध्दप्राणरमात्मभेदाभावप्रसङ्गबाधकेन तदन्यपरत्वेन सङ्कुचद्वृत्तित्वेऽवश्यं वाच्ये अधिकारिविशो-

षव्यतिरिक्तपरत्वेनापि सङ्कोचे बाधकाभावात्। तथा च तस्याः श्रुतेः प्राणः स्वोत्तमाधिकारियुक्तः अधिकारित्वात् नामादिवदित्यनुमानबाधकत्वेन तदबाधितादस्मादनुमानात् प्राणादप्युत्तमाधिकारिसिध्देः उपासनाधिकारिणो न मुख्यप्राणाबधिका इति॥ सिद्धान्तस्तु॥ सर्वशब्दस्यानेकमानबलेन भगवदन्यत्र सङ्कुचद्वृत्तित्वेऽपि चक्षुरादिवत्त्वित्यादौ तत्र तत्र भाष्योक्तवचनैः "उत्तमत्वं हि देवानना" मित्यादि (उत्तराधिकरणे) वक्ष्यमाणभाष्यवचनैश्च प्राणाध्देरेवोत्तमत्वप्रतिपादनपरैः तदनुसारिण्याः भगवन्मात्रव्यतिरिक्तपरत्वेन सङ्कुचद्वृत्तिकसर्वशब्दोपेतप्रागुक्त -श्रुत्या च बाधितत्वेन अनुमानस्या प्रमाणत्वात् प्राणाबधिका एवोपासका इति॥ फलं तु सर्वगुणोपसंहारस्य ब्रह्माधिकारिकत्वोक्ति -समर्थनम्॥२१॥

**॥ ॐ व्यतिहारो विशीषंति हीतरवत् ॐ ॥२२॥**

पूर्वत्र प्राणस्यैव हिरण्यगर्भत्वात् तस्य प्रागुक्तस्सर्वगुणोपसंहारोयुक्त इत्युक्तमयुक्तम्। तस्यैव सर्वोत्तमत्वेनान्यस्य तदुपास्यस्याभावादिति शङ्कनाद्वा उपासनाधिकारिणो निरूप्योपास्यमिह निरूप्यत इति वा सङ्गतिः। पूर्वत्र प्राणादुत्तमत्वेन प्रकृतो विष्णुः किं प्राणान्नोत्तमः अथोत्तम इति चिन्ता। तदर्थं छान्दोग्ये "प्राणोवा आशाया भूयानि" त्याम्नानात् (छां. ७-१५-१) प्राणादुपरि "सत्यं त्वेव विजिज्ञासितव्यं" (छां. ७-१६-१) इत्याम्नातः सर्वोत्तमः सत्यनामकः किं प्राणादनन्य उतान्यो विष्णुरिति चिंता। तदर्थं प्राणप्रकरणात् सत्यप्रकरण-

स्य भेदकं नास्त्युतास्तीति ॥ पूर्वपक्षस्तु ॥ नामादिप्राणपर्यन्ता-नां पञ्चदशप्रकरणानां भेदकस्य प्रश्नप्रतिवचनभावस्येवेह "अ-स्ति प्रामाद्भूयः इति प्रश्नस्य "सत्यं वाव प्राणाद्भूयः" इति प्र-तिवचनस्य प्राणसत्यप्रकरणभेदकस्याभावेन प्राणस्त्ययोरनन्य-त्वान्न सत्यशब्दार्थभूतः सन् विष्णुः प्राणादुत्तमः। न च प्र-करणभेदकयोः प्रश्नप्रतिवचनयोरध्याहारः ज्ञापकाभावदिति ॥ सिद्धान्तस्तु ॥ "स वा एष एवं पश्यन्नेवं मन्वान एवं वि-जानन्नतिवादी भवती" ति (छां. ७-१५-४) प्राणवादिनो -ऽतिशयितवस्तुवादित्वेनातिवादित्वमुक्तवा पश्चात् "एष तु वा अतिवदति यः सत्येनातिवदति" (छां. ७-१६-१) इति सत्यस्य वस्तु वदतोप्यतिवादित्वोक्त्या प्राणातिवादितोपि सत्यतिवादिनः तुशब्देन व्यावर्तनात् ज्ञापकात् प्रश्नप्रति" वचनयोरध्याहारेण प्र-करणविच्छेदात् "उतमत्वं हि देवानां" इति (बृहत्तन्त्र) स्मृतेश्च सत्यनामा विष्णुः प्राणादुत्तम इति तु शब्दोनाध्याहारकल्पकः "विज्ञानं त्वेव"(छां. ७-१७-१) "मतिस्त्वेव"( छां. १-१८-१) इ-त्यादौ वक्ष्यमाणदिशा भेदहीनेपि वस्तुनि श्रवणेन व्यभिचारा-दिति चोद्यंतु "भूम" नये(ब्र.सू. १-३-८) निरस्तम्। निरासप्र-कारश्च चंद्रिकायां व्यक्तः। फलं त्वानंदादय इत्यत्रोक्तआत्मत्वो-पासनसमर्थनम् ॥ २२ ॥

**॥ ॐ सैव हि सत्यादयः ॐ ॥ २३ ॥**

अत्र प्रागुक्ते विष्णोः प्राणादुत्तमेव विशेषचिन्तनात्सङ्गतिः। प्रकृतात्प्राणात् सत्यपदोक्तो विष्णुरेवोत्तमः अथ बहवोप्युत्तमाः

सन्तीति चिन्ता। तदर्थं सत्यस्योपरि पठितानां विज्ञानमतिश्र-ध्दानिष्ठाकृतिसुखभूमाहंकारात्मनां नवानां किं सत्यात् परस्परं च भेद उताभेद इति। तदर्थं अभेदे ज्ञापकं नास्त्युतास्तीति ॥ पूर्वपक्षस्तु ॥ सत्यादीनामात्मान्तानां अभेदे ज्ञापकाभावात् शब्दान्तरन्यायेन भेदस्यैव न्याय्यत्वात् प्राणात्सत्यादयो बहव उत्तमा इति ॥ सिद्धान्तस्तु ॥ विज्ञानादेः सत्यादितोन्यत्वे "सत्यं भगवो विजिज्ञासे" (छां. ७-१६-१) इत्यादि प्रश्ने विज्ञानादेरुक्तेरसांगत्यापत्तेः तदन्यथानुपपत्तिबलेन "सत्यं भगवो विजिज्ञासे" इत्यस्य सत्यगुणजिज्ञासापरत्वे सति सत्याविनाभूतविज्ञानोक्तिः। एवं "विज्ञानं भगवो विजिज्ञासे" (छां ७-१७-१) इत्यत्रापि विज्ञानगुणजिज्ञासायां तदविनाभूतमत्युक्तिरित्येवं पर्वपूर्वगुणजिज्ञासायां उत्तरोत्तरस्य तदविनाभूतगुणोक्तिपरत्वेन सर्वेषामभएदस्य न्यायप्राप्तत्वात् "सत्याद्या अहमान्ता यद्गुणा" इत्यादि (अध्यात्म) स्मृतेश्च तेषामभेदात् विष्णुरेव प्राणादुत्तम इति ॥ २३ ॥

**॥ कामादितरत्र तत्र चायतनादिभ्यः ॐ ॥ २४ ॥**

॥ ॐ आदरादलोपः ॐ ॥ ॥ ॐ उपस्थितेस्तद्वचनात् ॐ ॥

एवं सत्यादेः सर्वस्य विष्णुत्वोक्तौ श्रियोप्यधिकारित्वात् प्राणादूर्ध्वं श्रियोप्यध्याहारः स्यात्। तथा च प्राणावधित्वमधिकारिवर्गस्योक्तमयुक्तमिति शङ्कनात्सङ्गतिः। अत्र प्राणविष्णुसन्निधापिताश्रीः किमुपासनायामधिकारिणी अथ नेति चिन्ता। तदर्थं श्रियो भगवद्वर्णनं जन्मादिहेतुकर्मादिभंगमोचननिमित्तं उत

मुक्तवन्निरुपाधिकभक्तयतिशयनिमित्तमिति । तदर्थं भक्तिनिमि-त्तत्वकल्पकं नास्त्युतास्तीति ॥ पूर्वपक्षस्तु ॥ "यदर्चितं ब्रह्मभ-वादिभिस्सुरैः श्रिया च देव्या मुनिभिश्चसात्वतै" रित्यादौ (भा-गवत १०-३३-७) श्रियोपि भगवदुपासना श्रुयते । सा चेत-रेपामिव भगवत्प्रीतिद्वारा बन्धमोचनार्था । तस्याः कृतकृत्येव तदयोगात् । भक्त्यतिशयनिमित्तत्वे कल्पकाभावात् । अन्यथा सात्वतप्रभृतीनामपि सा तदर्था न स्यात् । एवं च तद्बलात्सी-तासुक्मिण्यादिरूपेण भवनतिरोधानादेः कर्माधीनदेहोपादान - त्यागरूपत्वेन इतरजीववत् बध्दत्वावगमात् बध्दत्वे सति सा-धुत्वाच्च अधिकारिणी - एवोपासनायां श्रीरिति ॥ सिद्धान्त-स्तु ॥ सर्वायतनेत्यादिभाष्योक्तश्रुत्यादिबलेन नित्यं भगवत्स-म्बन्धित्वेन अतिशयिततत्प्रसादात् नित्यमुक्तत्वागमात् तद्बलेन भूमौ भवनादेः ईशेच्छाधीनस्वेच्छामात्रहेतुकतया प्रादुर्भावरू-पत्वेन कर्माधीनदेहयोगादिरूपत्वा - भावगमेन "यथा श्रीर्नि-त्यमुक्तापी" ति स्मुत्या चार्चनस्य भक्तयतिशयनिमित्तत्व – कल्पनानन्नाधिकारिणी श्रीरिति । फलं तु उपासकानां प्राणाव-धित्वसमर्थनम्

**॥ ॐ तन्निर्धारणार्थनियमस्तद्दृष्टेः पृथग्ध्यप्रतिबंधः फलम् ॐ ॥ २५ ॥**

पूर्वत्र श्रियः कृतार्थतया फलाभावेपि आदरादुपासनाऽलो-पोक्तै तर्ह्यकृतार्थानां फलाभावात् श्रवणादिसमस्तोपासनस्य लोप एव स्यादिति शङ्कानासङ्गतिः । अत्र श्रवणमननध्यानरूप-

त्रिविधमुपासनं व्यस्तं कार्यमुत समस्तमिति चिन्ता । तदर्थं त्रिविधस्यापि फलं नास्त्युतास्तीति । तदर्थं त्रितयस्यापि तत्साधनत्वे मानोपयोगौ न स्त उत स्त इति ॥ पूर्वपक्षस्तु ॥ उपासनं हि भगवद्दर्शनार्थं "द्रष्टव्य" श्रुतेः । तस्य च श्रवणमननाभ्यां वा ध्यानेनैव वोपपत्तौ न त्रितयसाध्यत्वे प्रमाणमस्ति । "द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इति श्रुतिस्तु वैकल्पिकसाधनविधानेनाप्युपपन्ना । किं च न त्रितयस्योगोऽस्ति । न चाज्ञातज्ञापनेन श्रवणस्य, तन्नियमजननेन मननस्य, दृशिजननेन ध्यानस्योपयोग इति युक्तम् । तथा च त्रितयस्यापि पृथक्फलत्वेन दर्शनोद्देशेन त्रितयविधानानुपपत्तेः । एवं च प्रमाणोपयोगयोरभावे दर्शनस्य त्रितयसाध्यत्वाभावेन फलाभावान्न समस्तोपासनं कार्यमिति ॥ सिद्धान्तस्तु ॥ "द्रष्टव्य" इति श्रुतौ दर्शनोद्देशेन त्रितयस्यापि विधानाद्विकल्पद्योतकशब्दाभावेन समुच्चयसाधनतावगमात् समुच्चितानामेव दृशिरूपफलहेतु त्रितयं कार्यमेव । न चोपयोगाभावः शंक्यः । दर्शनं प्रति ध्यानस्यैव हेतुत्वेऽपि ध्यानस्य दृशिजनने ऽपेक्षितायाः प्रतिबन्धकाज्ञानसंशयविपर्ययनिवृत्तेः संपादनेन श्रवणमननयोरुपयोगित्वादिति । फलं तु जिज्ञासासूत्रोक्तत्रितयसमर्थनम् ॥ २५ ॥

**॥ ॐ प्रदानवदेव हि तदुक्तम् ॐ ॥ २६ ॥**

प्रधानकर्तव्यत्वसिध्दौ तदङ्गमिहनिरूप्यत इति वा पूर्वं श्रवणादित्रयस्यापि फलमुक्तम् इहाङ्गमुच्यत इति वा दृशि हेतोर्ध्यानस्य श्रवणमननाभ्यां संगमुक्तं इह त्रितयस्यापि संगमुच्यत इति वा

सङ्गतिः । अत्र प्रकृतश्रवणादित्रयं यथाकथञ्चिदनुष्ठितं ज्ञानहेतुरुत प्रीतिपूर्वक गुरुपदेशयुक्तमिति चिन्ता । तदर्थं तस्य तादृशगुरूपदेशयुक्तत्वेन फलहेतुत्वे साधकं नास्ति श्रुतिविरोधादिबाधकं चास्त्युत विपरीतमिति ॥ पूर्वपक्षस्तु ॥ गुरुपदेशयुक्तमेव श्रवणादिकं दृषिहेतुरित्यत्र प्रमाणाभावात् प्रत्युत द्रष्टव्य इति श्रुतौ श्रवणादित्रयस्यैव विधानेन तद्विरोधरूपस्य ज्ञानस्य गुरुप्रसादाधीनत्वे ज्ञानिनोपि मोक्षस्य तदधीनत्व –प्रसंगेन कदाचिद्गुरुपकोपेन मोक्षाभावस्याप्यापत्त्या "अनियमस्सर्वेषा" मित्युक्त (ब्र.सू. ३-३-३१) भङ्गरूपस्य बाधकस्य च सत्त्वाच्च न गुरुप्रदानयुक्तं ज्ञानहेतुः किंतु केवलमेव श्रवणादिकं । न च गुरुकोपो न मोक्षप्रतिबन्धकः । तथात्वे गुरुप्रदानमपि ज्ञानेऽकिञ्चित्करमिति ॥ सिद्धान्तस्तु ॥ प्रीतिपूर्वकगुरूपदेशरूपांगयुक्तमेव श्रवणादिकं ज्ञानहेतुर्नकेवलं । "आचार्यवान् पुरुषो वेदे" ति(छां. ६-१४-२) श्रुतौ ज्ञानस्य गुरुप्रसादाधीनत्वावगमेन तेन विना श्रवणादिमात्रेण ज्ञानासिध्देः । "सम्यग्लक्षणसम्पन्नो यद्दद्यात्सुप्रसन्नधीः । शिष्याय सत्यं भवति तत्सर्वं नात्र संशयः" इति "नातिप्रसन्नहृदयो यद्दद्याद्गुरूरप्यसौ । न तत्सत्यं भवेत्तम्माद्यनीयो गुरुस्सदा" इति स्मृतेश्च । न च द्रष्टव्य इति श्रुतिविरोधो बाधकः । श्रवणादेः प्रधानसाधनत्वाद्गुरुदानस्य तदङ्गत्वात् सोमरससाध्ययागस्य दृढमुष्टिनिपीडनाधीनत्वेऽपि तस्य तदङ्गत्ववत् ज्ञानस्य गुरुप्रदानाधीनत्वेऽपि तस्य ज्ञानहेतुश्रवणाद्यंगत्वोपपत्तेः । अङ्गस्य च प्रधानसाधनेन सह तुल्यकक्ष्यतया विधानाभावपि दृढमुष्टिनिपीडनादेरिव अर्थाद्वचनान्तराद्वा प्राप्तत्वेन

प्रदानस्य द्रष्टव्यश्रुत्यनुमतत्वात्। न च कदाचित्कोपेन ज्ञानस्य वा ज्ञानिनो मोक्षस्य वा ऽभावापातो बाधक इति वाच्यम्। ज्ञान-मोक्षयोरीश्वरक्लृप्तत्वेन तदभावायोगात्। गुरुशापादेश्च "ज्ञानिनो गुरुशापेपी" त्यादि (न्यायविवरणोदाहृत) स्मृत्या ज्ञानादिह्रा-सहेतुत्वेन साफल्योपपत्तेरिति। फलं तु इतरेत्वर्थसामान्यादि" त्यत्रोक्त (ब्र.सू. ३-३-१४) गुरुप्तापेक्षत्वस्य समर्थनम्॥ २६ ॥

**॥ ॐ लिङ्गभूयस्त्वात्तध्दि बलियस्तदपि ॐ ॥ २७ ॥**

पूर्वप्रकृतांगांगिनोर्मध्येऽत्राङ्गस्य बलवत्त्वसाधनात्सङ्ग-तिः। अत्र श्रवणादिसाधनं तदङ्गगुरुप्रदानं चेति द्वयं समबलं उतान्यतरद्बलवदिति चिन्ता। तदर्थं पुरुषत्वसाम्यं गुरुशिष्य-प्रयत्नयोः साम्यापादकं भवत्युत नेति। तथान्यतरद्बलवदित्यत्र शिष्यप्रयत्नो बलवानथ गुरुदानं बलवदिति चिन्ता। तदर्थं प्रदानस्य बलत्वे साधकं नास्ति बाधकं चास्त्यथविपरीत-मिति॥ पूर्वपक्षस्तु॥ प्रदानस्य बलवत्त्वे क्वापीतिकर्तव्यतायाः साधनादपि प्राबल्यादर्शनेन इति कर्तव्यत्वभङ्गप्रसंगात् श्रव-णादिवैयर्थ्यप्रसंगाच्च बाधकभावात् साधकाभावाच्च न प्रदानं बलवत् किंतु श्रवणाद्येव प्रधानसाधनत्वात्। मास्तु वा बलवत् गुरुशिष्ययोः पुरुषत्वाविशेषात् गुरुप्रदानं शिष्यप्रयत्नश्च द्वयं सममेव स्यात्। नहि कश्चिन्न्यूनाधिकभावेपि विशेषोस्तीति॥ सिद्धान्तस्तु॥ न तावत्साम्यं युक्तं पुरुषत्वे गुरुत्वशिष्यत्ववत् तत्प्रयत्नयोरपि न्यूनाधिकभावसम्भवेन पुरुषत्वमात्रस्या-प्रयोजकत्वात् न्यूनाधिकभावे प्रदानस्यैवाधिक्यमुक्तम्

लिङ्गबाहुल्यरूपसाधकभावात्। हिंसायाः पापजननशक्ताया अपि यागीयहिंसायाः प्रोक्षणांजनपर्यग्निकरणादीतिकर्तव्यताबलेन पुण्यजनकत्वदर्शनेन तत्रेतिकर्तव्यतायाः प्राबल्यवत् अत्र प्रदानस्य प्राबल्ये अङ्गत्वभङ्गप्रसंगाभावात्। श्रोतव्य इत्यादि श्रुत्या "गुरुप्रसादो बलवानि" त्यादि (बाराह) स्मृत्या च श्रवणादेरप्यावश्यकत्वेन तद्वैयर्थ्याभावाच्च बाधकाभावाच्चेति। लिङ्गबाहुल्यं च टीकादौ व्यक्तम्। फलं तु सेतिकर्तव्यत्वस्यैव श्रवणादेर्ज्ञानहेतुत्वरूपप्रागुक्तप्रमेयसमर्थनम्। अन्यथा क्वचिद्गुरोरनपेक्षितत्वप्रसंगेन प्रागुक्तमयुक्तं स्यादिति ॥ २७ ॥

**॥ ॐ पूर्वविकल्पः प्रकरणात्स्यात्क्रियामानसवत् ॐ ॥ २८ ॥**

॥ ॐ अतिदेशाच्च ॐ ॥

यत्प्रसादो बलवानित्युक्तं स गुरुरत्र चिन्त्यत इति सङ्गतिः। अत्र प्रकृतो गुरुः किं पूर्वप्राप्ता एवेति नियमोऽथान्योपि गृहीतुं शक्य इति चिन्ता। तदर्थं पूर्वत्यागे कारणं नास्ति बाधकं चास्ति उत विपरीतमिति। तथा अन्योपि ग्रगह्य इति पक्षे स किं यः कश्चिदुत पूर्वस्मादनपकृष्टः समग्रानुग्रहकर्तैवेति ॥ पूर्वपक्षस्तु ॥ शुभलाभार्यं हि गुरुस्वीकारोभवति। स च पूर्वप्राप्तगुरुणैव भविष्यतीति तत्त्यागे कारणाभावात्। "(गुरुत्यागे भवेन्मृत्युः मन्त्रत्यागे दरिद्रता) गुरुमन्त्रपरित्यागी रोरवं नरकं व्रजेदि" ति दोपश्रवणरूपबाधकाच्च पूर्वप्राप्त एव गुरुः नत्वन्योपि ग्राह्य इति। अन्योऽपि ग्राह्य इति पक्षे च नियामकाभावाद्यः कश्चिदेवेति ॥ सिद्धान्तस्तु ॥ गुरुपरिग्रहो हि न केवलं किञ्चिच्छुभलाभार्यं किंतु

यावदपेक्षितस्वयोग्यशुभलाभार्थं। तस्य यदि पूर्वगृहीतो न समर्थः तर्हि स्वापेक्षितालाभप्रसंगेन समग्रानुग्रहार्थत्वरूपकारणसत्त्वादन्योपि गुरुः स्वीकार्यः। सोपि न यादृशतादृशः किंतु स्वस्मादनपकृष्टः समग्रानुग्रहकर्तैव। स च समश्चेत् पूर्वनुज्ञया स्वीकार्यो न वेति विकल्पः समफलयोर्ध्यानयोरिव न तु स्वीकार्य एवेति नियमः। उत्तमश्चेत्पूर्वानुज्ञां विनैव स्वीकार्यः स्यात्। सर्वस्योक्तार्थस्य "पूर्वस्मादुत्तमो लब्ध" इति (बृहत्तन्त्र) स्मृत्या "समग्रगनुग्रहं कश्चित्" इति (महासंहिता) स्मृत्या च सिध्दत्वात् "ब्रह्मोपास्व" इति (पौष्यायाण) श्रुतौ पूर्वगुरुणैव स्वसमोत्तमस्वीकारायातिदिश्यमानत्वाच्च। न च दोषवचनविरोधः। तस्याधमस्वीकारविषयकत्वेन व्यर्थस्वीकारविषयकत्वेन पूर्वानुज्ञाभावविषयकत्वेन सावकाशत्वदिति। फलं तु इतरेत्वित्यत्रोक्तार्थस्य सर्वज्ञगुरूक्तप्रकारेण गुणादिध्यानं कार्यमित्यस्य समर्थनम्॥ २८॥

**॥ ॐ विद्यैव तु निर्धारणात् ॐ ॥ २९ ॥**

॥ ॐ दर्शनाच्च ॐ ॥

यस्योपासनस्य गुरुप्रदानरुपेतिकर्तव्यताफलभेदाधिकारिध्येयादिकं तस्य लघुपायकर्महेतुतावाक्येन मुक्तिहेतुत्वानिर्णयात् सर्वं प्रागुक्तं अभित्तिचित्रायितमिति शङ्कनात्सङ्गति। अत्र प्रकृतं श्रवणाद्युपासनं न कार्यमुत कार्यमिति चिन्ता। तदर्थं तस्य ज्ञानद्वारा मुक्तिहेतुनिर्णयो न सम्भवत्यथ सम्भवतीति। तदर्थं कर्महेतुत्ववाक्यानां "भाक्तं वे" त्यत्र (ब्र.सू. ३-१-७) परंप-

रया मुक्तिहेतुत्वादिरूपभाक्तत्ववर्णनं अयुक्तमुत युक्तमिति चि-न्ता। तदर्थं कर्मणैवेति तृतीयया तस्य साक्षान्मुक्तिहेतुत्वबोध-नस्यापवादकं नास्त्त्युतास्तीति। तथा ज्ञानद्वारा मुक्तिहेतुत्व-निर्णयपक्षे किं परोक्षज्ञानद्वारमात्रेण उत अपरोक्षज्ञानद्वारमात्रे-णापीति ॥ पूर्वपक्षस्तु ॥ "कर्मणैव हि संसिध्दिमास्थिता जन-कादय" इत्यादौ (भ.गी-३-२०) अवधारणस्य वक्ष्यमाणदिशा सावकाशत्वेऽपि तृतीया विभक्तया कर्मणः संसिध्दिशब्दितमु-क्तिं प्रति साक्षाध्देतुत्वावगमस्यापवादकस्य प्रमाणस्य कस्यचि-दभावात् "तरति शोकमात्मविदि" त्यादेः ज्ञानस्य मुक्तिहेतुता-मात्रप्रापकतया कर्मणो मुक्तिहेतुत्वानपवादकत्वात्। एवं च नि-रपवादकसाक्षान्मुक्तिहेतुबोधकवाक्यबलेन कर्मणोपि साक्षान्मु-क्तिहेतुत्वावगमेन "भाक्तं वाऽनात्मवित्वादि" ति (ब्र.सू. ३-१-७) तृतीयाद्यपादे कर्मणो मुक्तिहेतुत्वं गौणमिति वर्णनस्यायुक्त-त्वात् ज्ञानद्वारा श्रवणाद्युपासनमेव मुक्तिहेतुरिति निर्णयासम्भ-वात् लघुपाये सति गुरूपायस्य निश्शंकमनुष्ठानायोगाच्च न का-र्यमुपासनमिति। मास्तु वा ज्ञानद्वारोपासनं मुक्तिहेतुः तथापि "तमेवं विद्वानि" ति श्रुत्या (पुरुषसूक्त) अपरोक्षस्यैव मुक्तिहे-तुत्वावगमात् तस्य च श्रवणादिनैव सिध्दे ध्यानं न सर्वथा का-र्यमेवेति ॥ सिद्धान्तस्तु ॥ "नान्यः पन्था" इति सावधारणहे-तुत्ववचनस्य कर्मवचनादपि बलवत्त्वेन तेन साक्षात्कर्महेतुत्व-स्यापोदिततया कर्मणैवेत्यादेरपि परंपरया कथञ्चिन्मुक्तिहेतुत्व-स्य प्रागुक्तरीत्या वर्णनीयत्वात् ज्ञानद्वारा मुक्तिहेतुत्वस्योपासने

निर्णयसम्भवात् कार्यमेवोपासनम्। द्वारभूतं ज्ञानमपि न परोक्षमात्रं किंतु "दृष्ट्वैव तं मुच्यते" इत्यादि (कौशिक) श्रुतिबलेन विद्वानिति श्रुतेरपि अपरोक्षपरत्वादपरोक्षज्ञानमपीति श्रवणादित्रितयमपि कार्यमेवेति। स्मृतिरपि सावधारणेत्येतदग्रे निरसिष्यते। फलं तु प्रागुक्तसमर्थनम् ॥ २९ ॥

**॥ ॐ श्रुत्यादिबलीयस्त्वाच्च न बाधः ॐ ॥ ३० ॥**

यदि श्रुतेः सावधारणत्वेन बलत्त्वं तर्हि स्मृतेरपि तथात्वात् आप्तवाक्यत्वाच्च बलवत्त्वमिति शङ्कनात्सङ्गतिः। अत्र ज्ञानफलत्वेन पूर्वत्रप्रकृतो मोक्षः किं कर्मसाध्योऽथ ज्ञानसाध्य इति चिन्ता। तदर्थं "कर्मणैवे" ति स्मृतिः "नान्यः पन्था" इति श्रुतितोऽपि प्रबला उतनेति। तदर्थं कर्मणैवेत्यवधारणं निरवकाशमुत सावकाशमिति। तदर्थं सावकाशकल्पकं नास्त्युतास्तीति ॥ पूर्वपक्षस्तु ॥ कर्मसाध्यो मोक्षः कर्मणैवेति स्मृतेः। न च सावधारणश्रुतिबाधिता सती स्मृतिः दुर्बलेति वाच्यं। स्मृतेरपि सावधारणात्वात्। न च तदयोगव्यवच्छेदकतया सावकाशं कल्पकाभावात्। न च श्रुतिविरोधे दौर्बल्यं स्मृतेः श्रुतेरेव च प्राबल्यमिति "विरोधेत्वनपेक्षंस्यादि"ति पूर्वतन्त्रे सिध्दमितिवाच्यम्। स्मृतेः श्रुतिमूलत्वेन प्रामाण्यपक्ष एवहि तत्। कर्मणैवेति स्मृतेश्च भगवद्वाक्यत्वेनैव प्रामाण्योपगमेनाप्तवाक्यतया सावधारणतया च प्राबल्येन विद्याश्रुतेर्बाधादिति ॥ सिद्धान्तस्तु ॥ ज्ञानसाध्य एव मोक्षः न कर्मसाध्यः। ज्ञानसाध्यत्वे बलवच्छ्रुतिलिंगोपपत्तिस्मृतीनां भावात् निरवकाशावधारणयु-

क्तत्वेन श्रुतेर्बलवत्त्वात्। तथा बहुकर्मकृतोपींद्रस्य दुःखसंभिन्न-सुखरूपमोक्षार्थं तत्त्वज्ञानप्रार्थनलिङ्गस्य "इन्द्रोऽश्वमेधानि" ति श्रुतिप्रसिध्दस्य बलत्वात्। तथापि उत्पत्तिनाशवत्फल्तवेनावधृतकर्मणा नित्यपुमर्थो न भवतीत्युपत्तेश्च। "नास्त्यकृतः कृतेने" ति (मुं. १-२-१२) श्रुतिसिध्दतया निर्दोषतया च प्रबलत्वात्। "कर्मणा बध्यते" इति स्मृतेश्च भगवद्वाक्यतया युक्तिमत्तया च बलवत्त्वात्। एवं बलवतां मोक्षस्य ज्ञानसाध्यत्वनिरणायकानां अनेकसाधकानां भावादेव कर्मणैवेत्यवधारणस्य कर्मणा संसिध्दिमास्थिता एवेत्ययोगव्यवच्छेदकतया सावकाशत्वात् स्मृतेः न कर्मसाध्यत्वापादेन प्रामाण्यमिति। फलं तूपासनाकर्तव्यत्वसमर्थनम् ॥ ३० ॥

**॥ ॐ अनुबन्धादिभ्यः ॐ ॥ ३१ ॥**

"दर्शनाच्चे" ति (ब्र.सू. ३-३-४९) पूर्वत्र दर्शनस्य मुक्तिहेतुतया पूर्वनये निर्णीतत्वेन प्रकृतत्वात् तस्य भक्तयादिसाध्यत्वमत्रोच्यत इति सङ्गतिः। प्रकृतं दर्शनं किं भक्त्यादिना विना प्रदानोपेतश्रवणादिमात्रात् भवति उत नेति ॥ पूर्वपक्षस्तु ॥ भक्तयादिना विना प्रदानयुक्तश्रवणादिमात्रादेव दर्शनं भविष्यति। "सम्यग्लक्षणसम्पन्नः" इत्यादि (नारायण तंत्र) स्मृत्या गुरुप्रसादासाध्यस्य कस्याप्यभावात्। न चोपासनमेव भक्तयादिहीनस्य नेति युक्तम्। द्वेषेणापि तत्संभवात्। न च द्वेषयुतोपासनं न फलपर्यवसायीति युक्तम्। "द्वेषाच्चैद्यादयो नृपा" इति सप्तमस्कन्धे द्वेषेण ध्यायतामपि मुक्तिस्मरणादिति ॥ सिद्धान्तस्तु ॥

दर्शन न भक्त्यादिहीनात्प्रदानयुतोपासनाद्भवति। किंतु भक्त्याद्युपेतादेव। भक्त्यादिना विना भगवतोप्युपासनाय पुमर्थाहेतुत्वस्य प्रत्युतानर्थहेतुत्वेन "द्वेषाद्यन्मुक्तिकथनं श्रुतिवाक्यविरोधि तत्" इत्युपक्रम्यानुव्याख्यानोक्तानेकमानसिध्दित्वेन फलपर्यवसाय्युपासनस्य तु गुरुप्रसादस्य च भक्त्यादिनैव सिध्देरित्यस्य "तथाप्यनादिसंसिध्दभक्त्यादिगुणपूगतः। लभेद्गुरुप्रसादमि" त्यादि (नारायणतन्त्र) सिध्दत्वात्। "द्वेषाच्चैद्यादय" इत्यादेस्तु स्वाभाविकभक्तविषयतयोपपत्तेरिति ॥ फलं तु भक्त्यर्थकपूर्वपादीयमाहात्म्योक्तिसाफल्यसमर्थनम् ॥ ३१ ॥

**॥ ॐ प्रज्ञान्तरपृथक्त्ववद्दृष्टिश्च तदुक्तम् ॐ ॥ ३२ ॥**

यद्दर्शने भक्त्यादिकमावश्यकमित्युक्तं तस्मिन्दर्शने तारतम्यमत्र निरूप्यते इति सङ्गतिः। प्रकृतं मुक्तिहेतुभगवद्दर्शनं किमेकप्रकारमुतानेकप्रकारमिति चिन्ता। तदर्थं "दृष्ट्वैव तं मुच्यते " (कौशिक श्रुति) "भक्त्या मामभिजानाति" (भ.गीता. १८-५५) इत्यादिवचनं सर्वेषामेकरूपज्ञानस्त्युतास्तीति ॥ पर्वपक्षस्तु ॥ सर्वेषां मुक्तिहेतुज्ञानं एक रूपमेव "दृष्ट्वैव तं" इति श्रुतौ सर्वेषामविशेषितज्ञानेन मोक्षश्रवणात्। "भक्त्या मामभिजानाति वान्यश्चास्मि तत्त्वतः। ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरं" इति सर्वेषां भक्त्यादिना पूर्णज्ञानोत्पत्तेः। संपूर्णज्ञानेनैव मोक्षस्य गीतायां स्मरणात्। न च श्रुत्यादिकं विशेषपरं कल्पकाभावात्। न च ज्ञानहेतुपासनतारतम्यमेव कल्पकं। अनेकविधसाधनमुक्तानामपि मुक्तानां कार्यैक्यमपि साध्यसाम्यो-

पपत्त्या तस्याप्रयोजकत्वात्। ज्ञानस्य न्यूनाधिकरूपविशेषव-त्वे “भक्तये” ति स्मतौ संपूर्णज्ञानेनैव मुक्तयुक्तेः तध्दीनानां मु-क्तयभावापातेन “अनियमस्सर्वेषामि” त्युक्तभङ्गप्रसंगाच्चेति ॥ सिद्धान्तस्तु ॥ अनेकरूपमेवाधिकारिणां भगवद्दर्शनं। तत्साध-नोपासनस्य विचित्रतया तज्जन्यज्ञानेपि वैचित्र्यस्यावश्यकत्वात् साधनानुसारित्वात् फलस्य। न च तदन्यथोपपत्त्याऽप्रयोज-कम्।“अंतर्दृष्टयो बहिर्दृष्टय” इत्यादि (कमठ) श्रुतौ ज्ञानवैचि-त्र्यस्य प्रमितत्वेन सर्वेषां एकरूपस्य बाधिततया तेनोपासनवै-चित्र्यस्यान्यथोपपत्तेः। कादाचित्ककर्षकदृष्टान्तमात्रेण कल्प-यितुमनुचितत्वात्। न च सर्वेषां मुक्तयभावापातदोषः। “दृष्टैव ह्यवतारणा” मिति (अध्यात्म) स्मृत्या तरतमभावपन्नज्ञानेनैव अधिकारिणां मोक्षावगमेन “भक्तये” ति स्मृतेः सामान्यतः स-र्वविषयकज्ञानस्य मुक्तिहेतुपरत्वेन वा हिरण्यगर्भरूपाधिकारि-विशेषपरत्वेन वा उपपत्तेरिति। फलं तु यावदित्यत्रोक्तमोक्ष ता-रतम्यसर्मथनम् ॥ ३२ ॥

**॥ ॐ न सामान्यादप्युपलब्धेर्मृत्युवन्नहि लोकापत्तिः ॐ ॥ ३३ ॥**

यद्भगवदर्शने वैचित्र्यं तदर्शनं बिम्बविषयमेव मुक्तिहेतुरिति निरूपणात्सङ्गतिः। अत्र प्रकृतं भगवदर्शनं किं यत्किंचिद्रूपवि-षयं मुक्तिहतुरुतबिम्बरूपविषयमिति चिन्ता। तदर्थं रूपविषय-कस्यैव मुक्तिहेतुत्वे न स्थानतोपीत्यत्र निर्णीतभगवद्रूपाणां सा-म्यभंगः प्रसज्यतेऽथ नेति। तथा यत्किंचिद्रूपद्रूपदशेः मुक्तिहेतु-

त्वे वैफल्यं प्रसज्यते नवेति ॥ पर्वपक्षस्तु ॥ कस्याचिद्रूपस्य मोक्षदानशक्तिरन्यस्य नेत्यङ्गीकारे "न स्थानतोपि परस्योभयलिंगं सर्वत्र ही" त्युक्त (ब्र.सू. ३-२-११) सर्वरूपसाम्यस्य भंगापत्त्या यत्किंचिद्रूपज्ञानमपि मुक्तिहेतुरेव। किं च सामान्यदृशेर्मुक्तिहेतुत्वे तद्दर्शनस्य वैफल्यप्रसंगान्न च तद्युक्तम्। अतोमुक्तिरेव तत्फलमिति सामान्यदृशिरपि मुक्तिहेतुरेव। अपि च यदि किञ्चिद्रूपज्ञानं मुक्तिहेतुरन्यन्नेति विकल्पः तर्हि विंबज्ञानमपि किञ्चिन्मुक्तिहेतुः किञ्चिन्नेत्यनियम इत्युक्तभङ्गप्रसङ्गः इति ॥ सिद्धान्तस्तु ॥ यथा मतीनां मृतित्वाविशेषेपि मृतिविशेषानन्तरमेव मुक्तिः एवं भगवद्रूपाणां समत्वेऽपि भगवत्संकल्पानुसारेण बिम्बरूपविशेषज्ञानमेव मुक्तिहेतुः न यत्किंचिद्रूपज्ञानम्। समोपि भगवान् स्वबिम्बदर्शन एवैनं मोचयतीति श्रुतेः। न चैवं सामान्यदृशेर्वैफल्यम्। "सामान्यदर्शनाल्लोकाः" इति (नारायणतन्त्र) स्मृत्या दर्शने विकल्पवत् बिम्बदर्शने तदनापत्तेरिति। फलं तु बिंबोपासननैयत्यसमर्थनम् ॥ ३३ ॥

**॥ ॐ परेण च शब्दस्य ताद्विध्यंभूयस्त्वात्त्वनुबन्धः ॐ ॥ ३४ ॥**

दृशिहेतुत्वेन प्रागुक्तभक्तेरत्र स्वातन्त्र्यनिरासात्सङ्गतिः। प्रकृतदर्शनं किं भक्तिसामर्थ्येन भवति उत ईश्वरशक्त्येति चिन्ता। तदर्थं "भक्तिरेवैनं दर्शयती" ति (माठर) श्रुतिः किं भक्तेः स्वातन्त्र्यपरा अथ कर्तुरीश्वरस्य दृशिदाने करणत्वपरेति। तदर्थं भक्तेः करणत्वपरत्वे कल्पं नास्ति भक्तिरेवेति विशिष्योक्तिश्च युक्तोत विपरीतमिति ॥ पूर्वपक्षस्तु ॥ "भक्तिरेवैनं दर्शयती" ति

भक्तेः कर्तृत्वश्रवणस्य करणत्वपरत्वकल्पने कल्पकाभावात् साधनान्तरेषु सत्सु विशङ्ख्य भक्तेरेवात्रोक्तेः बीजाभावेनायुक्तत्वाच्च भक्तिरेवेश्वरप्रसादमनपेक्ष्य स्वशक्तयैव भगवदापरोक्ष्यं ददातीति ॥ सिद्धान्तस्तु ॥ भक्तेरेव दृषिकर्तृत्वे "एतैरुपायैर्यतते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्मधाम (अथ. ६-४) इत्यथर्वणश्रुतौ एतैः प्रवचनाद्युपायैः यो दर्शनार्थं यतते तस्यार्थे प्रसन्नः परमात्मा ब्रह्मधाम वायुं विशति तस्याविर्भवति इति भक्त्याद्युपायैः प्रसन्नेश्वरस्यैव स्वापरोक्षदातृत्वग्रहणेन विरोधापत्त्या "भक्तिरेवैन" मिति श्रुतेः भक्तेः कर्तृपरत्वायोगेन करणपरत्वात् साधनेषु भक्तेः प्राधान्येन भक्तिरेवेति विशिष्य भक्तेरुतक्तयुपपत्तेः । भक्तयादिसर्वशब्दानां प्रथमेऽध्याये भगवति समन्वस्योक्तत्वेन प्रकृतिनयन्यायेन स्त्रीलिङ्गभक्तिशब्दस्यापि विष्णौ मुख्यतया श्रुतेर्विष्णुपरतयोपपत्तेः । "भक्तिस्थः परमो विष्णुरि" त्यादि (मायावैक्षव) स्मृतिबलात्, अनादिभक्तिप्रसन्नेश्वरसामर्थ्येन तदपरोक्षज्ञानमिति । फलं तु "तदव्यक्तमाहही" त्युक्त (ब्र.सू. ३-२-२३)अव्यक्तत्वसमर्थनम् ॥ ३४ ॥

**॥ ॐ एक आत्मनः शरीरे भावात् ॐ ॥ ३५ ॥**

अनादिभक्तेर्दृष्टिकारणत्वोक्तिरयुक्ता । "स्थानविशेषादि" त्यत्र (ब्र.सू. ३-२-३५) भाष्याद्युक्तिदिशा अनादिभक्तयादिसम्पत्तिरूपयोग्यतासापेक्षत्वस्यैवायोगादिति भावेन शङ्कनात्सङ्गतिः । अत्र प्रकृतोपासनादौ अनादियोग्यतापेक्षा नास्त्युतारेतीति चिन्ता । तदर्थं योग्यतायाः अनादित्वं न

सम्भवत्युत सम्भवतीति। तदर्थम् अर्जुनाद्यंशानां किं स्वरूपेणोत्पत्तिरस्त्युत नेति। तदर्थं अंशांशिनोर्भेद उताभेद इति। तदर्थमभेदसाधकं नास्ति बाधकं चास्ति अथ विपरीतमिति॥ पूर्वपक्षस्तु॥ अंशांशिनोरभेदे साधकप्रमाणाभावात् प्रत्युतांशांशयिनोश्चैत्रमैत्रयोरिव ज्ञानसुखदुःखादिभेदोपलंभस्य अभावप्रसङ्गरूपबाधकभावाच्च भेदावश्यंभावेन अंशिन इन्द्रादेरनादित्वेऽपि अर्जुनाद्यंशस्य स्वरूपेणोत्पत्तिसम्भवेन इन्द्राद्यंशानामर्जुनादीनां सादित्वेन तध्दर्मयोग्यताया अपि तथात्वेन योग्यताया अनादित्वायोगात् नाऽनादियोग्यतापेक्षास्त्युपानादाविति॥ सिद्धान्तस्तु॥ अंशस्य स्वरूपोत्पत्तिपक्षे तच्छरीरार्जकपूर्वतनतदनुष्ठितकर्माभावात् मोक्षाभावप्रसंगेन कर्मनिमित्तशरीरायोगादनन्यगत्या "अंशिन्स्तु पृथग्जाता अंशास्तस्यैव कर्मणे" ति (परमसंहिता) स्मृत्या च अंशिकर्मार्जितशरीरे अर्जुनाद्यंशानामवस्थानमित्यवश्यं वाच्यत्वात्तस्य चांशांशिनो भेंजेऽयोगात् तत्कर्मार्जितशरीरे ऽवस्थानान्यथानुपपत्तिरूपेण अंशिगतप्रथानसाधनोपासनादिफलस्यांशेनानुसंधीयमानत्वेन तदन्यथानुपपत्तिरूपेणांशांशिनोरभेदसाधकमानेन अल्पज्ञानसुखाद्यननुसंधानस्य मानुपसम्पर्कप्राकृतान्नभोजनादिना भगवदिच्छयोपपत्त्या च बाधकाभावेन चांशांशिनोरभेदात् अनाद्यभिन्नांशस्य स्वरूपोत्पत्त्ययोगेन तस्याप्यनादित्वेन तध्दर्मभूतयोग्यताया अप्यनादित्वसम्भवात् अस्त्यनादि-

योग्यतापेक्षोपासनादौ इति। फलं तु योग्यताहीनानामपि उपासनप्रसंगेनाव्यवस्थापत्त्यभावः ॥ ३५ ॥

**॥ ॐ अङ्गावबध्दास्तु न शाखासु हि प्रतिवेदम् ॐ ॥ ३६ ॥**

॥ ॐ मन्त्रादिवद्वाऽविरोधः ॐ ॥

पूर्वत्र प्रकृतेंद्रादिदेवतानां तद्योग्यतानुसार्युपासनमत्रोच्यत इति सङ्गतिः। अत्र प्रकृत भगवदुपासनं केवलं कार्यमुत ब्रह्मङ्गदेवतोपासन युक्तमिति चिन्ता। तदर्थं "तमेवेकं जानथ" (मुं. २-२-५) "पूजयेन्नान्यदेवता" इत्यादौ अन्योपास्ति निषेधः किं सर्वात्मना उत प्राधन्येनेत्यत्र ज्ञापकं नास्त्युतास्तीति। तथान्य देवतोपासनोपि किमेकत्र प्रतीतागुणाः सर्वैषां ध्येयाः उत तत्तद्योग्या एवेति ॥ पूर्वपक्षस्तु ॥ "तमेवैकं जानथेत्यादिश्रुतिस्मृतिषु अन्यदेवतोपासनपूजादेः निषिध्दत्वास्वातंत्र्येणैव पूजादेर्निषेध इत्यत्र ज्ञापकाभावात् केवलमेव भगवदुपासनं कार्यम्। देवतोपास्तेः करणेपि एकत्रप्रतीतगुणयुक्तत्वेनैव सर्वदेवतोपास्तिः कार्या। देवत्वादेः सर्वत्रोपास्यत्वदर्शनाद्बाधकाभावाच्चेति ॥ सिद्धान्तस्तु ॥ देवानां वेदेषु प्रतिपादनस्य "अध्यायनाय प्रयोजनाभावादि" ति (ब्र.सू. ३-३-१५) न्यायेनोपासनार्थत्वेन तदुपासनाभावे वेदेषु तदुक्तेर्वैयर्थ्येन तदुक्तयन्यथानुपपत्तिरूपसाधकसद्भावात् तत एव "तमेवे" त्यादेः प्राधान्येनोपास्तिनिषेधपरत्वावश्यंभावेन तद्विरोधाभावादन्यदेवतोपास्तियुक्तत्वेनैव भगवदुपासनं कार्यम्। अन्यदेवतोपासनेपि "समत्वाद्वोत्तमत्वाद्वा" इत्यादि (ब्रह्मतर्क) स्मृत्या देवानां नीचोच्चभावापन्न-

तया उत्तमगुणा नाधमेषु ध्येयाः। किंतु तत्द्योग्या एव। यथा भगवद्वाचकवाक्यानां न सर्वेषां सर्वत्रान्वयः किंतु योग्यानामेव तद्वत् अधमगुणास्तूत्तमेषुध्येयाः। यथाऽधमदेवताप्रतिपादक-मन्त्राणा –मुत्तमप्रतिपादकत्वेन ध्यानं तद्वत्। तथोपासनमपि फलविशेषार्थं उत्तमाधिकारिभिरेव कार्यं न सर्वैः। "उपासनां-गदेवाना" मित्यादि (बृहतन्त्र)स्मृतेरिति। फलं तु देवताप्रतिपा-दकवेदभागसार्थक्यसमर्थनम्॥३६॥

**॥ ॐ भूम्नः क्रतुवज्ज्यायस्त्वं तथा च दर्शयति ॐ ॥३७॥**

पूर्वत्र देवतोपासने गुणोपसंहृतिफलस्य सर्वाप्राप्यत्वात् सा न सर्वैः कार्येत्युक्तौ तर्हि भूमगुणोपास्तिरपि न सर्वैः कार्या। निरतिशयभूमत्वस्य केनाप्यप्राप्यत्वादिति शङ्कोदयात्सङ्गतिः। अत्र "यो वै भूमे" त्यादौ (छां. ७-२३-१) श्रुतो भूमगुणः किं न सर्वोपास्यः अथ सर्वोपास्यः इति चिन्ता। तदर्थं तदुपासनमन - र्थकमुतार्थवदिति॥ पूर्वपक्षस्तु॥ यथा सम्भृत्यादिगुणोपा-स्तिफलस्य सर्वाप्राप्यत्वान्न संभृत्यादिकं सर्वोपास्यम् तथा निर-तिशयपूर्णत्वरूपभूमत्वं कस्याप्ययोग्यतया प्राप्तुमिष्टं नेति व्यर्थ-त्वाद्भूमत्वं न सर्वोपास्यम्। तस्य सर्वोपास्यज्ञानानन्दादिविशे-षणत्वेऽपि प्रियशिरस्त्वादिकमिव फलानुपयोगेनानर्थत्वान्न स-र्वैषास्यं भूमत्वमिति॥ सिद्धान्तस्तु॥ "भूमैव देवः परमोह्यु-पास्यः" इति (गौपवन) श्रुत्या ज्ञानान्दादिगुणेषु सर्वत्र भूमत्व-स्य सहभावेनोपासने सत्येव इष्टफलसिध्दिः अन्यथा तु नेत्य-वगमेन ज्ञानं भूमा आनन्दश्च भूमेत्येवं रूपेण भूमगुणोपास्ते-

रभिमतफलप्राप्तिहेतुत्वेनार्थवत्तवात्सर्वैरुपास्यं भूमत्वं यथा दीक्षाप्रायणीयोदनीयसवनत्रयावभृतात्मकः क्रतुः सर्वयागेष्वनुवर्तन एव साफल्यात् अन्यथा वैफल्याज्जयास्त्वेन सर्वैः कर्तव्यस्तद्वदिति। फलं तु कार्यख्यानादित्यत्रा लौकिकगुणोपासनसमर्थनम् ॥ ३७ ॥

**॥ ॐ नाना शब्दादिभेदात् ॐ ॥ ३८ ॥**

पूर्वं सामान्येनोक्तस्यात्र विशेषचिन्तनाद्वा भूमत्वस्य सर्वोपास्यत्वे "यावदि" त्यत्रोक्त (ब्र.सू. ३-३-३३)तारतम्यभंगापत्तिरिति शङ्कनाद्वा सङ्गतिः। अत्र प्रकृतं भूमत्वं अधिकारिणामेकरूपेण प्रतीयतेऽथनानारूपेणेति चिन्ता। तदर्थं नानारूपेण प्रतीतौ तस्याः प्रतीतेः भ्रान्तित्वमापद्यते उत नेति। तदर्थं भूमत्वमेकरूपमेव न नानारूपमपि सम्भवतीति ॥ पूर्वपक्षस्तु ॥ निरतिशयितपूर्णत्वरूपभूमत्वे तारतम्यस्या संभावितत्तयानुपपन्नत्वेन एकरूपत्वात्। एकरूपस्यापि श्रवणमननापरोक्षज्ञानेषु तारतम्येन भाने श्रवणादेर्मिथ्याज्ञानत्वप्रसंगादेकरूपेण प्रतीयते इत्येव युक्तमिति ॥ सिद्धान्तस्तु ॥ अतीतवत्सरमासपक्षदिनघटिकाद्यनन्त्ये तारतम्यवदिहापि भूमत्वे तारतम्यसम्भवेन भगवद्गुणेषु भगवति च तावदानन्त्यानां सत्त्वेन तत्तधिकार्यनुसारेण तावत्तावद्भूमत्वस्य श्रवणमननापरोक्षज्ञानेषु प्रतीतौ तावन्मात्रमेवेत्यप्रतीत्या भ्रान्तित्वानापत्तेः नानारूपमेव प्रतीयते इति नानारूपमेवाधिकारिभिः स्वस्वप्राप्यफलभागुरोधेनोपास्यमिति। फलं तु

प्रागुक्तारतम्यसमर्थनम् ॥ ३८ ॥

**॥ ॐ विकल्पो विशिष्टफलत्वात् ॐ ॥ ३९ ॥**

पूर्वत्र गुणोपास्तौ विशेषः उक्तोऽत्र तु रूपोपास्तौ स उच्यते इति सङ्गतिः । अत्र भगवदुपासनं किं बिंबातिरिक्तरूपविषयं न कार्यमेवेति नियम उत कार्यं न वेति विकल्प इति चिन्ता । तदर्थं तदुपासनस्य फलं नास्त्युतास्तीति । तदर्थं तदुपासनस्य मोक्षः फलमन्यदपीति ॥ पूर्वपक्षस्तु ॥ मुमुक्षुभिः क्रियमाणोपासनस्य अन्यफलकत्वायोगेन मोक्षफलस्य "न सामान्यादप्युपलब्धेरि" त्यत्रोक्तदिशा (ब्र.सू. ३-३-५३) बिंबोपास्तिसाध्यत्वे मोक्षफलकत्वस्याप्ययोगेन च निष्फलत्वात् प्रत्युत मोक्षओपयोगिबिंबोपास्तिविघ्नकरत्वाच्च बिंबातिरिक्तनृसिंहाद्युपासनं न कार्यमेवेति ॥ सिद्धान्तस्तु ॥ उपसकानां मोक्षकामित्वेऽपि मोक्षहेतु बिंबोपासनोपयोगितया कार्यं नृसिंहाद्यपासनम् । तीव्रया स्वबिंबोपासनयैव दुरितं क्षपयितुं समर्थेन तु न कार्यमिति षोडशिग्रहणाग्रहणवत् व्यवस्थितविकल्पः । "मुक्तयर्थम् आत्मयोग्यं ही"त्यादेः (ब्रह्मतर्क) स्मृतेरिति । फलं तु नृसिंहादिप्रतिपादकग्रंथसाफल्यसमर्थनम् ॥ ३९ ॥

**॥ ॐ काम्यास्तु यथाकामं समुच्चीयेरन्नवा पूर्वहेत्वभावात् ॐ ॥ ४० ॥**

मोक्षोपयोगिफलत्वेन नृसिंहाद्युपासनस्य कार्यत्वे तदुपयोगित्वात् काम्यरूपाद्युपासनमपि कार्यं स्यादिति शङ्कनाद्वा नृसिंहाद्युपास्तेरिव काम्यरूपाद्युपास्तेरपि वै-

कल्पिकत्वसाधनाद्वा सङ्गतिः। अत्र कामसाधनभगवद्रू-पगुणविषयकमप्युपासनमावश्यकमुत विकल्प इति चिन्ता। तदर्थं तदावश्यकत्वे मोक्षोपयोगादिहेतुरस्त्युत नेति॥ पूर्वपक्षस्तु॥ अर्थादिना विना ज्ञानासिध्दया अर्थाद्यार्जकं यद्भगवद्रूपं तद्गुणादिकं तदुपासनस्य जीवादिद्वारा ज्ञानोपयोगित्वात् अर्थकामनावश्यंभावात् आवश्यकमेव काम्यभगवद्रू - पाद्युपासनमिति॥ सिद्धान्तस्तु॥ अर्थगृहारामक्षेत्रविधुराणामपि ज्ञानसंपादनदर्शनेनावश्यं अर्थादिनैव ज्ञानमिति नियमाभावेन तस्य मोक्षहेतूपासनानुपयोगात् अधिकारिणां मुमुक्षुत्वेनार्थादिकामनाभावच्च काम्योपासनं मुमुक्षुभिर्न कार्यं अन्यैः कार्यमित्यधिकारिभेदेन वा मुमुक्षुरप्यर्थाद्यर्थं न कार्यं भगवत्प्रीत्यर्थं कार्यमिति फलभेदेन वा व्यवस्थितविकल्प एव नत्वावशयकमिति नियमः "यस्य यस्यही" ति (बृहत्तन्त्र) स्मृतेरिति। फलं तु वैराग्यपादोक्तवैराग्यफलकगर्भयातनादिनिरूपणसमर्थनम्॥४०॥

**॥ॐ अंगेषु यथाश्रयभावः ॐ॥४१॥**

॥ॐ शिष्टेश्च ॐ॥ ॥ॐ समाहारात् ॐ॥

॥ॐ गुणसाधारण्यश्रुतेश्च ॐ॥

पूर्वत्र काम्योपास्तेरधिकारिसम्भवेन कार्यत्वेपीहांगदेवतोपास्तेस्तदभावेनाकार्यत्व -मिति शङ्कनात्सङ्गतिः। अत्र भगवदंगाश्रितत्वेन ब्रह्मादिदेवताविषयकमुपासनं न कार्यमुत कार्यमिति चिन्ता। तदर्थं श्रुतौ देवतानामंगाश्रितत्वकथनं तथोपास-

नविधानं गुणसाधारणश्रवणं च तथोपासनकार्यत्वापादनक्षमं न भवत्युत भवतीति । तदर्थं तत्किमुपासनं निरधिकारिकमुत साधिकारिकमिति । तदर्थमधिकारिकल्पकं नास्त्युतास्तीति ॥ पूर्वपक्षस्तु ॥ तथोपासनं न कार्यं हेत्वभावात् । न च "ब्रह्मा शिरसि ललाटे रुद्रः" इत्यादि श्रुतौ देवानामंगाश्रितत्वेनोक्तेः "आध्यायनाय प्रयोजनाभावादि" ति(ब्र.सू. ३-३-१५) न्यायेनोपासनार्थत्वात्तदुक्तयन्यथानुपपत्तिः । "यस्मिन्यस्मिन्यो हि चांगो निविष्टः परस्य चिन्त्यः स तथा तथैवे" ति (पौत्रायण) श्रुतौ विधानं "साधारण्यात्सर्वगुणः परस्य समाहार्यास्तत्वदृशो मुमुक्षो" रिति (माण्डव्यश्रुतिः) ज्ञानानन्दादिगुणतौल्येन सूर्याद्याश्रय चक्षुस्त्वादीशगुणानामुपास्यत्वश्रवणं च तथोपासनाकार्यत्वे हेतुरिति वाच्यम् । तथोपासनस्य सर्वाधिकारिकत्वे आनंदादय इत्युक्तचतुर्गुणोपास्तिनियमभंगात् नहि ब्रह्माश्रितशिरस्कत्वादिकं भूमत्वमिवानंदादिविशेषणं येन प्रागुक्तनियतिव्याघातकं स्यात् । न च देवाधिकारिकं तदुपासनं कल्पकाभावात् । नहि राजा राजसूयेन यजेतेत्यादौ राजादिपदमिव ब्रह्मा शिरसीत्यादौ देवा एते उपासीरन्निति वाक्यमस्ति । तादृश विशेषविध्यभावेपि अधिकारिविशेषकल्पने "चोदनाद्यविशेषादि" ति(ब्र.सू. ३-३-१) सर्ववेदान्तनययोक्त- न्यायविरोधः । अतः तथोपासनस्य निरधिकारिकत्वात् श्रुतौ तदुक्तयादिकं स्वयं व्यर्थं सत् न तथोपासनकार्यतापादनक्षममिति ॥ सिद्धान्तस्तु ॥ कार्यमेव तथोपासनं । न च हेत्वभावः श्रुतौ तदुक्तयन्यथानुपपत्त्यादेरनुष्ठा-

पकत्वात्। न च निरधिकारिकत्वदेषः। "अङ्गैः पराद्ये हि देवा विसृष्टा" इति (काषायण) श्रुतौ ब्रह्माश्रितशिरस्कत्वरुद्राश्रित-ललाटत्व सूर्याश्रितचक्षुष्ट्वादिगुणोपासनस्य परमस्थानप्राप्तिरूप फलश्रवणात्। तस्य च देवप्राप्यत्वेन फलपर्यालोचनया मधु-विद्यायामिव देवानामेवाधिकारित्वकल्पनोपपत्तेरिति। फलं तु तद्विद्यासार्थक्य-समर्थनम्॥ ४१॥

**॥ ॐ न वा तत्त्सहभावश्रुतेः ॐ ॥ ४२॥**

॥ ॐ दर्शनाच्च ॐ ॥

अत्र प्रागुक्तमेव विशेषहेतुनाक्षिप्य समर्थ्यत इति सङ्गतिः। अत्र ब्रह्माश्रितशिरस्कत्वादिभगवद्गुणोपासनं न कार्यमुत कार्य-मिति चिन्ता। तदर्थं तदुपासनस्य सर्वशाखास्वनुक्तिरकार्यत्वेन विनानुपपन्नोतान्यथोपपन्नेति। तदर्थमन्यथोपपत्तिकल्पकं ना-स्त्युतास्तीति॥ पूर्वपक्षस्तु॥ न कार्यमेव तथोपासनं सर्वशा-खास्वनुक्तत्वात्। अवश्यकार्यत्वे सर्वशाखा गतोपासनेन सह-भावप्रसङ्गात्। अत्र सर्वत्रानुक्तिः अकार्यत्वेन विनानुपपन्ना तदे-वगमयतीति॥ सिद्धान्तस्तु॥ सर्वथा कार्यत्वाभावे क्वचित्तदुक्ते वैयर्थप्रसङ्गात् "सत्यो ज्ञानः परमानन्दरूपः" इत्यादि (कमठ) श्रुत्या ज्ञानादिगुणचतुष्टया अधिकगुणानां देवोपास्यत्वकथनेन तथोपासनस्य देवमात्राधिकारिकत्वेन सर्वत्रानुक्तेः। सर्वैरकार्य-त्वेनान्यथोपपत्तेः कार्यमेवतथोपासनमिति। फलं तु प्रागुक्तप्र-मेयसमर्थनम्॥ ४२॥

॥ इति श्रीराघवेन्द्रयतिकृतायां न्यायमुक्तावल्यां

तृतीयाध्यायस्य तृतीयः पादः समाप्तः ॥

## ॥ अथ चतुर्थः पादः ॥

**॥ ॐ पुरुषार्थोऽतःशब्दादिति बादरायणः ॐ ॥ १ ॥**

॥ ॐ शेषत्वात्पुरुषार्थवादो यथा न्येष्विति जैमिनिः ॐ ॥

॥ ॐ आचारदर्शनात् ॐ ॥ ॥ ॐ तच्छ्रुतेः ॐ ॥

॥ ॐ समन्वारम्भणात् ॐ ॥ ॥ ॐ तद्वतो विधानात् ॐ ॥

॥ ॐ नियमाच्च ॐ ॥

॥ ॐ अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॐ ॥

॥ ॐ तुल्यं तु दर्शनम् ॐ ॥

पूर्वपादोक्तोपासनासाध्यज्ञानमाहात्म्यमत्रोच्यते इति पूर्वपादेनास्य सङ्गतिः । अत्र ज्ञानं किं मोक्षमात्रे हेतुरुत मोक्षेतरस्य स्वर्गादिपुरुषार्थहेतुरपीति चिन्ता । तदर्थं तत्र मानं नास्तयुतास्तीति ॥ पूर्वपक्षस्तु ॥ न ज्ञानं मोक्षेतरपुरुषार्थस्यापिहेतुः । मुमुक्षोस्त्रतेच्छाभावात् । सौभर्यादेरिवेच्छायाः भावेपि तध्देतुत्वे मानाभावात् । तध्देतुत्वपरश्रुत्यादेः कर्मणः तथात्वप्रतिपादकश्रुत्यादि -विरोधात् । "कर्मैव देहं दैविकं मानुषं वाप्यन्वारभेन्न परस्तत्र हेतु" रित्यादि(माठर) श्रुतौ कर्मण एव मोक्षेतरफलहेतुत्वस्य "यदेविद्ये" ति श्रुतौ ज्ञान्यनुष्ठिते कर्मजन्यफलेऽतिशायाधायकत्वेन ज्ञाने कर्मशेषत्वस्य च श्रवणात् । अत एव ज्ञानकर्मणोः स्वर्गादौ तुल्यकक्षतया हेतुत्वशंकानवकाशः । तथा "नैव दैवपद" मिति स्मृत्या ज्ञानस्यैव सर्वपुमर्थहेतुत्वे तदनुप-

पत्त्या च कर्मण एव हेतुत्वानुमानाच्च। एवमेव जैमिनिराचार्यै-रंगीकारच्च। न च ज्ञानिनामाचारो मुक्तवल्लीयान्यथोपपन्न इति शंक्यं "ज्ञानी च कर्माणि सदोदितानि कुर्यादि" ति (कमठ) श्रुतौ ज्ञानिनोपि कर्मविधानात्। विहितत्वस्य च लीलात्वायोगात्। "कुर्वन्नेह कर्माणी" ति (ई. २) उत्तरार्धे एवं कर्मकरणे त्वयि क-र्म न लिप्यते इतो अन्यथा अकरणे नरज्ञानिन्यपि त्वयि पापं कर्म न लिप्यते इति नास्तीति ज्ञानिनेपि कर्माकरणे प्रत्यवाय-श्रवणाच्च। ज्ञानयाचारस्य लीलात्वायोगादतः श्रुत्याचारविरु-ध्दत्वात् जैमिनिमतविरोधाच्च "यं यं लोकं मनसे" त्यादिकं (मुं. ३-१-१०) ज्ञानस्य सर्वपुमर्थहेतुत्वपरं वाक्यं स्वर्गहेतुकर्मशेषेपि धनादौ "स्वर्गं धनादेहतो वै गृहाच्च प्राप्स्यंती" त्यादौ प्राधा-न्योक्तिवत् कर्मशेषभूतज्ञानप्राधान्योक्तिपरं नेयम्। न तु साक्षा-द्ज्ञानस्य सर्वपुमर्थसाधनहेतुत्वपरं। न च कर्मणस्तद्धेतुत्वपर-श्रुत्यादिकं सर्वपुमर्थहेतुज्ञानशेषत्वपरम्। निरवकाशकल्पका-भावात्कर्मणः कृतावकृतौ च ज्ञानं मोक्षार्जनक्षममेवेति स्तुति-नये वक्ष्यमाणत्वने ज्ञानेऽतिशयकरत्वयोगेन तच्छेषत्वायोगा-च्चेति ॥ ॥ सिद्धान्तस्तु ॥ कर्मणो ज्ञानेऽतिशायाधायकत्वेन त-च्छेषत्वायोगेपि "ज्ञानादेव स्वर्गो ज्ञानादेवापवर्ग" इति (कौं-ठव्य) श्रुतौ ज्ञानादेव स्वर्गादिफलप्राप्तेः कर्मणो ज्ञानजन्यफ-लेऽतिशयाधायकत्वेन ज्ञानशेषत्वस्य च श्रवणात् "राजसूयजि-तान् लोकानश्वमेघाभिवर्धितान्। प्रप्नुहि त्वं महाभागे" ति भा-रतवाक्येन युधिष्ठरादीनां राजसूययागादिना फलाधिक्यदर्शन-

रूपलिंगाच्च ज्ञानस्यैव सर्वपुमर्थहेतुत्वस्य कर्मणः ज्ञानजन्यफलेऽतिशयाधायकत्वेन ज्ञानशेषत्वस्यावगमेन अस्य बादरायणमतत्वेन च कर्मणः तध्देतुत्वपरवाक्यादीनां तध्देतुज्ञानशेषपरत्वेन नेयतया तद्विरोधाभावात् "यं यं लोकमि" त्यादि वाक्यबलात् बादरायणसंमतत्वाच्च ज्ञानं मोक्षेतरसर्वपुमर्थहेतुर्भवत्येवेति। न चैवं जैमिनि बादरायणमतयोर्विरोधः देवमानुपरूपाधिकारिभेदेनाविरोधादिति। फलं तु ज्ञानादावतिशयेन प्रवृत्तिरिति ॥ १ ॥

**॥ ॐ असार्वत्रिकी ॐ ॥ २ ॥**

॥ ॐ विभागः शतवत् ॐ ॥ ॥ ॐ अध्ययनमात्रवतः ॐ ॥

पूर्वत्र ज्ञानात्सर्वपुमर्थाप्तौ न ज्ञानिनां सर्वेषां अधिकारः किंतु उत्तमानां तत्रापि अप्रतिबध्दानामित्युक्तम्। इह ज्ञाने सर्वेषामधिकारो नेत्युच्यते इति सङ्गतिः। सर्वपुमर्थहेतुत्वेन पूर्वत्र प्रकृते ज्ञाने सर्वेषामधिकारोऽस्त्युत नेति चिन्ता। तदर्थं पुरुषविभागो नांगीकार्योऽथांगीकारार्ह इति। तदर्थमर्थित्वादिकमेवाधिकारे तन्त्रमुतान्यदपीति। तदर्थमर्थित्वाद्यधिकारप्रयोजकं नास्त्युतास्तीति ॥ पूर्वपक्षस्तु ॥ "अर्थी समर्थोविद्वानधिक्रियते" इति न्यायसिध्दफलापेक्षित्वाद्यन्यस्य अधिकारप्रयोजकस्याभावात् तस्य च निर्दुःखसुखरूपमोक्षेऽर्थित्वत्यश्रवणादिसामर्थ्यस्य तदुपयुक्तवैदुष्यस्य च सम्भवेन सर्वेषु भावात् सर्वेषामर्थित्वरूपप्रयोजकसाम्येपि केषांचिदेवाधिकारो नान्येषामिति पुरुषविभागांगीकारस्य निर्बीजतया अनुचित-

तया केषाञ्चिदभावेऽन्येषामप्यभावापातेन ज्ञानस्य निरधिका-
रिकत्वप्रसङ्गात् अस्ति ज्ञाने सर्वेषामधिकार इति ॥ सिद्धान्त-
स्तु ॥ पठेद्वेदानथार्थानधीयीताथ विचार्य ब्रह्म विन्देत् (कौ-
षारव श्रुतिः) अवैष्णवस्य वेदेऽपि ह्यधिकारो न विद्यते (ब्रह्म-
तर्क) इत्यादिश्रुतिस्मृतिसिद्धस्यसाङ्गसफलयथाशक्तिकृत्स्नाध्य-
यनवत्वरूपप्रयोजकान्तरस्यापि सत्वेन अर्थित्वादिमात्रस्यात-
न्त्रता। न च मोक्षो हि देवाना मिति स्मृत्युक्तदिशा सर्वेषां दे-
वत्वसाम्येपि परापरब्रह्मद्वयाधिकशतस्यैव सोमाधिकारो नान्ये-
षामिति विभागवत् अर्थित्वादौ समानेप्युक्तरूपप्रयोजकवतामे-
वाधिकारो नान्येषामिति पुरुष विभागस्य युक्तत्वात् न सर्वे-
षां ज्ञानाधिकार इति। फलं तु कर्मापेक्षया ज्ञानेऽतिशयसमर्थ-
नम् ॥ २ ॥

**॥ ॐ नाविशेषात् ॐ ॥ ३ ॥**

पूर्वं केषाञ्चित् ज्ञानाधिकार इत्युक्तमत्र तु केषाञ्चित्सा-
ध्येऽपि सम्पूर्णाधिकारो न सर्वेषामिति समर्थनात्सङ्गतिः। प्र-
कृतो ज्ञानाधिकारः किं सर्वेषां देवादीनामेकप्रकारोऽथ ना-
नाप्रकार इति चिन्ता। तदर्थं "प्रज्ञान्तरपृथक्त्ववद्दृष्टेश्च" त्य-
त्रोक्त (ब्र.सू. ३-३-५२) दृष्टितारतम्यमधिकारनानात्वेन विना
अधिकारिशक्तिनाना-त्वेनाप्युपपद्यतेऽथ नेति ॥ पूर्वपक्षस्तु ॥
अधिकारिणामुच्चावचशक्त्यैव प्रागुक्तज्ञानतारतम्योपपत्तेः क-
ल्पकाभावान्न नानारूपोऽधिकार इति ॥ सिद्धान्तस्तु ॥ अ-
धिकारिणां शक्तेरुच्चावचत्वस्य अधिकारोच्चावचत्वनिमित्तत्वेन

तद्भावेन शक्तितारतम्यस्याप्यभावात्। उपजीव्यत्वादधिकार-तारतम्येनैव प्रागुक्तज्ञानतारतम्यस्याप्यभावात्। उपजीव्यत्वा-दधिकारतारतम्येनैव प्रागुक्तज्ञानतारतम्यस्य निर्वाह्यत्वेन तद-न्यथानुपपत्त्या "अथ पुमर्थसाधनानी"ति भाष्योक्त(कौण्डिण्य) श्रुत्याचाधिकारो नानाप्रकार इति देवोत्तमानामेव सम्पूर्णाधि-कारो नान्येषामिति। फलं तु ज्ञानातिशयसमर्थनम्॥ ३॥

**॥ॐ स्तुतयेऽनुमतिर्वा ॐ॥ ४॥**

॥ॐ कामकरेण चैके ॐ॥ ॥ॐ उपमर्दं च ॐ॥ ॥ॐ ऊर्ध्वरेतस्सु च शब्दे हि ॐ॥

॥ॐ परामर्शं जैमिनिरचोदना चापवदतिहि ॐ॥ ॥ॐ अनुष्ठेयं बादरायणः साम्यश्रुतेः ॐ॥ ॥ॐ विधिर्वा धारणवत् ॐ॥ ॥ॐ स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॐ॥ ॥ॐ भावशब्दाच्च ॐ॥

॥ॐ पारिप्लवार्था इति चेन्न विशेषितत्वात् ॐ॥

॥ॐ तथा चैकवाक्योपबन्धात् ॐ॥

॥ॐ अत एव चाग्नीन्धनाद्यनपेक्षा ॐ॥

॥ॐ सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॐ॥

॥ॐ शमदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदङ्गतया ते-षामवश्यानुष्ठेयत्वात् ॐ॥

॥ॐ सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॐ॥

॥ॐ अबाधाच्च ॐ॥ ॥ॐ अपि स्मर्यते ॐ॥

॥ ॐ शब्दश्चातोऽकामचारे ॐ ॥

॥ ॐ विहितत्वाच्चाश्रमकर्मापि ॐ ॥ ॥ ॐ सहकारित्वेन च ॐ ॥

एवं पूर्वत्राधिकारिभेदे सिद्धे अत्र त्रिविधाधिकारिभेदेन विरुद्धार्थकत्रिविधवाक्यानामविरोधो वर्ण्यत इति सङ्गतिः। अत्र प्रकृतज्ञानवतः किंसदाचारदुराचाराभ्यां विशेषो नास्त्युतास्तीति चिन्ता। तदर्थं "स ब्राह्मणः केन स्याद्येन स्यात्तेनेदृश एवे"ति (बृ. ५-५-१) वाक्यं किं ज्ञानिमात्रस्य यथेष्टाचारविधिपरमुत नियमेन सर्वसदाचारनुष्ठानादिपरमिति। तत्र ज्ञानिनः सत्प्रवृत्त्यादिना विशेषसत्त्वे ज्ञानस्य मुक्तिहेतुत्वनियमभङ्गादिरूपं ज्ञानकर्मसमुच्चयवादरूपं च बाधकमस्त्युत नेति चिन्ता। तदर्थं ज्ञानिनोऽसत्प्रवृत्तिः मोक्षस्वरूपप्रतिबन्धोत्त्पत्तौ हेतुः उतमोक्षगत सुखाधिक्यप्रतिबन्धोत्पत्तौ हेतुरिति। तदर्थं असत्प्रवृत्यादिना सुखाधिक्यप्रतिबन्धा -दिरूपविशेषसत्त्वे "यदि ह वा अप्येवं विन्निखिलं भक्षयतीतैवमेव स भवती" ति श्रुतौ ज्ञानिनः सर्वान्नभक्षणेऽपि अविशेषोक्तिरयुक्तोत युक्तेति॥ पूर्वपक्षस्तु॥ सदसत्प्रवृत्तिभ्यां नास्ति ज्ञानिनो विशेषः "स ब्राह्मण" इति श्रुतौ ज्ञानिमात्रं प्रति यथेष्टाचारस्य विधिलिङ्गं तस्याच्छब्देन विधानात् सदसत्प्रवृत्तिभ्यां ज्ञानिनो विशेषविधेरप्यभावे सर्वविध्यतिदूरत्वरूपे शलक्षणस्यापि ज्ञानिनि प्रसङ्गात्। न चेदं वाक्यं ज्ञानिमात्रस्य न यथेष्टाचारविधिपरं किन्तु ज्ञानिविशेषपरमेति युक्तम्। सामान्यवाक्यस्य विशेषपरत्व-

कल्पकाभावात्। एवं च न केवलं यथेष्टाचारे विध्यन्यथानुपपत्त्याऽविशेषो ज्ञानिनः कल्प्यते किन्तु "तेनेदृश एवे"ति स्वेच्छाचरणाविशेषश्रवणाच्च। ननु न ज्ञानिमात्रस्य स्वेच्छाचारविधिपरत्वस्य वाक्यस्योपपद्यते। "प्रातरुत्थायाथ सन्ध्यामुपासीते"त्यादि श्रुत्यनुरोधेन निषिद्धं कार्यमिति विध्यभावरूपया "ब्राह्मणो न हन्तव्य"इत्यादिनिषेधरूपया युक्तया च विध्यादिविधिबन्धवर्जिततया नियमेन सर्वसदाचारानुष्ठानपरत्वमस्य वाक्यस्य परमाप्तजैमिन्याचार्यैर्यद्वर्णितं तथा"यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः। आत्मन्येव च सन्तुष्टस्य कार्यं न विद्यते।"इति (भ.गीता ३-१७ ) स्मृत्या आर्मरतिः परमात्मदर्शननिमित्तसुखमाप्तः आत्मन्येव च सन्तुष्टः परमात्मनिमित्त - सन्तोषवत्त्वादेवहेतोः आत्मतृप्तः परमात्मप्रसादेन विषयेष्वलंबुद्धिमाप्तः यः तस्य कार्यं नास्तीत्यक्त्यनुरोधेन अनाचरणप्रयुक्तासाम्यनिषेधकेदृश एवेति वाक्यशेषबलेन श्रुत्याद्युक्त्या आचारमध्ये केषाञ्चिच्चरणं केषाञ्चिद्चरणमित्येवं रूपकामाचारपरत्वस्य यद्बादरायणाचार्यैर्वर्णितं तदुभयार्थपरत्वे च सति कथं विधिरूपैकार्थत्वपरत्वमुपेत्य ज्ञानिनो यथेष्टाचारेप्यविशेष उच्यते इति चेन्मैवम्। तथात्वे वाक्यस्य पारिप्लवार्थत्वापत्या प्रामाण्याभावप्रसङ्गात्। किञ्च मास्तु साधकाभावात् ज्ञानिनो विशेषाभावः विशेषे साधकभावाद्भविष्यति। तथाहि। यदि ज्ञानिनः सदसत्प्रवृत्तिभ्यां विशेषः स्यात्तर्हि असत्प्रवृत्या कुण्ठितशक्तिकस्य ज्ञानस्य मोक्षहेतुत्वभङ्गप्रसङ्गेन "अनियमस्सर्वेषा" मित्युक्तमोक्षनियमभङ्गः स्यात्। सत्प्रवृत्तिसमुच्चितस्य ज्ञानस्य मुक्तिहेतु-

तापत्या "विद्यैव तु निर्धारणात्" (ब्र.सू. ३-३-४८) इत्युक्तिविरोधस्स्यात्। ज्ञानिनोऽसत्प्रवृत्या मोक्षाप्रतिबन्धे जिज्ञासेरपि तथा ज्ञानाप्रतिबन्धापातेन वैराग्यपादानर्थक्यप्रसङ्गात्। न च सत्प्रवृत्यादेः न मुक्तिस्वरूपे व्यापारः अपि तु मुक्तावानन्दातिशयाभिव्यक्तितत्प्रतिबन्धयोः व्यापर इति युक्तम्। तथात्वे ज्ञानिनः सर्वान्नभक्षणानुमतिश्रुतिव्याकोपः तत्र सर्वान्नभक्षणेऽपि अविशेषस्यैवोक्तेः। न च तस्य विषयान्तरपरत्वे कल्पकमस्तीति ॥ सिद्धान्तस्तु ॥ अस्त्येव ज्ञानिनः सदसत्प्रवृत्तिभ्यां विशेषः केन स्यादिति वाक्यस्य ज्ञानिमात्रपरतया प्रतीतस्यापि ज्ञानिस्तुतिमात्रपरत्वे सर्वविध्यतिदूरत्वरूपेशलक्षणस्य अनीशेऽतिप्त्याध्यापत्तिरूपबाधकेन विधिपरत्वेऽपि जैमिनिबादरायणाभ्यामुक्तरीत्या सर्वसदाचारनुष्ठानविधिपरत्वम्। सर्वमध्ये केषाञ्चिद्धर्माणामननुष्ठानमित्येव परत्वं तदुक्तरीत्या स्वेच्छाचारविधिपरत्वमित्यर्थत्रय –परत्वस्यापि "विधिनियता मनुष्याः अनियता हि देवाः, ब्रह्मैव स्वेच्छानियत" इति गौपवनश्रुतौ "स्वैच्छयैव प्रवृत्तिस्तु ब्रह्मणो विधिचोदिते" त्यादि (ब्राह्म)स्मृतौ च मानुषदेवविरिञ्चरूपाधिकारभेदेन व्यवस्थोक्त्या विरोधाभावेन ज्ञानिमात्रस्य स्वेच्छाचारस्य वाक्यस्य प्रामाण्यभावात्। ज्ञनिनोऽसत्प्रवृत्या मोक्षाप्रतिबन्धस्य "कामचाराः कामभक्षाः" इति (सामशाखा) श्रुत्या ज्ञानिनो निवर्त्यतया प्राप्तस्यारब्धकर्मणोऽपि किञ्चिदुपभुक्तस्य ज्ञानेनोपमर्दस्य "आत्मानमभिषश्योपमृद्य पुण्यं च पापं चे" ति (तुर)श्रुतिसिद्धतया कैमुत्यन्यायेन च सिद्धत्वेन

अनियम इत्युक्तनियमभङ्गरूपस्य "य इमं परमं गुह्यमूर्ध्वरेतस्सु भाषयेदि"ति (माठरश्रुतौ) ऊर्ध्वरेतस्त्वादिगुणयुक्तेष्वेवोपदेश-विधानेन ज्ञानेऽसत्प्रवृत्या प्रतिबन्धस्य प्रमित्वेन अतिप्रसङ्गरू-पस्य केवलस्य ज्ञानस्यैव मोक्षस्वरूपनिष्पादकत्वेऽपि "पश्य-न्नपीममात्मानं कुर्यात्कर्माविचारयन्। यदात्मनस्सुनियतमान-न्दोत्कर्षमाप्नुयात्" इत्यादि (कौपारव श्रुति) वाक्यबलेन मोक्षे सुखातिशयार्थे सहकारित्वेन सत्प्रवृत्त्यसत्प्रवृत्तिवर्जनयोः अ-पेक्षायामपि ज्ञानकर्मसमुच्चयवादापत्तिरूपस्य च बाधकस्याभा-वात् सर्वान्नानुमतिश्रुतेश्च भाष्याद्युक्तकरणे

बाधकभावात् स्वेच्छाचार उच्यते, करणे प्रमाणाभावा-द्वा, निषेधकप्रमाणाभावाद्वा, करणेबाधकाभावद्वा। नाद्यद्वि-तीयौ असिध्देः। न तृतीयः "एवं पश्यन्न कामचरितं च-रेदि" ति(कौण्डिण्य श्रुतिः) "अतीतानागतज्ञानी त्रैलोक्योद्ध-रणक्षमः। एतादृशोऽपि नाचारं श्रौतस्मार्तं परित्यजेदि"ति च निषेधकश्रुतिस्मृतिभावात्। न चतुर्थः ..आनन्दो ह्रसतेऽका-र्यादि..ति स्मृत्या आनन्दह्रासरूपबाधकस्य भावत्। तस्माद-स्त्येव ज्ञानिनः सदसत्प्रवृत्तिभ्यां मुक्तावानन्दह्रासरूपो विषेष इति। फलं तु असदाचारेऽपि मुक्तिसम्पादनरूपज्ञानमहिमस-मर्थनम् ॥४॥

**॥ ॐ सर्वथापि तु त एवोभयलिङ्गात् ॐ ॥५॥**

॥ ॐ अनभिभवं च दर्शयति ॐ ॥ ॥ ॐ अन्तरा चापि तु तद्दृष्टेः ॐ ॥

॥ ॐ अपि स्मर्यते ॐ ॥ ॥ ॐ विशेषानुग्रहं च ॐ ॥
॥ ॐ अतिस्त्वितरज्च्यायो लिङ्गाच्च ॐ ॥
॥ ॐ तद्भूतस्य तु तद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः ॐ ॥

पूर्वत्र विशेषितत्वादित्यत्र (ब्र.सू. ३-४-२३) प्रकृतैः मन्द-मध्योत्तमरूपाधिकारिभिरेव ज्ञानं प्राप्यं नान्यैरित्यत्रोच्यत इति सङ्गतिः। अत्र ज्ञानं प्राप्य नान्यैरित्यत्रोच्यत इति सङ्गतिः। अत्र ज्ञानं किमयोग्यैरप्याप्य त प्रकृतयोग्यैरेवेति चिन्ता। त-दर्थं योग्यैरेवाप्यमित्यत्र कल्पकं नास्त्युतास्तीति। तथा यो-ग्यप्राप्यत्वपक्षेऽपि किमयोग्यतायाः महाप्रयत्नेनाभिभवेन तेषा-मपि योग्यतोत्पत्तिरस्त्युत नेति। तदर्थमयोग्यता किं तेषाम-स्वभावः त स्वभाव इति। तदर्थं तस्याः स्वभावत्वेन अनभि-भवे ज्ञापकं नास्त्युतास्तीति ॥ पूर्वपक्षस्तु ॥ योग्यनामेवेत्य-त्र प्रमाणाभावत् वेदायोग्यस्य प्रयत्नेन वेदप्राप्तिदर्शनेनायोग्या-नामपि यत्नेन ज्ञानप्राप्तिरस्त्येव। ज्ञानस्य योग्यमात्रप्राप्यत्व-पक्षेऽपि अयोग्यानामयोग्यताभिभवेन योग्यतोत्पत्तिसम्भवात्। विश्वामित्रस्य महाप्रयत्नेन क्षत्रियत्वाभिभवेन विप्रत्वदर्शनात्। न क्षत्रियत्वमस्वाभाविकम् अयोग्यत्वं स्वाभाविकं न प्रयत्नेनाप्य-निवर्त्यमिति शक्यम्। स्वाभाविकत्वे मानाभावात्। स्वाभावि-कत्वे यवकलमबीजादेरिव स्वभावानुसारिफलत्वप्रसङ्गाच्चेति ॥ सिद्धान्तस्तु ॥ देशकालगुरुपसत्त्यादिमहोत्साहेऽपि अयोग्या-नां न ज्ञानप्राप्तिः। किन्तु योग्यानामेव। इन्द्रविरोचनयोश्चतुर्मु-

स्वोपदेशे समानेऽपि न सम्यक् ज्ञानप्राप्तिः प्रत्युत विपरीतज्ञान-हेतुप्रसादस्य मुक्तियोग्येष्वेव "श्रृण्वे वीर उग्रमि" त्यादि (ऋ. ६-४७-१६ ) सिद्धत्वेन तदन्यथानुपपत्त्या च तथावगमात्। न चायोग्यानामपि महाप्रयत्नेनायोग्यताभिभवेन योग्यतोत्पत्तिरस्त्विति युक्तम्। अयोग्यतायाः स्वभावत्वात्। न च ज्ञापकाभावः। "दैवीमेव सम्पत्तिं देवाः"इति श्रुतौ "असुरा आसुरेणैव स्वभावेने"ति (स्कान्द) स्मृतौ च अनभिभवस्य स्वभावत्वस्य च स्पष्टं श्रवणात्। तथा "नासुरा दैवीं न देवा आसुरीम्" इत्यादि नियमश्रुत्या "नासुराणां दैवं रूपमि"त्यतद्रूपवत्वश्रुत्या "तं भूतिरिति देवा उपासाञ्चक्रिरे" इति (ऐ.२-१-८) देवासुरयोरन्योन्यविपरीतीपासनेन सम्यक् फलविपरीतफलश्रुत्या च देवासुरमानुषाणां देवत्वादिस्वभावत्वप्रतिपादकजैमिन्याचार्यमतेन च "कनीयसा एव देवाः ज्यायसा असुराः" इति (बृ. ३-३-१) श्रुत्या "न जनतामि" ति (ब्राह्मे) जनसमहप्रवेशनिषेधान्यथानुपपत्तिरूपलिंगेन चायोग्यतादेः स्वभावत्वानभिभवयोः तत्तत्स्वभावनुसारिफलसत्त्वावगमादिति। फलं तु मोक्षस्य योग्यतामात्रप्राप्यत्वसमर्थनम् ॥५॥

**॥ ॐ न चाधिकारिकमपि पतनानुमानत्तदयोगात् ॐ ॥६॥**

॥ ॐ उपपूर्वमपीत्येके भावशमनवत्तदुक्तम् ॐ ॥

॥ ॐ वहिस्तूभयथापि स्मृतेराचाराच्च ॐ ॥

पूर्वं ज्ञानस्यायोग्याप्राप्यत्वमुक्तमत्र तु योग्येष्वपि देवादिपदाकांक्षाशून्यैरेव प्राप्यते न सर्वैरित्युच्यते इति वा प्रागुक्त-

देवत्वादेः स्वाभाविकत्वमयुक्तम्। प्रयत्नसाध्यताश्रवणेन देवत्वस्यास्वाभाविकत्वादिति शङ्कनाद्वानंतरसङ्गतिः। पूर्वत्र देवानां प्रकृतत्वात् सङ्गतं देवपदं देवेतरैः प्राप्तुं योग्यमुत देवैरेवेति चिन्ता। तदर्थं तत्पदप्राप्त्यर्थं इच्छाप्रयत्नकृतौ बाधकं नास्त्युतास्तीति ॥ पूर्वपक्षस्तु ॥ "स्वधर्मनिष्ठश्च शतजन्मभिः पुमान् विरिंचतामेति" (भा. ४-२४-२५) "वया विष्णोरेपस्य प्रभृथे हविर्भिः विदेहि रुद्रो महित्वमि" त्यादि वाक्यबलेन विरिंचत्वादेः यत्नसाध्यतावगमेन चेतनत्वादिवत् देवत्वादेः स्वाभाविकत्वाभावेन यत्नैः सर्वैः प्राप्तुं शक्यत्वाच्चेतनत्वस्य स्वाभाविकत्वस्य सर्वसंमतत्वात् देवत्वादिप्राप्तौ इच्छाप्रयत्नकृतौ बाधकाभावात्। अन्यथा ज्ञानभक्तयादीच्छाप्रयत्नावपि न स्यातामिति। देवादन्यैर्देवादिपदं प्राप्यमेव किं बहुना भगवदैश्वर्यमपि यत्नेन प्राप्यमिति ॥ सिद्धान्तस्तु ॥ देवतापदं भगवदैश्वर्यं वा न प्राप्यं तदिच्छाप्रयत्नयोरेवायोगात्। ब्रह्मादिपदेच्छावान् देवादिभिः पात्यते अशक्य तत्पदेच्छुत्वात् राजपदेच्छुवत्। देवादिपदप्रयत्नवान् पतति अयोग्य- रोहप्रयत्नवत्वात् अयोग्यवृक्षारोहप्रयत्वयुक्तवदित्यनुमानेन अनर्थावगमात्। न च चेतवत्ववदेवत्वादिकं न स्वाभाविकं इति अयोग्यत्वादि विशेषणमसिद्धं। "देवासुरनरत्वाद्या जीवानां तु निसर्गतः" इति वचनेन स्वभावत्वावगमात् "अन्यत्र शुभमाकांक्षन्नपतेदविरोधतः" इति वचनेन ज्ञानाद्याकंक्षायमनर्थाभावस्यैवावगमेऽति प्रसंगाभावदिति। फलं तु देवतापदवत् ज्ञानमपि योग्यप्राप्यमेवेति प्रागुक्तसमर्थनम् ॥ ६ ॥

**॥ ॐ स्वामिनः फलश्रुतेरित्यात्रेयः ॐ ॥७॥**

॥ ॐ आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते ॐ ॥

॥ ॐ सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॐ ॥

पूर्वत्र ज्ञानस्येत्थंभाव उक्तः अत्र तु फलनिष्पादनप्रकारः उच्यते इति सङ्गतिः । प्रकृतं ज्ञानं तत्त्वाभिमानिदेवानामेव फलनिष्पादकमुत प्रजानामपीति चिन्ता । तदर्थं क्रियाजन्यफलत्वे प्रयोजककर्तृत्वमेव प्रयोजकमुत कर्तृत्वममात्रमपीति । कर्तृत्वमपीत्यत्र हेतुर्नास्ति बाधकं चास्ति उत विपरीतमिति । तदर्थं कर्तृत्वमपि प्रयोजकमिति पक्षेपि किं प्रयोजककर्तृसमानफलत्वमावश्यकमुत नेति ॥ पूर्वपक्षस्तु ॥ कर्तृत्वस्यापि प्रयोजकत्वे संकोचकमानाभावेन स्वामिफलसमफलमेवावश्यं वाच्यम् । तच्च "स्वामी हि फलमश्नुते नास्वामी कर्म कुर्वाणः" इति (माध्यंदिनायन) श्रुत्या आत्रेयाचार्यमतेन च विरुद्धम् । लोके तक्षादेः प्रयोजकाधीनकर्तुरपि क्रियाजन्यफलादृष्टेश्च श्रुत्यादिविरोधरूपबाधकाभावात् साधकभावाच्च न कर्तृत्वमपि प्रयोजकं । किन्तु प्रयोजककर्तृत्वरूपस्वामित्वमपि । सर्वाद्रियादिप्रेरकाणां देवानामेव प्रजाकृतश्रवणादिजन्यज्ञानफलं न प्रजानामिति ॥ सिद्धान्तस्तु ॥ तत्त्वभिमानिदेवानां प्रजाकृतश्रवणादौ प्रयोजककर्तृत्वेन तत्फलस्य संपूर्णस्य "स्वामीही" ति श्रुत्या "ततो महत्तरं प्रोक्तं देवानामि" ति (वाराह) स्मृत्याऽऽत्रेयमतेन च सत्त्वावगमेपि देवानामिति श्रुतिविहिते ज्ञानदानादिकर्मणि प्रजानां ज्ञानो-

त्पत्त्यनुग्रहायैव सहकारित्वेनोपादानात्। सत्रे वैदेहादिना गृहपतिना सहकारित्वेनोपात्तानामृत्विजाम -गृहपतीनामपि फलदर्शनाच्च अस्ति प्रजानामपि कर्तृत्वनिमित्तं ज्ञानजन्यफलमिति। फलं तु अनियम इत्युक्तमुक्तिनियमसमर्थनम् ॥७॥

**॥ ॐ कृत्स्नभावात्तु गृहिणोपसंहारः ॐ ॥८॥**

॥ ॐ मौनवदितरेपामप्युपदेशात् ॐ ॥

पूर्वत्र देवानां संपूर्णफलवत्त्वसुक्तमत्र तु संपूर्णवर्णाश्रमधर्मवत्वमुच्यत इति सङ्गतिः। अत्राश्रमभेदभिन्नेषु ज्ञानिमनुष्येषु किं मुक्तौ गृहस्थ उत्तम उत यतिरिति चिन्ता। तदर्थं सर्वकर्मानुष्ठानयोग्यत्वमेव मुक्तावुत्तमत्वे प्रयोजकमुत चिरकालसाधनानुष्ठानमेवेति। तदर्थँ मुक्तौ यतेराधिक्ये "आचार्यकुलाद्वेदमधीत्ये" त्यादिगृहस्थमोक्षोपसंहारपरवाक्यविरोधोऽस्त्युत नेति। तदर्थँ तत्किं भानुपविषयमुत देवविषयमिति। तदर्थँ देवविषयत्वकल्पकं नास्ति बाधकं चास्ति उत विपरीतमिति ॥ पूर्वपक्षस्तु ॥ आश्रमान्तरस्थानां सर्वसत्कर्मसु योग्यताभावात् गृहस्थानामेव तद्योग्यत्वात्तस्यैवोत्तमत्वे प्रयोजकत्वाद्गृहस्थ एवोत्तमो न यतिः। अन्यथा छंदोगोपनिषद्यष्टमाध्यायान्ते "आचार्यकुलाद्वेदमधीत्ये" त्यादिना गृहस्थस्यैव "ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तते" इति (छां. ८-१५-१) मोक्षोक्तिपूर्वकमुपसंह्रियमाणत्वेन गृहस्थस्यैव मुक्तौ अनुत्तमत्वे तात्पर्यावगमात् तद्विरोधः स्यात्। न चेदं वाक्यं देवपरं कल्पकाभावात्। न च तेषां कृत्स्नगृहस्थधर्मवत्त्वेन मुख्यगृहित्वमेव कल्पकम्। तथात्वे अ-

त्वरया सिद्धिमद्यतिभ्यः त्वरया सिध्दिमद्गृहिणो नीचा इति वादिनः सिद्धान्तिनो मते मानुषयतिभ्यो देवानां मुक्तावाधिक्याभावापातादिति ॥ सिद्धान्तस्तु ॥ गृहस्थस्य सर्वसत्कर्माधिकारसत्त्वेपि तावदाचरणनियमाभावेन तत्संपाद्यमोक्षस्य "त्वरयैव गृहिणस्साधयन्ति मुक्तिमत्वरयैवयतयः" इति (न्यायविवरणोदाहृत) श्रुत्या च अचिरकालीनसाधन साध्यत्वात् यतिमोक्षस्य गृहमोक्षादपि चिरकालसाध्यत्वेनाधिक्यात् यतिरेव मुक्तावधिकः न गृही । न चैवं छंदोगवाक्यविरोधः । "कृत्स्ना ह्येते गृहिण" इत्यादि (पौत्रायण) श्रुतौ देवानमेव कृत्स्नगृहस्थ धर्मवत्त्वेन मुख्यगृहित्वोक्तया छांदोग्यवाक्येपि मुख्यगृहस्थदेवपरत्वस्य मुख्यामुख्यन्यायप्राप्तत्वात् । न चैवं मानुषयतिभ्यो देवानां मुक्तावाधिक्याभावप्रसंगो बाधकः । "कृत्स्ना ह्येते यतयः" इति (पौत्रायण) श्रुतौ कृत्स्नयतिधर्मत्वस्याप्युप्युक्तत्वात् तथा "देवा एव ब्रह्मचारिणः" इति (कैठख्य) श्रुतौ सर्वाश्रमधर्मवत्त्वश्रवणाच्च यतितोप्याधिक्यसिद्धेरिति । फलं तु ज्ञानाधिकारणामाधिक्योक्तया ज्ञानमहिमसमर्थनम् । टीकायां तु गृहस्थ उत्तमो यतिर्वेति संशयानुपदर्शनं तु पूर्वोत्तरपक्षदिशा शिष्यैरेवोहितुं शक्यमिति संदेहान्नोक्तयभिप्रायो भावदीपे व्यक्तः ॥८ ॥

**॥ ॐ अनाविष्कुर्वन्नन्वयात् ॐ ॥९ ॥**

ज्ञानाधिकारिणामाधिक्यं चेदनकेषां ज्ञानाधिकारिणां ज्ञानसंपादने फलाधिक्यादुपदेशोप्याविष्कारेण स्यादिति शङ्कनात्सङ्गतिः । अपरोक्षज्ञानसङ्गतपरोक्षज्ञानहेतूपदेशः किमाविष्कारेण

कार्यमुत नेति चिन्ता। तदर्थमाविष्कारे साधकमस्ति बाधकं च नास्ति उत विपरीतमिति ॥ पूर्वपक्षस्तु ॥ सभाचत्वरादौ स्थित्वोपदेशे बहूनां तत्त्वज्ञानयोग्यानां ज्ञानोदयसम्भवात् तेन च फलाधिक्येन साधकभावात् बाधकाभावाच्च आविष्कारेणैवोपदेशः कार्य इति ॥ सिद्धान्तस्तु ॥ आविष्कारेणोपदेशे योग्यानामिवायोग्यानां उपदिष्टार्थग्रहणप्रसंगात् अयोग्योपदेशस्य च "मानस्तेनेभ्यः" इत्यादि(ऋ.२-२३-१६) श्रुत्या निषिद्धत्वेनानर्थहेतुत्वेन योग्येष्वेव ज्ञानोदयहेतुत्वेन फलातिशयहेतुत्वेन चोपपन्नत्वादनाविष्कारेणैवोपदेशः कार्य इति। फलं तु ज्ञानातिशयसमर्थनम् ॥९ ॥

**॥ ॐ ऐहिकमप्रस्तुतप्रतिबन्धेतद्दर्शनात् ॐ ॥ १० ॥**

पूर्वत्र परोक्षज्ञानस्यातिगोपनाख्येत्थंभावोक्तिरयुक्ता। तस्य दृष्टिरूपफलव्यभिचारेण दृष्टयहेतुत्वादिति शंकानिरासात्सङ्गतिः। अत्र पूर्वत्र प्रकृतपरोक्षज्ञानासाध्यमपरोक्षज्ञानं किं साधनसंपूर्तिजन्मन्येव भवतीति नियमः उत तत्र जन्मान्तरेवेत्यनियम इति चिन्ता। तदर्थं तस्मिन्जन्मन्यनुदये तस्य कदाप्यनुदय एवापाद्यते अथ नेति। तदर्थमनियमकल्पकं नास्त्युतास्तीति ॥ पूर्वपक्षस्तु ॥ श्रवणादिसाधनसंपूर्तिजन्मनि अपरोक्षज्ञानानुदये यागादिसाधनसंपूर्तिजन्मन्येव स्वर्गसुखानुदये तद्देहावच्छेदेन तादृशसुखभोगायोगरूपकारणस्येव इह प्रबलकारणाभावात् तस्य तज्जन्मन्यनुदये जन्मान्तरे तदुदय इत्यत्र कल्पकाभावात् कदाप्यनुदयस्यैवापातात् तस्मिन्जन्मन्येवापरोक्षज्ञा-

नोदय इति ॥ सिद्धान्तस्तु ॥ साधनसंपूर्तिजन्मनि यागफलस्व-र्गानुदये तद्देहावच्छेदेन भोगायोगस्येव इहापि तद्देहे ज्ञानानुदये प्रारब्धकर्मप्रतिबन्धरूपकारणस्य सत्त्वात् तज्जन्मन्यनुदये ज-न्मान्तरे तदुदयस्तदभावे तज्जन्मनीत्यनियम एव । न च कल्प-काभावः "श्रुत्वात्मानं मतिपूर्वं ह्युपास्य इहैव दृष्टिं परमस्य वि-न्देदि" ति श्रुतौ तथावगमादिति । फलं तु श्रवणादेर्ज्ञानहेतुत्व-समर्थनम् ॥ १० ॥

**॥ ॐ एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॐ ॥ ११ ॥**

यथा पूर्वत्र ज्ञानमैहिकमेवेत्यनियमः एवं मोक्षफलमपि तद्दे-हपातानन्तरमेवेति न नियम इति साधनात्सङ्गतिः । अत्र प्रकृत-ज्ञानसाध्योमोक्षः यच्छरीरे ज्ञानमुत्पन्नं तद्देहपातानन्तरमेव भ-वतीति नियम उतानियम इत्येवं पूर्ववदेव चिन्तापरंपरा पूर्वपक्ष-सिद्धान्ताश्च ज्ञेयाः । विशेषस्तु उत्तरत्र ज्ञानसाधनपूर्तिमज्जमनि ज्ञानोदयो जन्मान्तरे वा तदुदय इत्यनियमे प्रारब्धप्रतिबन्धरूप-कारणवत् इह तादृशकारणाभावे कल्पकं नेत्येव विशेषशंकायां "ब्रह्मसंस्थोऽमृतमेती" ति ब्रह्मसंस्थस्य मोक्षावधारणान्यथानु-पपत्तिः "विद्वानमृतमाप्नोती"ति श्रुतिश्चानियमे कारणीभूतप्रति-बन्धाभावतद्भावकल्पकेति समाधानम् । फलं तु अनियम इत्यु-क्तसमर्थनम् ॥ ११ ॥

इति श्रीराघवेन्द्रयतिविरचितायां श्रीमन्नयायमुक्तावल्यां तृतीयाध्यायस्य चतुर्थः पादः ॥ तृतीयाध्यायः समाप्तः

# ॥ अथ चतुर्थोऽध्यायः ॥

## प्रथमः पादः

॥ हरिः ॐ ॥ पूर्वत्र "एवं मुक्तिफलानियम" इति फलपदेन मुक्तिरेव ज्ञानस्य प्रधानं अन्यत्तु आनुंपगिकमिति सूचितं प्रधानं फलमत्राध्याये प्रपंच्यते। तत्र कर्मक्षयोत्क्रान्तिमार्गभोगभेदेन चतुर्विधस्य मोक्षस्य क्रमभावित्वात्तत्सर्वं क्रमात् पादचतुष्टयेपि वदिष्यन् आदौ कर्मक्षयाख्यफलमाहाद्यपादे। तत्र सप्तभिर्नयैः अत्यंतावश्यंभावि साधनं विचार्यते।

**॥ ॐ आवृत्तिरसकृदुपदेशात् ॐ ॥ १ ॥**

॥ ॐ लिङ्गाच्च ॐ ॥

अत्रैहिकमित्यत्र प्रकृतं श्रवणादिकं सकृदनुष्ठेयमुत आवर्तनीयमिति चिन्ता। तदर्थं श्रवणादिविधेरग्निष्टोमादिविधिवत् सकृदनुष्ठान एव पर्यवसानमुत अवघातविधिवदावर्तनमवति। त-

दर्थं ज्ञानं हि श्रवणादेः सकृदनुष्ठानेन भवति उत नेति। तदर्थं ज्ञानस्य सुशकत्वं गुणः उत दुःशकत्वमेव गुणः इति। तदर्थं दुःशकत्वस्य गुणत्वकल्पकं नास्त्युतास्तीति ॥ पूर्वपक्षस्तु ॥ श्रवणादिसाधनं अग्निष्टोमादिवत्सकृदेवानुष्ठेयम्। तावतैव ज्ञानोदयसम्भवेन सकृदनुष्ठान एव श्रवणादिविधेः पर्यवसानात्। न च ब्रीहीनवहन्तीत्यादिविधेः सकृदनुष्ठानेन तुषविमोकरूपफलासिद्धेः अवघातावर्तने पर्यवसानवत् इह किं न स्यादिति वाच्यम्। तथात्वे ज्ञानस्य सकृत्साधनानुष्ठानलभ्यत्वरूपसुशकत्वगुणाभावप्रसंगात्। न च ज्ञानस्य दुःशकत्वमेव गुणः कल्पकाभावदिति ॥ सिद्धान्तस्तु ॥ अवघातदिवच्छ्रवणादिकमावर्तनीयम्। अवघातस्य सकृदनुष्ठानेन तुषविमोकस्येवेह श्रवणादेः सकृदनुष्ठानेन ज्ञानोदयस्यादर्शनेन तद्विधेस्वघात- दिविधिवदावर्तन एव पर्यवसानात्। न च ज्ञानस्य श्रवणाद्यावर्तनसाध्यत्वोपगमे सुशकत्वगुणभंगः। महाफलहेतुज्ञाने दुःशकत्वस्यैव गुणत्वात्। न च ज्ञानस्य दुःशकत्वं गुण इत्युपेत्य श्रवणाद्यावर्तन साध्यत्वोपगमे कल्पकाभावात्। उदालकेन श्वेतकेतुं प्रति "स एषोऽणिमे" त्यादितत्त्वस्य नवकृत्वः छान्दोग्ये षष्ठे उपदिष्टत्वेन तदन्यथानुपपत्तेः श्रवणावृत्तिकल्पकत्वात्। अन्यथा सकृदेवोपदेशकरणापातात्। तथा तैत्तिरीये भृगुवल्यां "तस्मा एतत्प्रोवाच अन्नं प्राणः चक्षुः श्रोत्रं मनोवाचमि"ति श्रुत्या अन्नादिरूपविषय एव भृगोः "अधीहि भगवोब्रह्मे"ति पुनः श्रवणमननध्यानानि कुर्विति भावेन न "तद्विजिज्ञासस्वे" ति वरु-

णस्योक्तिः। श्रुतस्य पुनरालोचनेनापेक्षितत्वमित्येवं रूपलिङ्ग-दर्शनस्य च "नित्यशः श्रवणं चे" ति (ब्रहत्तन्त्र) स्मृतेः श्रवण-मननध्यानावृत्तिकल्पकत्वादिति। फलं तु ऐहिकमित्यादावभि-मतस्य श्रवणादेर्ज्ञानहेतुत्वसमर्थनम् ॥ १ ॥

**॥ ॐ आत्मेतितूपगच्छन्ति ग्राहयन्ति च ॐ ॥ २ ॥**

पूर्वं यज्ज्ञानार्थं श्रवणाद्यावर्त्यमित्युक्तं तस्यात्मत्वस्य स्वा-मित्व शब्दितस्यात्र ध्यानमावश्यकमिति साधनात्सङ्गतिः। अ-त्र प्रकृतात्मत्वोपासनोपदेशो न नित्यशः कार्यावुत कार्यौ इति चिन्ता। तदर्थमात्मत्वरूपस्वामित्वस्यातिप्रसिद्धत्वं तदुपासना-दिप्रतिबन्धकमुत नेति। तदर्थं तस्याप्रतिबन्धकत्वकल्पकं ना-स्त्युतास्तीति ॥ पूर्वपक्षस्तु ॥ आत्मत्वध्यानोपदेशौ न नि-त्यशः कार्यौ तस्य स्वामित्वरूपस्य नित्यप्रसिद्धत्वात्। सुप्रसि-द्धस्य नित्यं सर्वमनसि विपरिवर्तनेन ध्यानोपदेशवैयर्थ्यात्। अ-प्रसिद्धत्वस्यैव उपदेष्टव्यत्वादौ प्रयोजकत्वात् सुप्रसिद्धस्यापि अ-वश्यं ध्यानोपदेशौ कार्यावित्यत्र कल्पकाभावादिति ॥ सिद्धान्त-स्तु ॥ "आत्मत्युपासनं कार्यं सर्वथैव मुमुक्षुभिः" इत्यादि (भ-विष्यत्पर्व) वचनेनान्वयवयतिरेकाभ्यां विष्णुरात्मेत्युपासनोप-देशयोः मोक्षहेतुत्वावगमेन मोक्षार्थोपासनादेः प्रसिद्ध्यप्रसिद्धि-भ्यां कर्तव्यत्वाद्यसिद्धेः नित्यं सर्वथात्मत्वोपासनोपदेशौ कार्या-वेवेति। फलं तु वेदानां स्वामित्वे महातात्पर्यस्य युक्तत्वसमर्थ-नम् ॥ २ ॥

**॥ ॐ न प्रतीके न हि सः ॐ ॥ ३ ॥**

पूर्वोक्तस्वामित्वोपासनाक्षेपेणेह पूर्वपक्षोदयात्सङ्गतिः। सप्तमे "नाम ब्रह्मेत्युपास्ते" "वाचं ब्रह्मेत्युपास्ते" इत्यादिरूपेणा (छां. ७-१-५) श्रुतनामवागादिशब्दितोपास्वाहादिकं ब्रह्माभेदेनोपास्यं उत तत्रस्थत्वेनेति चिन्ता। तदर्थं नामब्रह्मेत्यादिश्रुतिः ऐक्याभिप्रायोत नाम्निब्रह्मेत्यवंरूपेण तत्रस्थत्वाभिप्रायेति। तदर्थं मिथ्योपासनमपि पुमर्थहेतुरुत सत्योपासनमिति ॥ पूर्वपक्षस्तु ॥ नामवागादिकं ब्रह्मतयोपास्यं "नाम ब्रह्मे" ति सामानाधिकरणश्रुत्या तयोरैक्योपासनस्य श्रुतत्वात्। न च "पृथगुपदेशादि" त्यत्र (ब्र.सू. २-३-२८) जीवब्रह्मभेदस्य सिद्धतया नामब्रह्मैक्यं मिथ्यैवेति चेन्न। पूर्वत्र प्रसिद्धय प्रसिद्ध्योरप्रयोजकत्वेन पुमर्थहेतुत्वेनैवात्मत्वोपासनवत् उपास्यवस्तुनः सत्यमिथ्यात्वयोरप्रयोजकत्वेन "यावन्नाम्नो गतं तत्रास्य यथा कामचारो भवती" त्यादिवाक्यशेषश्रुतफलवत्त्वेन तथोपासनसम्भवादिति ॥ सिद्धान्तस्तु ॥ "अचेतनासत्यायोग्यान्यनुपास्यान्यफलत्वविपर्ययाभ्या" मितिसांकर्षणसूत्रेण अनुव्याख्यानोक्तवचनैश्च मिथ्योपासनायाः अफलत्वविपरीतफलत्वयोरुक्तया मिथ्योपास्तेः पुमर्थाहेतुतया तथोपास्तरकर्तव्यत्वात्। "नामादिप्राणपर्यन्त" मित्यादि स्मृतिबलाच्च नाम्निब्रहेत्येव तत्रस्थत्वेनैवोपासनं कार्यं न त्वैक्येनेति। फलं तु प्रागुक्तात्मोपासनसमर्थनम् ॥ ३ ॥

**॥ ॐ ब्रह्मदृष्टिरुत्कर्षात् ॐ ॥ ४ ॥**

पूर्वत्र नामब्रह्मेतिप्रकृतब्रह्मत्वोपास्तेरत्रावश्यकत्वसाधनात्संगतिः। अत्र प्रकृतं ब्रह्मत्वं किं सदा सर्वथोपास्यं न भ-

वति उत भवतीति चिन्ता। तदर्थं तस्य तथोपास्यत्वे हेतुर्ना-स्त्युतास्तीति॥ पूर्वपक्षस्तु॥ न ब्रह्मत्वशब्दितस्योपासनं कार्यं सदा सर्वथेति॥ सिद्धान्तस्तु॥ ब्रह्मत्वे सर्वगुणान्तर्भावेन तस्य भगवदुत्कृष्टत्व- रूपत्वेन इतरगुणेभ्यो ज्यायस्त्वेन तदुपास्तेर्भगवत्प्रीतिविशेषहेतुत्वेन आत्मत्वोपास्तेरिव एतदुपास्ते-रभावे मोक्षासिद्धेश्च मोक्षहेतुभगवत्प्रीतिविशेषजनकत्वात सर्वदा सर्वथैव ब्रह्मत्वमुपास्यम्। तच्च आत्मब्रह्मेत्यात्मत्वविशेषणत-यैवेति न चतुर्गुणोपास्तिनियम भंग इति ध्येयम्। फलं तु भूम्नो ज्यायस्त्वमित्युक्तसमर्थनमिति॥ ४॥

**॥ ॐ आदित्यादि मतयश्चांग उपपत्तेः ॐ ॥५॥**

पूर्वत्र यद्विशेषणतया ब्रह्मत्वं ध्येयमित्युक्तं तदात्मत्वमेव अङ्गाश्रितत्ववन्न ध्येयमिति शंकोदयत्संगति। अत्र देवानां स्वस्वोत्पत्त्यंगाश्रितत्वेनोपासनं देवैः कार्यमिति यदुक्तं "अंगेपुयथाश्रयभावः"(ब्र.सू. ३-३-६३) इत्यत्र तत्किं देवानां सदा सर्वथा न कार्यमुत कार्यमिति चिन्ता। तदर्थं तथा कार्यत्वे विशेष-हेतुर्नास्त्युतास्तीति॥ पूर्वपक्षस्तु॥ गुणान्तरेषु सत्स्वपि विशेषहेत्वभावात् सूर्यादिदेवानां जगतप्रकाशनाद्यर्थं विविधस्थानेषु संचरणेन नित्यं भगवदंगेष्ववस्थित्यभावेन तथोपास्तेर्मिथ्योपा-स्तितया अनर्थफलत्वाच्च न तथोपासनं कार्यमिति॥ सिद्धान्त-स्तु॥ "स्वोत्पत्यगं च देवानां विष्णोश्चिन्त्यमि" ति (नारायण-तन्त्र) स्मृत्या देवानां मुक्तौ भगवदंगप्रवेशस्यावश्यकतया तस्य च सदा तादृशगुणोपासनेन विना सिद्ध्यभावात्। भगवदंगप्र-

वेशरूपकारणसत्त्वात् नित्यं रूपान्तरेण भगवदंगेषु स्थितत्वेन मिथ्योपासनाऽप्रसक्तेश्च स्वाश्रयचक्षुष्कतया सूर्येण, चन्द्राश्रयमनस्कतया चन्द्रेण, ब्रह्माश्रितमूर्धतया ब्रह्मणा, इत्येवंरूपेण देवैः सदा सर्वत्र कार्यमेवोपासनमिति। फलं तु आत्मत्वोपासनसमर्थनमेव सत्यप्याश्रयाश्रयिभावे स्वस्वाभिसम्बन्धस्यापि अनुपास्यत्वापातादिति शंकानिरासात् ॥५ ॥

**॥ ॐ आसीनः सम्भवात् ॐ ॥६ ॥**

॥ ॐ ध्यानाच्च ॐ ॥ ॥ ॐ अचलत्वं चापेक्ष्य ॐ ॥

॥ ॐ स्मरन्ति च ॐ ॥ ॥ ॐ यत्रैकाग्रता तत्राविशेषात् ॐ ॥

पूर्वं संमुग्धतयोक्तोपासनस्य ध्यानस्मरणभेदोक्तिपूर्वमितिकर्तव्यताकथनात्संगतिः। "उपविश्यासने युंज्यादि" ति (भ.गी. ६-१२) षष्ठे गीतायां ध्यानांगत्वेन उक्तमासनादिकं किं नावश्यकमुतावश्यकमिति चिन्ता। तदर्थं आसनेन विनोपासनोपयुक्तः हरौ मनोनिवेशः युक्त उत न युक्त इति ॥ पूर्वपक्षस्तु ॥ भगवद्दृष्टिहेतुपासनस्य हरौ मनोनिवेशमात्रेणोपपत्तेः आसनं नावश्यकम्। न चासनेन विना हरौ मनोनिवेश एव न युक्त इति वाच्यम्। प्रत्याहारादिनापि तत्सम्भवात्। अन्यथा "स्मर्तव्यस्सततं विष्णु" रित्यादिविधीनामनुपपत्तिप्रसङ्गात्। यदि चासनाद्युपदेशान्यथानुपपत्त्या तदावश्यकत्वे च "पर्वताग्रे नदीतीरे" "ब्राह्मे मुहूर्ते उत्थाय" (भा. १०-७७-४) इत्याद्युक्तयन्यथानुपपत्त्या देशादिनियमोप्यावश्यकः स्यादिति ॥ सिद्धान्तस्तु ॥ मनसो विक्षेपाभावेन हरौ निवेशस्य

प्रत्याहारादिन सम्भवेऽपि "अचलश्चेच्छरीरं स्यान्मनसश्चाप्य-चालन" मिति (ब्रह्माण्ड) स्मृत्या शरीराचलत्वेनापि मनसो वि-क्षेपाभावस्यावगमात्। शरीराचलत्वस्य च आसन एव सम्भ-वात्। "समं कायशिरोग्रीव" मित्यादि (भ.गी. ६-१३) स्मृति-बलाच्च उपासनोपयुक्ततया सम्यग्भगवति मनोनिवेशनार्थं आ-वश्यकमेवासनम्। न च नित्योपासनस्यासनावश्यकत्वस्य च विरुद्धत्वादासनस्यावश्यकत्वे "स्मर्तव्यस्सतत" मिति स्मृत्या उपासनविधिविरोधः। स्मरणध्यानरूपेणोपास्तेर्द्वै विध्येन स्म-रणोपासनस्य नित्यं कार्यत्वेन तत्रासननियमेपि कादाचित्क-ध्यानरूपेणोपासने तदावश्यकत्वे विरोधाभावात्। अत एव ना-सनाद्युपदेशवैयर्थ्यम्। न चैवं देशविशेषपादेरपि आवश्यकत्व-प्रसंगः। आसनादिवत् ध्यानोपयोगिताया वा श्रवणादिवत् ज्ञा-नोपयोगिताया वा अभावात्। "तमेवं देशं सेवेते" त्यादि (वा-राह) स्मृतेश्च यत्रैकाग्रता ध्यानस्य स एव देशादिर्ग्राह्यो न पर्व-ताग्रादिनियम इति फलं तु आसनाद्युपदेशसार्थकत्वम् ॥ ६ ॥

**॥ ॐ आप्रायणात्तत्रापि हि दृष्टम् ॐ ॥ ७ ॥**

पूर्वत्र विशेषभावदासनमावश्यकं देशविशेषादि तु विशे-षादि तु विशेषाभावान्नावश्यक -मित्युक्तम्। तद्वदिहापि "ध्या-नाच्चे"ति प्रकृतं ध्यानं ज्ञानपर्यन्त मेव न तु तदनन्तरमपि मुक्ति-पर्यन्तं मुक्तौ तत्कृतविशेषाभावादिति शंकोदयात्संगतिः। अत्र ध्यानाच्चेति प्रकृतं ध्यानं किं ज्ञानपर्यन्तमेवावश्यकमुत मुक्ति-र्यन्तमपीति चिन्ता। तदर्थं ज्ञानार्थं विहितस्य मुक्तिपर्यन्तमनु-

ष्ठाने हेतुर्नास्त्युतास्तीति। तदर्थं मुक्तावानन्दातिशयो ध्याना-दन्येनापि भवत्युत ध्यानेनैवेति॥ पूर्वपक्षस्तु॥ मुक्तावानन्द-वृद्धेः ध्यानादन्येन श्रवणादिसाधनान्तरेणापि सम्भवात् ज्ञाना-र्थं विहितस्य मुक्तिपर्यन्तमनुष्ठाने हेत्वभावान्न मुक्तिपर्यन्तं ध्या-नमनुष्ठेयमिति॥ सिद्धान्तस्तु॥ "योगारूढस्य तस्यैव शमः कारणमुच्यते" इति (भ.गी. ६-३) गीतायां योगारूढस्यापरो-क्षज्ञानिनः शमः ध्यानं परमसुखकारणमित्युक्तया प्राधान्येन ध्यानस्यानंदवृद्धिहेतुत्वावगमात्। "प्रायणान्तमोंकारमभिध्या-यीते" ति (ष.प्र. ५-१) श्रुतेः। "मुक्ता अपि ह्येनमुपासते" इति (सौपर्ण) श्रुत्युक्तकैमुत्यन्यायाच्च कार्यमेव मुक्तिपर्यन्तं ध्यान-मिति। फलं तु यावदधिकारमित्यदौ (ब्र.सू. ३-३-३३) उक्त ता-रतम्यसमर्थनम्। अन्यथा मुक्तौ ज्ञानिनां ध्यानफलाभावप्रसं-गेन तारतम्याभावापातादिति॥७॥

**॥ ॐ तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशो तद्व्यपदेशात् ॐ ॥८॥**

॥ ॐ इतरस्याप्येवमसंश्लेषः पाते तु ॐ ॥

॥ ॐ अनारब्धकार्ये एव तु पूर्वे तदवधेः ॐ ॥

॥ ॐ अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॐ ॥

॥ ॐ अतोऽन्यदपीत्येकेषामुभयोः ॐ ॥

॥ ॐ यदेव विद्ययेति हि ॐ ॥

॥ ॐ भोगेन त्वितरे क्षपयित्वाऽथ संपत्स्यते ॐ ॥

एवं प्रासङ्गिकं समाप्य कर्मक्षयाख्यं मोक्षस्वरूपमेवात्रोच्यत

इत्यवसरसङ्गतिः । “एवं मुक्तिफले” ति (ब्र.सू. ३-४-५१) पूर्वोक्तज्ञानान्मुक्तिरयुक्तेति चिन्ता। तदर्थं मुक्तिप्रतिबन्धकानां ज्ञानपूर्वापरभाविकर्मणां ज्ञानान्नाशादिकमयुक्तमुतयुक्तमिति चिन्ता। तदर्थं नाशाद्यंगीकृतौ बाधकमस्त्युतनेति ॥ पूर्वपक्षस्तु ॥ “एवं मुक्तिफलानियम” इत्यत्र कर्मकृतप्रतिबन्धभावे ज्ञानान्मुक्तिर्भवत्येवेत्युक्तमयुक्तम्। ज्ञानात्पूर्वं पश्चाच्चानुष्ठितकर्मणां प्रतिबन्धकीभूतानां निवृत्त्ययोगात्। तत्किं पूर्वकर्मणां भोगेन निवृत्तिरुत अग्निना तूलस्येव ज्ञानेन नाशः उत्तरेपामलेपः । आद्ये किं तस्मिन्नेव देहे तेषां भोग उतदेहान्तरे। अन्तेऽपि कि क्रमेणोत एकस्मिन्नेव जन्मानि कायव्यूहेन युगपदेवभोगः । नाद्यः । बहुदेहफलकर्मणां भावात्। न द्वितीयः । तथात्वे बहुकालान्तरितज्ञानस्य जीर्णबीजवन्मोक्षहेतुत्वाभावापत्तेः । न तृतीयः । अनीयतदेशकालविपाकत्वात् तादृशानामपि योगप्रभावेनैकदेशकालयोरेव भोग इत्यंगीकारे च योगसामर्थ्याद्भोगाभावप्रसङ्गात्। तद्भोगकालेषु पुनः कर्मान्तरसम्भवेनासमाप्तेश्च । न च करोति ज्ञानी “न हि काश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्” इति (भ.गी. ३-५) गीतोक्तिविरोधात्। न चतुर्थः “नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि” ति स्मृतिविरोधात्। ज्ञानेनैव कर्मक्षये ज्ञानोत्पत्त्युत्तरकालमेव मोक्षापातात्। किं च ज्ञानिनः प्राचीनपुण्यकर्मणोपि ज्ञानेन क्षये “सर्वापेक्षा च यज्ञादिश्रुते” रित्यत्र (ब्र.सू. ३-४-२६) ज्ञानोपयोगोक्तिविरोधः । उत्तरस्याश्लेषेच स्तुतिनयोक्त (ब्र.सू. ३-४-१४) आनन्दातिशयहेतुत्ववि-

रोधः स्यादिति। अनेनैव न्यायेन "अनिष्टादिकारिणा" मिति वैराग्यपादीयएकादशाधिकरणे हरिद्विषां तमः प्राप्त्युक्तिरयुक्ता। द्वेषपूर्तितः प्रागूर्ध्वंसतां कर्मणां भोगेन वा द्वेषपूर्त्या वा नाशस्या-श्लेषस्य वा अयोगादिति ॥ सिद्धान्तस्तु ॥ भोगेन कर्मणां क्ष-यायोगेऽपि ज्ञानोदयानन्तरं कर्मानुष्ठानभावेपि ज्ञानात्मोक्षो युक्त एव। ज्ञानेन पूर्वापरकर्मनाशाश्लेषाभ्युपगमान्नोक्तदोषः। ज्ञानेन प्राचीनानां अप्रारब्धाशेषपापकर्मणां पुण्यमध्येपि अप्रारब्धान-भीष्टकाम्यपुण्यकर्मणामेव नाशोपगमेन तदन्यपुण्यपापयोर्भा-वेन "नाभुक्तमि" तिस्मृतेस्तद्विषयतया तद्विरोधस्य ज्ञानोत्प-त्त्युत्तरक्षण एव मोक्षस्य प्राचीनपुण्यज्ञानोपयोगोक्तयविरोधस्य-चोपपत्तेः। तथोत्तरस्यापि पापस्याशुचित्वाद्यनापादकत्वरूपा-श्लेषस्य अकाम्यपुण्यस्य च मोक्षे सुखातिशयहेतुत्वस्य चोपग-मेन स्तुतिनयोक्तविरोधस्याभावात्। प्रारब्धपुण्यपापानां अप्रा-रब्धकाम्यपूर्वोत्तराभीष्टपुण्यकर्मणां च भोगेन क्षपणसम्भवाच्च। अतो बाधकाभावात् ज्ञानात्कर्मनाशादिकं युक्तमेवेति ज्ञानान्मो-क्षो युक्त एव। एवं द्वेषिणोऽपि द्वेषपूर्तितः प्राक्कृताशेषाप्रारब्धपु-ण्यानां नाशस्य उदीचीनाम् अशेषपुण्यानामश्लेषस्य प्रारब्धपु-ण्यपापानां भोगेन क्षपणस्योपगमत् द्वेषिणस्तमः प्राप्त्युक्तिरप्यु-पपन्नेति। फलं तु प्रागुक्तप्रमेयसमर्थनं व्यक्तम् ॥ ८ ॥

॥ इति श्रीमद्राघवेन्द्रयतिकृतायां न्यायमुक्तावल्यां चतुर्थाध्यायस्य प्रथमः पादः ॥

## अथ द्वितीयः पादः

ज्ञानिनोऽतः पदोक्तमोक्षफलाय ज्ञानभोगाभ्यां कर्मक्षय उक्तः पूर्वपादे। अत्र तु कर्मक्षयसाध्यदेहक्षयक्रम उच्यते इति पूर्वानंतर्यमस्य पादस्य ध्येयम्।

**॥ ॐ वाङ्म्यनसि दर्शनाच्छब्दाच्च ॐ ॥ १ ॥**

॥ ॐ अत एव च सर्वाण्यनु ॐ ॥

ज्ञानिनां देहक्षयो द्विविधः। देवानां स्वोत्तमेषु लयोऽन्येषां ब्रह्मनाडयोत्क्रमणेनेति। तत्र देवानामधिकार्युत्तमत्वादादौ तेषां "अविभागो वचनात्"(ब्र.सू. ४-२-१६) इत्यतः प्राक्तनसप्तभिरधिकरणैः देहलयोभिधीयते। तत्र वागदेव्या भगवत्प्राप्तिलक्षणमोक्षाय मनोदेवेलयोऽशक्यनिर्णयोऽथ शक्यनिर्णय इति चिन्ता। तदर्थं मनोदेवस्य उत्तमत्वं निर्णेतुमशक्यमुत शक्यमिति। तदर्थं मनोदेवस्य उत्तमत्वं निर्णोतुमशक्यमुत शक्यमिति। तदर्थं "वाक्पूर्वरूपं मनउत्तररूपं" "मनः पूर्वरूपं वागुत्तररूपं"(ऐ. ३-१-१) इति व्यामि-श्रोक्तिः वाङ्मनसयोरन्यजन्मोक्तया समप्रधानभावपरा उत अन्यपरेति ॥ पूर्वपक्षस्तु ॥ श्रुतौ व्यामिश्रोक्तया द्वयोः समप्राधान्यावगमेन मनस उत्तमत्वनिर्णयाय "विपर्ययेण तु क्रमोऽत उपपद्यते च" (ब्र.सू. २-३-१४) इत्यत्र स्वसृष्टतया स्वोत्तमदेव एव लयस्य वाच्यत्वात् वाचो मनोलयः अशक्यनिर्णय इति ॥ सिध्दान्तस्तु ॥ वाचो मनोवश्यत्वस्य सर्वप्रत्यक्षसिद्धत्वात् "मनसा वाग्रे सङ्कल्पयत्यथ वाचा व्याहरति"

(ऐ. ३-१-१) इति वाक्प्रवृत्तेः मनः प्रवृत्तिपूर्वकत्वयुक्त्यपेततया विशेषणाच्च मनस उत्तमत्वनिर्णयसम्भवात् वाग्देव्या मनोदेवे-लयोऽस्त्येवेति। न च व्यामिश्रोक्तिविरोधः। तस्याः संहिता-याः पूर्वोत्तरवर्णदेवतात्वे गुणप्रधानभावे च माण्डूकेयतज्जयेष्ठ-पुत्रयोर्विवादपरत्वात्। व्यक्तमेतदैतरेयभाष्ये। फलं तु पूर्वपक्षे वाग्देव्याः मोक्षाभावेनानियमः सर्वेषामित्युक्तयाक्षेपः। सिद्धा-न्ते तत्समाधिः। अत्र वाग्देवी वारुणी सौपर्णी च। मनोदेवः शेषः सुपर्णश्च ज्ञेयाः। एतेन "अग्नौ सर्वे देवा विलीयन्ते अग्नि-रिन्द्रे" इत्यादिश्रुतिबलात्सर्वदेवानामपि स्वस्वोत्तमदेवेषु लयः सिद्धो भवति। तत्र व्यामिश्रोक्तयादिरूपबाधकाभावादिति। अ-त्र टीकायां मनसि लीयते न वेति सन्देहवाक्ये इत्यनिर्णयोऽथ लीयत एवेति निर्णय इति शेषो वा नोभयथापि सम्भवतीति पू-र्वपक्षप्रवृत्तिरिति वा तस्याभिप्रायो ध्येयः। तेन न पूर्वपक्षानानु-गुण्यमितिशङ्का कार्या ॥ १ ॥

**॥ ॐ तन्मनः प्राण उत्तरात् ॐ ॥ २ ॥**

अत्राधिकरणत्रये वाङ्मनसि लीयत इत्यादिश्रौतक्रमात्क्र-मोध्येयः। अत्र मनोदेवस्य प्राणदेवादुत्पत्तिर्नास्त्युतास्तीति ॥ पूर्वपक्षस्तु ॥ प्राणदेवस्य चतुर्मुखस्य सर्वत्र प्रवृत्तिहेतुत्वमिव म-नोदेवस्यापि शेषादेः सर्वत्र प्रवृत्तिकारणत्वेन तत्तदनुभवसिद्धा-न्वयव्यतिरेकाभ्यां सिद्तया चेष्टकत्वसाम्ये मनोदेवस्य प्राणदे-वादनूनबलवत्त्वान्न मनोदेवः प्राणेलीयते। अतो नास्ति मो-क्षः। "विपर्ययेण" त्यत्रोक्तदिशा (ब्र.सू. २-३-१४) अधिकबले

एव न्यूनबलो लीयते इति वक्तव्यत्वात्। न च मनसः प्राण-जत्वात्त तत्र लयः शंक्यः। "तत्प्राक्श्रुतेश्चे" ति (ब्र.सू. २-४-४) सूत्रे मनसो भगवदुत्पत्त्योक्तेरिति ॥ सिद्धान्तस्तु ॥ "वाङ्म-नसि संपद्यते" इत्युक्तया "मनः प्राणे" इति मनोदेवस्य प्राण-देवे संपत्तिशब्दितलयश्रवणात् मनोदेवोपि प्राणदेवे चतुर्मुखे व-चनान्तरबलाद्वाणीद्वारा लीयत "मन उदक्रामत्" इत्याद्यैतरेय श्रुतौ (ऐ. २-१-४) ब्रह्मदेहान्मनोदेवस्योत्क्रमणप्रवेशयोरपि तदे-हपातोत्थानयोरभावस्य प्राणदेवोत्क्रमणप्रवेशयोस्तद्भावस्य श्र-वणेन मनोदेवादपि प्राणदेवस्याधिक्यावगमेन चेष्टकत्वसाध्या-भावद्भगवदुत्पन्नत्वस्य वियत्पदीयन्यायेन प्राणदेवद्वारोपपत्त्या "वायोर्वाव रुद्र उदेती" ति (कौण्डिण्य) श्रुत्या च मनसः प्राण-जन्वाच्च अस्ति मनसो मोक्ष इति ॥ फलं तु पूर्ववत् ॥ २ ॥

**॥ ॐ सोऽध्यक्षे तदुपगमादिभ्यः ॐ ॥ ३ ॥**

अत्र श्रौतक्रमाद्वा पूर्वनयद्वयफलाक्षेपाद्वा सङ्गतिः। अत्र प्रा-णपदोक्तो विरिंचः भगवत्प्राप्तिरूपमोक्षाय हरौ न लीयतेऽथ लीयत इति चिन्ता। तदर्थं तस्ये शाधीनत्वनिश्चयो नास्त्युता-स्तीति। तदर्थं प्राणस्वातन्त्र्यश्रुतिबाहुल्यं अनद्यमानत्वे सत्यत्तृ-त्वमाहात्म्यं च निरवकाशमुत सावकाशमिति ॥ पूर्वपक्षस्तु ॥ "न प्राणः किञ्चिदाश्रित" इति "यस्मिन्निदं सर्वमध्याध्नोदि"ति, "प्राणस्यैतद्वशे सर्वं त्रिदिवे यत्प्रतिष्ठितमि" ति, "वायुना वै गौतम सूत्रेण" (बृ. ५-७-२) इत्यादिश्रुतिबाहुल्येन प्राणस्य अन-न्याधीनत्वावगमेन ईशाधीनत्वानिश्चयात् तत्र विरिंचस्य लयः।

न च "अनन्येश्वरता प्राणे तदन्येश्वरवर्जनमि"त्युक्तदिशा वि-ष्ण्वन्येश्वरवर्जपरत्वेन श्रुतीनां सावकाशत्वं शङ्क्यम्। बहुत्वप्रयु-क्तप्राबल्योपेतानां श्रुतीनां अनन्येत्यादिदुर्बलवचनेन गत्यन्तर-कल्पनायोगात्। अनद्यमान इति प्राणस्य लयाभावोक्तेश्चेति ॥ सिद्धान्तस्तु ॥ अस्त्वेव प्राणपदोक्तविरिञ्चस्य हरौ लयः। प्रा-णस्यास्वातन्त्र्ये श्रुतिबाहुल्यस्येशाधीनत्वेपि "प्राणः परस्यां दे-वतायामि" ति , "प्राणः परमुपगच्छती"ति, "प्राणः परम-नप्राणिती" त्यादिश्रुतिबाहुल्यस्य सत्त्वात्। न च साम्येनेशा-धीनत्वानिर्णयः। स्वातन्त्र्यश्रुतीनां "सर्वैप्राणमुपगच्छन्ती"ति, "प्राण देवा अनुप्राणन्ति" "अनन्येश्वरता प्राणेतदन्यैश्वरवर्जनं" इत्यादि वचनबलेन रुद्रादिसर्वोपजीव्यत्वभगवदन्येश्वरवर्जनप-रत्वेन सावकाशत्वात्। अनद्यमानत्वस्येशादन्यैरनद्यमानत्वे-नोपपत्तेरिति। प्राणस्तेजसीतिश्रुतौ तेजसि श्रीतत्त्वे प्राणस्य ल-यश्रवणं तु "प्राणस्य तेजसि लयो मार्गमात्रमि" तिस्मृत्या त-त्प्राप्तिमात्रपरं न तत्र लयपरम्। विरिंचस्य साक्षात्परमात्मनिल-ययोग्यत्वात् प्राणस्येव तत्र लय इति ज्ञेयम्। "चक्षुरादिवत्तु त-त्सहशिष्टयादिभ्यः" (ब्र.सू. २-४-११) इत्यत्र प्राणस्येशवशत्वो-क्तावपि इह स्वातन्त्र्ये श्रुतिबाहुल्यविशेषाशङ्केति न गतार्थता। फलं तु पूर्वपक्षे विरिञ्चस्य लयाभावे मोक्षाभावेन तदनुप्रविष्टाना-मशेषज्ञानिनामपि मोक्षाभावेन पूर्वोक्तनयद्वयाक्षेपद्वारा अनियम इत्युक्ताक्षेपात्सिद्धान्ते तत्समाधिरिति ॥ ३ ॥

**॥ ॐ भूतेषु तच्छ्रुतेः ॐ ॥ ४ ॥**

पूर्वोक्ताक्षेपेणात्र शङ्कनासङ्गतिः । "वाङ्मनसी" त्यादिश्रुतौ विशिष्योक्तेभ्योऽन्ये देवाः भगवत्प्राप्तिरूपमोक्षाय किमेकस्मिन् भूतमानिनि लीयन्तेऽथ भूतान्तरमानिष्वपीति चिन्ता । तदर्थम् "अग्नौ सर्वे देवा विलीयन्ते" इति श्रुतिः प्रतीतार्थनिर्णायका भवति नवेति । तदर्थं भूतान्तरमानिषु लये प्रमाणं नास्ति प्रागुक्तन्यायश्च अनिर्णायक उतास्ति प्रमाणं प्रगक्तन्यायश्च निर्णायक इति ॥ पूर्वपक्षस्तु ॥ "अग्नौ सर्वे देवा" इति श्रुतेः अग्निदेवे एव सर्वे देवा विलीयऽन्तेन्यत्रापि लीयन्त इत्यत्र प्रमाणाभावाच्च यो यन्नियतः स तत्र लीयत इति प्रागुक्तन्यायस्य नियामकानां बहुत्वेनानिर्णायकत्वात् प्रागुक्तस्वस्वनियामके लय इत्येदयुक्तमिति ॥ सिद्धान्तस्तु ॥ "भूतेषु देवा विलीयन्त" इति भाष्योक्तश्रुत्या पञ्चस्वपि भूतमानिषु यथा स्वस्वनियामके देव विलीयन्ते नियामकानां बहुत्वेपि "अग्नौ सर्वे देवा विलीयन्तेऽग्निरिन्द्रे इन्द्र उमायां उमा रुद्रे" इत्यादिश्रुत्युक्तदिशा निर्णयसम्भवेन प्रागुक्तन्यायस्यानिर्णायकत्वाभावादिति । फलं तु प्रागुक्ताक्षेपसमाधी ॥४ ॥

**॥ ॐ नैकस्मिन्दर्शयतो हि ॐ ॥५ ॥**

अत्रापि पूर्वाक्षेपेण शङ्कनात्सङ्गतिः । पूर्वप्रकृतदेवाः भगवत्प्राप्तिलक्षणमोक्षस्य किं अग्नावेव लीयन्तेऽथ पञ्चस्वपीति चिन्ता । "भूतेषु देवा विलीयन्त" इति प्रागुक्तश्रुतिः सावकाशाथ निरवकाशेति । तदर्थम् "अग्नौ सर्वे देवा" इति श्रुत्यन्यथानुपपत्तिः निरवकाशेन सावकाशा । तदर्थं पञ्चस्वपी-

त्यत्र विशेषप्रमाणं नास्त्युतास्तीति ॥ पूर्वपक्षस्तु ॥ पञ्चस्वपी-त्यत्र विशेषप्रमाणाभावेन अग्नाविति श्रुत्यन्यथानुपपत्तेः गत्य-न्तरकल्पकाभावात् निरवकाशतया भूतेष्विति बहुवचनान्तश्रु-तेः अग्नौ देवानां लयेपि अग्निः स्वजनकवायौ, वायोश्च स्व-जनकाकाशे, लयेन परम्परालयाभिप्रायेण सावकाशत्वकल्प-नादग्नावेव सर्वदेवानां लय इति पञ्चस्वपि लय इति प्रागुक्त-मयुक्तमिति ॥ सिद्धान्तस्तु ॥ "पृथिव्यां ऋभवो विलीयन्त" इति, " ऋभवः पृथिव्यामि" ति च, भाष्योक्तविशेषप्रमाणा-भ्यां प्रत्येकं पञ्चस्वपि भूतमानिषु ऋभुप्रभृतिदेवानां लयश्रव-णादग्नौ सर्वे देवा इति श्रुतेः "अग्नावग्नयो वायाविन्द्र" इ-त्यादि श्रुतौ निर्दिष्टाग्निपुत्राणां प्रायेणाधमानां सर्वेषां भूतान्तराप्र-वेशिनां लयविषयत्वेन सावकाशतया भूतेष्विति श्रुतेः परम्परया लयाभिप्रायरूपामुख्यार्थताकल्पकत्वा-योगात् निरवकाश "भू-तेषु" इतिप्रागुक्तश्रुत्या पञ्चस्वपि भूतमानिषु देवानां प्रागुक्तपञ्च-स्वपि लय इत्येतद्युक्तमिति । फलम् व्यक्तम् ॥५ ॥

**॥ ॐ समना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॐ ॥६ ॥**

॥ ॐ तदपीतेः संसारव्यपदेशात् ॐ ॥

॥ ॐ सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॐ ॥

॥ ॐ नोपमर्देनातः ॐ ॥ ॥ ॐ अस्यैव चोपपत्तेरूष्मा ॐ ॥

॥ ॐ प्रतिषेधादिति चेन्न शारीरात् ॐ ॥

॥ ॐ स्पष्टो ह्येकेषाम् ॐ ॥ ॥ ॐ स्मर्यते च ॐ ॥



तदधीनत्वयुक्तिविशेषश्रुतिभ्यां प्रागुक्तसिद्धान्तन्यायेनात्र

शङ्कनादापवादकी सङ्गतिः। प्राणादुत्तमत्वेन बुद्धिस्थतया प्रकृता, श्रौतक्रमेण वा प्रकृता, चित्प्रकृतिः भगवति लीयते नवेति चिन्ता। तदर्थं प्रागुक्तयुक्तिः, "तेजः परस्यामि" ति विशेषश्रुतिश्चेति द्वयमपि निरवकाशमुत सावकाशमिति। तदर्थं कामादित्यत्रोक्तं (ब्र.सू. ३-३-४०) असंसारित्वं प्रकृतेर-युक्तमुत युक्तमिति। तदर्थं मुक्तत्वं तस्याः किमागन्तु-कमुत स्वाभाविकमिति। स्वाभाविकत्वे भगवता सर्वसाम्यमापतत्युत नेति ॥ पूर्वपक्षस्तु ॥ भगवदधीनत्वयुक्ति "तेज" इतिश्रुतिभ्यां सापि हरौ लीयत एव। अन्यथा वागादीनां मनः प्रभृतिषु ताभ्यामुक्तलयोपि न स्यात्। न च असंसारित्वाल्लयाभावः तस्यैवानुपपत्तेः। न च मुक्तत्वात्तद्युक्तं तस्यागन्तुकत्वात्। स्वाभाविकत्वे भगवता तस्याः सर्वसामम्यापातात्। नित्यं सम्सारराहित्ये गुणान्तरै साम्यस्याप्यापातादिति ॥ सिद्धान्तस्तु ॥ "द्वौ वाव सृत्यनुपक्रमौ प्रकृतिश्च परमश्चे" ति भाष्योक्त (बृहच्छ्रुतिः) श्रुतौ परमपुरुषवत्सर्वगतत्वनित्यत्वयुक्तिभ्यां कदापि संसाराभावस्य तद्धेतुकनित्यमुक्तत्वस्योक्तया भगवदुपासनादिसाधनासाध्यतया मुक्तत्वस्य स्वाभाविकत्वात् तादृशमुक्तिमत्याश्च देव्याः हरेरिव देहत्यागरूपलयायोगात् न प्रकृतिर्लीयते। तदधीनत्वाद्वागादिवत्स्वोत्तमे हरौ लीयत इत्यभिप्रेतानुमानं तु संसारित्वोपाधिग्रस्तम्। "तेजः" इतिश्रुतिरपि "हरेरत्यन्तसामीप्यं लयो लक्ष्म्याः प्रकीर्तितः " इति वचनादतिसामीप्यार्थतयोपपन्ना। प्रकृतेरीशेन सर्वसाम्यापा-

तस्य च "तदपीतेः" "सूक्ष्मं" "अस्यैव चे" ति सूत्रत्रयोक्तैः

मोचकत्वामोचकत्व, परमसूक्ष्मत्वसूक्ष्मत्व, ज्ञानानन्दादिगुणपरिमाणाधिक्य न्यूनत्व, ऊष्मावत्त्वानूष्मावत्व हेतुभिर्निरासात्। सर्वसाम्याभावे ब्रह्मादेरिव नित्यमुक्तत्वादिनापि साम्यं न स्यादिति चोद्यस्य च "नोपमर्देने" तिसूत्रे भगवद्विशेषगुणानुपमर्देनैव देशकालव्याप्त्यादि-किञ्चित्साम्यस्यैव प्रमाणसिद्धत्वोक्तया निरासान्न "असमो वा एप परो" इति श्रुतौ हरेः साम्यनिषेधस्य "प्रतिषेधादि" त्यादिसूत्रत्रयोक्तदिशा जीवविषयत्वादिति। फलं तु पूर्वपक्षे देव्याः संसारित्वात् भगवति लयसद्भावादधिकारित्वेन अधिकारिणां "इयदामननादि" त्यत्रोक्तप्राणावधित्वाक्षेपः सिद्धान्ते तत्समाधानम् ॥ ६ ॥

**॥ ॐ तानि परे तथा ह्याह ॐ ॥ ७ ॥**

पूर्वत्र "विलीनः परमे ह्यमृतत्वमेति" इत्युक्तौ अस्तु अमृतत्वं "सोध्यक्षे" (ब्र.सू. ४-२-४) इत्युक्तस्य प्राणस्य, न "भूतेषु देवा विलीयन्त" इत्युक्तदेवानामिति शङ्कनात्सङ्गतिः। "भूतेषु देवा लीलीयन्त" इत्युक्तदेवाः भगवति न लीयन्तेऽथ लीयन्त इति चिन्ता। तदर्थं किमेते प्राणपदोक्तचतुर्मुखप्रतिबिम्बाः उत भगवत्प्रतिबिम्बाः अपीति। तदधीनत्वे सति तत्सदृशत्वरूपप्रतिबिम्बो हि स्वनियामके बिम्बे लीयते। "प्रतिबिम्बो हरेः प्राणः प्राणस्यान्ये कलाः क्रमात् " इति (कौषारव) श्रुत्या प्राणद्वारा परमात्मनि प्रवेशोपपत्तेः। भगवत्प्रतिबिम्बविरिम्चप्रविष्टानां, विरिम्चस्येश्वरप्रवेशे, परमात्प्रवेशस्यापरिहार्यत्वात्। "आभास एवचे" ति(ब्र.सू. २-३-५०) सूत्रोक्तदिशा सा-

मान्यतोऽशेषजीवानां उक्तरूपप्रतिबिम्बत्वाच्च अस्ति तत्र प्रवेशरूपमोक्षः इति अनियम इत्युक्तं युक्तमिति। फलम् तु व्यक्तम् ॥७॥

**॥ ॐ अविभागो वचनात् ॐ ॥८॥**

पूर्वक्षेपेणात्र शङ्कनात्सङ्गतिः। पूर्वाधिकरणे मोक्षवत्त्वेनोक्ताः देवाः किं मुक्तौ स्वतन्त्राः उतेशाधीना इति चिन्ता। तदर्थमन्याधीनत्वे सम्सारदुःखादिप्रसंङ्गः श्रौतसत्यकामत्वाद्यभावप्रसङ्गश् च अस्त्युत नेति। मुक्तानां पराधीनत्वे सम्सारदुःखरादिप्रसङ्गात् "एते देवा एतमात्मानमनुविश्य सत्याः सत्यकामाः" इत्यादि (गौपवन) श्रुत्युक्तसत्यकामत्वाद्योगाच्च न मुक्ताः पराधीना इति प्रागुक्तमीशाधीनत्वादिरूपं प्रतिबिम्बत्वमयुक्तमिति प्राप्ते "कामेन मे काम आगादि" ति (तै.आ. ३-१५-४) "मुक्तानां सत्यकामत्वमि" ति (ब्राह्म) श्रुतिस्मृतिभ्यां श्रौतसत्यकामत्वादेरीशेच्छानुसारेण इत्यङ्गीकार्यत्वेन स्वतोऽभावात् सत्यकामत्वादेरीशेच्छानुसारित्वादेव दुःखादिप्रसक्तेरप्यभावात्कामितालाभप्रयुक्तत्वात् दुःखादेः भगवदिच्छानुसारेण कामयमानानां मुक्तानां कामितालाभाभावादीशाधीना एव मुक्तावपि ज्ञानिन इति प्रागुक्तं युक्तमिति ॥ सिद्धान्तः ॥८॥

**॥ ॐ तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॐ ॥९॥**

**॥ ॐ रश्म्यनुसारी ॐ ॥ ॥ ॐ निशि नेति चेन्न सम्बन्धात्**

ॐ ॥

॥ ॐ यावदेहभावित्वादर्शयति ॐ ॥ ॥ ॐ अतश्चायनेपि हि दक्षिणे ॐ ॥

पूर्वत्राधिकार्युत्तमक्रमेणादौ देवानां स्वस्वोत्तमेषु देहलयान्मोक्षः सापवादः सप्तमि नयैरुक्तः । अत्र तु नये मनुष्याणामुत्क्रमणेन भगवत्प्राप्तिरूपमोक्ष उच्यते इति पूर्वपेटिकयास्य सङ्गतिर्ध्येया । अत्र ज्ञानिनां देहादुत्क्रान्तिः अज्ञमृतिवदेव अथ ज्ञानशक्त्या ततो विलक्षणेति चिन्ता । तदर्थं ज्ञानं किं तन्मृतेर्विलक्षणतासम्पादना शक्तमुत शक्तमिति । तदर्थं प्रारब्धकर्मशेषो ज्ञानशक्तिप्रतिबन्धको भवत्युत नेति । तदर्थं किम् ज्ञानम् स्वोदयात्फलदानसमर्थं किम् वा कर्मावसान एवेति । तदर्थं स्वोदयात्फलदानशक्तत्वेऽतिप्रसङ्गो ऽस्त्युत नेति ॥ पूर्वपक्षस्तु ॥ स्वोदयमासभ्यैव ज्ञानस्याज्ञमृतेर्वैलक्षण्यरूपफलदानाशक्तत्वे ज्ञस्यादिमृतेरपि अज्ञमृतितो वैलक्षण्यसम्पादकत्वापातेन प्रारब्धावसान एव फलदानशक्तम् न तु तस्मिन्सतीति वाच्यत्वात् "आदेहमि" ति (न्यायविवरणोदाहृत) वचनेन देहपातपर्यन्तंविद्यमानप्रारब्धप्रतिबद्धशक्तिकं ज्ञानम् नाज्ञमृतितो ज्ञानिमृतेर्वैलक्षण्यसम्पादकम् । न च मृतिकाले प्रारब्धम् नेति युक्तम् अज्ञमृतेरिव ज्ञमृतेरपि प्रारब्धनिबन्धनत्वात् । "स्वोदयात्फलदम्ज्ञानमि " ति तु (न्यायविवरणोदाहृतश्रुतिः) फलान्तरपरम् नेयमिति ॥ सिद्धान्तस्तु ॥ स्यादेवम् यदि ज्ञानमात्रमेव वैलक्षण्यसम्पादकम् ज्ञानिमृतेरित्यङ्गीकुर्मः तदा स्यादेवातिप्रसङ्गः ।

न चैवं किं तु स्वहृदयमारभ्यभगवत्प्राप्तिपर्यन्तम् विद्यमानमार्गस्मतिसहितं विद्याप्रसन्नहृद्गतभगवदनुग्रहस्हितमेव। तथा तद्वयं च कर्मावसान एव भवति नान्यदेति नातिप्रसङ्गोऽतः तदुभयसहकृतं ज्ञानमज्ञानिमृतितो ज्ञानिमृतेर्वैलक्षण्यसम्पादकम् भवत्येवेति ज्ञानपादोक्तज्ञानसामर्थ्यं युक्तमेवेति फलम् ध्येयम्। वैलक्षण्यप्रकारश्च हृद्गतभगवत्प्रकाशेन प्रकाशितद्वारया ब्रह्मनाडया यावदेहभाविसूर्यरशिमभिरन्तर्व्याप्तया ज्ञानिनो निर्गमनं नाज्ञस्येति तत्प्रकाशितद्वार इत्यादि सूत्रभाष्याद्युक्तदिशा ज्ञेयः। अत्र यद्यपि ज्ञानिनः अस्त्युत्क्रमणमिति सामान्यतः सिद्धौ किमज्ञमृतितो विलक्षममुत नेति विशेषचिन्ता युक्ता। तथापि वियत्पादे जन्मोक्तयैव लयं सिद्धवत्कृत्य सृष्टिक्रमेणोत वैपरीत्येनेतिचिन्तावदिहापि देवानामन्योन्यप्रवेशेन देहलयोक्तौ तदन्येषां देहादुत्क्रमणमिति लब्धमेवेति सिद्धवत्कृत्येयं विशेषचिन्तेति न दोषः ॥९॥

**॥ ॐ योगिनः प्रति स्मर्येते स्मार्तेचेते ॐ ॥ १० ॥**

पूर्वाक्षेपेण शङ्कनात्सङगतिः। पूर्वत्र प्रधानाङ्गभावेन प्रकृतं विद्या गतिस्मरणं चेत्येतदुभयं गत्यर्थं नावशयकमुतावश्यकमिति चिन्ता। तदर्थं "अग्निर्ज्योतिरहः शुक्लः" इत्यादि (भ.गी. ८-२४) स्मृतिः लोकानुसरणसहाया सती गतेः कालमृत्यधीनत्वपरा। "यं यं वापि" इति (भ.गी. ८-६) स्मृतिः लिङ्गदर्शनं च लोकानुसारादन्यथा नेयमुत "अग्नि" रित्यादिस्मृतिः विद्याधीनत्वपरा यं यं इति वचनमन्यथानेयमिति ॥

पूर्वपक्षस्तु ॥ "अग्निर्ज्योतिरहः शुक्ल" इति स्मृतौ "धूमो रात्रि" रिति (भ.गी. ८-२५) स्मृतौ च ब्रह्मप्राप्तिचन्द्रप्राप्तिगत्योः क्रमादहरात्र्यादिकाल-मृत्यधीनतावगमाल्लोके फलानुस्मृतिं विनापि फलप्राप्तिदर्शनाच्च न गतिप्राप्त्यर्थं गतिस्मृतिः विद्या चापेक्षिता किंत्वहरादिकालस्मृतिरेव । न च "यं यं वापि स्मरन्नि" तिस्मृतौ स्मृतिविषयस्यैव प्राप्यत्वोक्तेस्तद्विरोधितया "आचार्यस्तु ते गतिं वक्तेति" (छां ६-१४-१) श्रुत्यर्थगत्युक्तिरूपलिङ्गविरोधश्चैवं सति प्राप्नोतीति शङ्क्यम् । देहत्यागक्षणे दुःखेन स्मरणाच्छास्त्रादिना पूर्वं जानन्निति ज्ञानमात्रार्थत्वेन स्मरन्नित्यस्य नेयत्वात् । एतेन लिङ्गदर्शनमपि प्रत्युक्तं ज्ञानार्थतया तदुपदेशोपपत्तेः । अन्यथा लोकानुसारविरोधादिति ॥ सिद्धान्तस्तु ॥ आद्यस्मृतौ "ब्रह्मविद" इति "धूम" इति स्मृतौ योगीति च विशेषणाच्च ताभ्यां ज्ञानकर्मरूपोपायसाध्यत्वप्रतीत्या कालमृत्यधीनत्वाप्रतीतेः विद्यादिकमवश्यमपेक्षितमेव । अन्यथा मृत्योस्तद्विशेषणवैयर्थ्यापातात् । अहरादेरभिमानिनयन्यायेन देवतात्वात् कालत्वाभावाच्च "यं यं वापी" ति स्मृतौ त्यागक्षणे स्मृतस्यैव प्राप्यत्वोक्तेः गतिस्मृतिरप्यावश्यकी । न च तत्क्षणे दुःखेन स्मत्ययोगः । महात्मनां देहे सदा हेयत्वबुद्धिभावेन तदा दुःखाभावात् । पामराणामपि काल एव दुःखभावेन तत्क्षणे दुःखाभावाच्च । न च लोकाननुसारित्वदोषः । लोके क्रिया कर्षणादिरूपा । अत्र तु मानसीति अवान्तरवैलक्षण्यमात्रम् । न तावतातदननुसारिता शङ्कनीया अति प्रसङ्गात् । एतेन लिङ्गदर्शन-

मपि नान्यथा नियमिति। फलं तु ज्ञानस्य चतुर्विधमोक्षहेतुत्वा-क्षेपसमाधी ॥ १० ॥

॥ इति श्रीमद्राघवेन्द्रयतिकृतायां न्यायमुक्तावल्यां
चतुर्थाध्यायस्य द्वितीयः पादः ॥

## अथ तृतीयः पादः

पूर्वत्र ब्रह्मनाडयोत्क्रान्तानां ब्रह्मप्राप्तौ यद्गतिस्मरणं विद्यांगत-योक्तं सा गतिस्तद्गम्यं च अत्रोच्यत इति पूर्वपादानन्तर्यमस्य ध्येयम्। न च गतिगम्ययोः द्वयोपरप्युक्तौ पादभेदप्रसङ्गः शङ्क्यः। चरमगम्येन सहितस्यैव मार्गत्वेन मार्गरूपैकार्थत्वेपि मार्गैकदेशचरमगम्यस्य पृथग्विवक्षया गम्यं चोच्यत इत्युक्तेः।

**॥ ॐ अर्चिरादिना तत्प्रथितेः ॐ ॥ १ ॥**

पूर्वत्र यद्गतिस्मरणमावश्यकमित्युक्तं सा गतिः किम् अर्चिर्वायूभयप्राथमिका अर्चिः प्राथमिका वेति चिन्ता। तदर्थं श्रुतिद्वयं निरवकाशमुत सावकाशमिति। तदर्थमुभयप्राथम्यं गतेरविरुद्धमुत विरुद्धमिति। तदर्थं सा किं द्विरूपा उतैकरूपेति गतेरधिकारिभेदेनाक्षिप्तयोर्द्वयोरपि प्राथम्यविरोधेन निरवकाशोत सावकाशेति। "ते अर्चिषमभिसम्भवन्ति"(छां ५-१०-१) "स वायुमागच्छती" ति (बृ. ७-१०-१) श्रुतिद्वयेन अर्चिर्वायूभय-प्राथमिका गतिरिति प्राप्ते सिद्धान्तः ॥ "द्वावेव मार्गौ प्रथिता-वर्चिरादिविपश्चिताम्। धूमादिः कर्मिणामि" ति स्मृतावेक एव मार्गः। स चार्चिरादिक एव न तु वाय्वादिक इति प्रथितपदेन

प्रसिद्धत्वोक्तया "तेऽर्चिषमिति श्रुतेः प्राबल्यात्तदनुरोधेन अर्चिर्नामिकदेवताप्राथमिका एकैव ब्रह्मगतिर्नानेका। स वायु मागच्छतीतिश्रुतिस्तु प्रबलश्रुत्यनुरोधेन अर्चिरनन्तरप्राप्त्यर्थतयोपपन्ना। शिष्टं टीकायाम्॥ फलं तु अधिकारिभेदेन मार्गद्वयस्य व्यवस्थितत्वेपि अहमत्राधिकारीत्यनिर्णयाद्गतिस्मृत्यनुपपत्तिस्तत्समाधिश्चेति ॥१ ॥

**॥ ॐ वायुशब्दादविशेषविशेषाभ्याम् ॐ ॥२ ॥**

पूर्वत्र ब्रह्मप्राप्तिमार्गौ प्रथमप्राप्यदेवतादिनिर्णयः कृतः। अत्र द्वितीयप्राप्यदेवतानिर्णयः क्रियत इति सङ्गतिः। पूर्ववैषम्येण शङ्कनाद्वा सङ्गतिः। पूर्वप्रकृतार्चिरादिमर्गौ वायुदेवताहर्दैवतेत्युभयं द्वितीयप्राप्यमुत वायुदैवतमेवेति चिन्ता। तदर्थं "स वायु" मिति(बृ. ७-१०-१) "अर्चिषोऽहरि" ति (छां. ५-१०-१) श्रुतिद्वयं द्वयोर्द्वितीयप्राप्यत्वप्रापकं भवत्युत नेति। तदर्थं किम् द्वौ मार्गावुतैक एवेति॥ पूर्वपक्षस्तु॥ पूर्वत्र द्वावेव मार्गाविितिविशेषवचनेन अर्चिष एव प्राथम्यावगमेपि इह वायोरेव द्वितीयप्राप्यत्वे विशेषवचनाभावात् "अर्चिपोऽहः" इति "स वायुमि" ति श्रुतिद्वयस्यापि प्रामाण्यात् मार्गभेदेन द्वयोरपि द्वितीयप्राप्यत्वे विरोधाभावच्छ्रुतिद्वयबलात् अहवार्यू द्वावपि द्वितीयप्राप्याविति॥ सिद्धान्तस्तु॥ "स वायुमागच्छती" ति सामान्यवचनेन वायोश्च प्राप्तप्राथम्यस्य "द्वावेव मार्गौ प्रथिता" वित्युक्तप्रसिद्धिविरोधेन त्यागेपि द्वितीयप्राप्यत्वस्य न्यायप्राप्यत्वात् "स इतो गतो द्वितीयां गतिं वायुमागच्छती" ति विशेषश्रुतेश्च वायुरेव द्वितीय-

प्राप्यः अहः तदनन्तरप्राप्यमिति । मार्गद्वयेन द्वयोर्द्वितीयप्राप्य-त्वं तु द्वावेवेतिवचनोक्तप्रसिद्धिविरोधादेव बाधितमिति ॥ फलं तु पूर्वत्रेवेति ॥ २ ॥

**॥ ॐ तटितोऽधि वरुणः सम्बन्धात् ॐ ॥ ३ ॥**

"तेऽर्चिषमभिसम्भवन्ति अषोऽहरह्न आपूर्यमाणपक्षमापूर्यमणपक्षाद्यान् पडुदङ् एति मासान्स्तान् । मासेभ्यः सम्वत्सरमि" त्यादि छन्दोगश्रुत्याद्युक्त(छां. ५-१०-१, २) ब्रह्मप्राप्तिमार्गे यत्र विवादः तदाद्यं द्वितीयं च प्राप्यं निर्णीतम् । अन्यत्र सम्वत्सरपर्यन्तं क्रमप्राप्येषु विवादाभावान्निर्णय एव । सम्वत्सरादनन्तरं प्रजापतिलोकं गन्तुम् किम् तटिद्वरीणौ द्वावपि मार्गभेदेन प्राप्यावुत मार्गैक्येन तटिल्लोकं प्राप्य वेति चिन्ता । तदर्थं "सम्वत्सराद्वरुणलोकमि" ति "सम्वत्सरात्तटितमि" ति च श्रुतिद्वयम् तदुभयप्राप्तिप्रापकं नवेति । नेत्यत्र प्रमाणं नास्त्युतास्तीति । पूर्वत्र द्वितीयां गतिं वायुमिति विशेषवचनेन वायोर्द्वितीयप्राप्यत्वनिर्णयेपीह तादृशप्रमाणाभावात् श्रुतिद्वयप्रामण्याद‍धिकारिभेदाधीनमार्गभेदेन द्वयोरपि प्राप्यत्वोपपत्तेः द्वावपि लोकौ सम्वत्सरमानिलोकानन्तरं प्राप्याविति सङ्गतिपूर्वपक्ष ॥ सिद्धान्तस्तु ॥ "तटितो वरुणं गच्छति तटिता ह्यूह्यते वरुणलोकः" इति विशेषश्रुत्या तटिदनन्तरमेव सयुक्तिकं वरुणलोकस्य प्राप्यत्वोक्तेः मार्गद्वयस्य च द्वावेवेत्यत्रोक्तब्रह्मप्राप्तिमार्गैक्यप्रसिद्धिविरोधयुक्ततया द्वयोरेकस्मिन्मार्गे युगपत्प्राप्यत्वविरोधेन श्रुतिद्वयस्य द्वयोः पौर्वापर्येणैव प्राप्तिप्रापकत्वार्थकत्वस्यावश्यंभावात् पूर्वं

तटिल्लोकं प्राप्य पश्चाद्वरुणलोकं प्रप्नोतीति। फलम् तु मार्गानि-र्णयात्तदनुस्मृत्यनुपपत्तितत्समाधी ॥ ३ ॥

**॥ ॐ आतिवाहिकस्ताल्लिङ्गात् ॐ ॥४ ॥**

॥ ॐ उभयव्यामोहात्तत्सिद्धेः ॐ ॥

पूर्वत्र भिन्नवाक्यगतभिन्नपदार्थयोस्तटिद्वरुणयोः पौर्वापर्यो-क्तौ अत्रैकवायुशब्दार्थ-योरातिवाहिकमुख्ययोः पौर्वापर्यमुच्यत इति सङ्गतिः। द्वितीयां गतिं वायुमागच्छतीति श्रुतौ वायुः कि-मातिवाहिकोऽथ मुख्यवायुरिति चिन्ता। तदर्थं तस्य आतिवा-हिकत्वे मुख्यस्य प्राप्यत्वं न प्राप्नोत्युत प्राप्नोतीति। तदर्थं "द्यौ र्वाव विद्युत्तत्पतिं वायुमुपगम्य तेनैव ब्रह्म गच्छती" ति श्रुतवा-युशब्दै मुख्यो वाऽऽतिवाहिको वेति सन्देहेन प्राक्तनेपि सन्देहा-दनिर्णयः अथ मुख्य इति निर्णय इति। पूर्वत्र तटितो वरुणं ग-च्छतीति सयुक्तिकवचनबलेन पौर्वापर्यनिर्णयेऽपि इह पूर्वः आ-तिवाहिकः चरमो मुख्यः इति वा पूर्वो मुख्यश्चरम आतिवा-हिक इति वा सन्देहे निर्णयाभावात् पूर्वस्यातिवाहिकत्व ज्ञापका-भावात् सोमाग्निन्द्रध्रुवानामपि मार्गे क्रमात्प्राप्यत्वोक्तया तार-तम्यक्रमस्यावाविवक्षितत्वेन मुख्यस्यापि द्वितीयप्राप्यत्वसम्भ-वात् मुखयार्थत्वाच्च मुख्यवायुरेव द्वितीयप्राप्य वायुशब्दार्थो ना-तिवाहिकः। तथात्वे मुख्यस्य प्राप्यत्वाभावप्रसङ्गादिति पूर्ववैष-म्येणापि शङ्कनात्सङ्गतिश्च ॥ सिद्धान्तस्तु ॥ पूर्वप्राप्यत्व, विद्यु-च्छब्दितवाणीपतित्वरूपलिङ्गाभ्यां पूर्वं आतिवाहिकश्चरमो मु-ख्य इति निर्णयसम्भवात्। मुख्यार्थस्यापि पूर्वप्राप्यत्वलिङ्गेन

“उत्क्रान्तस्तु शरीरात्स्वादि” त्यादि भाष्योक्त (ब्रह्मतर्क) वचनेन च त्यागसम्भवात् पूर्वप्राप्य आतिवाहिक एवेति । फलं तु “इयदामननात्” (ब्र.सू. ३-३-३५) इत्यत्रोक्तप्राणाधिकार्युत्तमत्वस्यायोगस्तत्समाधिश्चेति ॥४॥

॥ ॐ वैद्युतेनैव ततस्तच्छ्रुतेः ॐ ॥५॥

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । प्रकृतब्रह्मप्राप्तिमार्गे मुख्यवायोरनन्तरं , ब्रह्मणोऽर्वाक् प्राप्योस्ति नवेति चिन्ता । तदर्थं मुख्यब्रह्मणोरन्तराले प्राप्याङ्गीकारे बाधकं नास्त्युतास्तीति । पूर्वत्र दिवस्पतित्वबाधकेन चरमवायोरातिवाहिकत्वायोगेपि इह मुख्यबह्मान्तराले कस्यचित्प्राप्यस्याङ्गीकारे बाधकाभावन्मुख्यवायुः स्वस्मादनन्तरमपि ब्रह्मेतरप्रायान्तरयुक्तः अधिकारित्वात्प्राचीनाधिकारिवदित्यनुमानाच्च । न च इयदामननादित्यत्रोक्ताधिकार्युत्तमत्वमेव बाधकम् तद्बाधितं चानुमानमिति शङ्क्यम् । “सोमं वैश्वानरं चेन्द्रं ध्रुव”मिति पूर्वत्र भाष्योक्त (ब्रह्मतर्क) स्मृताविन्द्रादवरस्य ध्रुवस्यन्द्रनन्तरम् प्राप्त्युक्तयोत्तमत्वक्रमानुरोधेन प्राप्तिक्रमाभावात् वायोरनन्तरमपि तदन्यः कश्चित्प्राप्योऽस्त्विति प्राप्ते सिद्धान्तः । अधिकार्युत्तमत्वस्य प्राप्यान्तराभ्युपगमाबाधकत्वेपि “तत्पुरुषो मानवः” “स एनान् ब्रह्म गमयति” (छां ५-१०-२) “विद्युत्पतिर्वायुरेव नयेब्रह्म न चापरः”(ब्रह्मतन्त्र) इत्यादिश्रुतिस्मृत्यवगतब्रह्म-प्रापकत्वं वायोः श्रुतं अन्तराले प्राप्यान्तरकल्पनं बाधतत इति स एवान्तिमप्राप्यः । अन्यस्यान्तिमप्राप्यत्वे तस्यैव ब्रह्मप्रापकत्वापत्तेः रा-

जादौ तथा दर्शनादिति । फलं तु वायोरतिशयेन प्राधान्यायोगः तत्समाधिश्चेति ॥ ५ ॥

**॥ ॐ कार्यं बादरिरस्य गत्युपपत्तेः ॐ ॥ ६ ॥**

॥ ॐ विशेषितत्वाच्च ॐ ॥ ॥ ॐ सामीप्यात्तु तद्व्यपदेशः ॐ ॥

॥ ॐ कार्यत्यये तदध्यक्षेण सहातः परमभिधानात् ॐ ॥

॥ ॐ स्मृतेश्च ॐ ॥ ॥ ॐ परं जैमिनिर्मुख्यत्वात् ॐ ॥

॥ ॐ दर्शनाच्च ॐ ॥ ॥ ॐ न च कार्ये पतिपत्त्यभिसन्धिः ॐ ॥

॥ ॐ अप्रतीकालबनान्नयतीति बादरायण उभयथा च दोषात्तत्क्रतुश्च ॐ ॥

॥ ॐ विशेषं च दर्शयति ॐ ॥

ब्रह्मप्राप्तिमार्गे चरमप्राप्तिनिरूपणाद्वा "स एनान् ब्रह्मे" ति पूर्वत्रोदाहृतश्रुतिगतब्रह्मपदार्थ निरूपणाद्वा पूर्वसङ्गतिः । अत्र स एनान् ब्रह्मेति श्रुतं ब्रह्म किम् चतुर्मुख एवाथ ब्रह्मैव उतोभय-मपीति चिन्ता । तदर्थमुभयमितिपक्षे एकैकपक्षोक्तसाधकबाधके समीकर्तुं न शक्येते किं वा शक्येते इति । तथोभप्राप्तिपक्षे युगपदु-भयप्राप्तेरयोगात्तत्र क्रमे प्रमाणं नास्त्युतास्तीति ॥ पूर्वपक्षस्तु ॥ चतुर्मुख एवेदं श्रुत्युक्तं ब्रह्म। यदिह वाव परमभिषश्यति प्रा-प्नोति ब्रह्माणं चतुर्मुख" मिति (कौषारव) श्रुत्या "ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे । परस्यान्ते परात्मानः प्रविशन्ति परम् पदम् " इति स्मृत्या "तथापि प्रकृतेर्बन्धो ब्रह्मणा सह भिद्यते" इत्यादिना चतुर्मुखमुक्तिपर्यन्तं बन्धस्य सन्ततत्वेन ततोवाक् च-

तुर्मुखस्यैव श्रवणादिसाधनैरपरोक्षीकृतत्वात्तस्यैव प्राप्तेर्युक्तत्वादित्युपपत्त्या च चतुर्मुखप्राप्तेरेवावगमेन बाधकेन मख्यार्थस्यापि परब्रह्मणस्त्यागेन अमुख्यार्थविरिञ्चग्रहणोपपत्तेः । न च "ब्रह्मविदाप्नोति परमि" ति (तै. २-१) परब्रह्मप्राप्तिश्रुतिविरोधः । तस्य सामान्यवाक्यस्य प्रागुक्तविशेषश्रुत्यादिना चतुर्मुखप्राप्त्यनन्तरं अचिरेण प्रलयकाले तेन सह परमाप्नोतीति सामीप्यार्थतया सावकाशत्वसम्भवादित्याद्यः । स एनान् ब्रह्मेत्यत्र ब्रह्मपदार्थः परब्रह्मैव ब्रह्मशब्दस्य तत्र मुख्यत्वात् । तस्यैव श्रवणादिसाधनैरेवापरोक्षीकृतत्वाच्चतुर्मुखे च श्रवणादिसाधनार्जितप्रतिपत्तेः चतुर्मुखं प्राप्नुवानीतीच्छायाश्चाभावादितिद्वितीयः । उभयस्वीकारपक्षस्य चोक्तहेतूनां समीकरमायोगात् युगपत्प्राप्त्ययोगश्चेति । क्रमप्राप्तिपक्षस्य च मानाभावेनायोगादिति ॥ सिद्धान्तस्तु ॥ चतुर्मुख एव परब्रह्मैवेत्यन्यव्यावृत्त्या तत्तन्मात्रार्थकत्वे विशेषहेत्वभावेनोक्तहेतूनां तत्तदर्थग्रहणमात्रस्यैवोपपादकत्वात् उभयमपि ब्रह्मशब्दार्थत्वेन अत्र प्राप्तिश्रुतौ विवक्षितम् । यत्तु चतुर्मुखग्रहणे प्रतिपत्त्यभिसन्ध्यभावरूपं बाधकमुक्तं यच्च परब्रह्मग्रहणेन "गत्युपपत्ते" रित्यत्र बन्धस्य सन्ततत्वरूपबाधकमुक्तं तत्राद्यं प्रतीकालंबनानां परप्राप्त्यनङ्गीकारेण तेषां प्रतिपत्त्यादेरभावान्न बाधकम् । द्वितीयं "अप्रतीकाश्रया ये हि ते यान्ति परमेव तु" इति (गारुड) प्रमाणबलेन अमुक्तस्थानगतपरब्रह्मप्राप्त्यङ्गीकारेण चोपपन्नम् । चतुर्मुखप्राप्तिमतं च प्रतीकालंबनानां अस्त्येव कार्ये प्रतिपत्त्यादीति तेषामपि तन्न बाधकमित्यधिकारिभे-

देन पक्षद्वयोक्तहेतूनां उभयार्थत्वाङ्गीकारे समीकर्तुं शक्यत्वात्। "अप्रतीकाश्रया ये हि ते यान्ति परमेव तु। स्वदेहे ब्रह्मदृष्ट्यैव गच्छेब्रह्म सलोकता" मित्युक्तेः योग्यताक्रमेणणैव प्रलये पूर्वं च तयोः प्राप्तिरिति ॥ फलं तु गम्यानिर्णयनिर्णयाभ्यां गत्यनुस्मृतितत्समाधी ॥६ ॥

॥ इति श्रीमद्राघवेन्द्रयतिकृतायां न्यायमुक्तावल्यां चतुर्थाध्यायस्य तृतीयः पादः ॥

## अथ चतुर्थः पादः

कर्मक्षयादि चतुर्विधफले त्रिविधमुक्तवा अत्रावसरप्राप्तो भोग उच्यते ॥

**॥ ॐ सम्पद्याविहाय स्वेन शब्दात् ॐ ॥ १ ॥**

"परं जैमिनि" रित्यत्र (ब्र. सू. ४-३-१२) ब्रह्मप्राप्तिमत्त्वेन प्रकृतो मुक्तः किम् ब्रह्मातिक्रम्य भोगान् भुङ्क्ेऽथानतिक्रम्येति चिन्ता। तदर्थं "एतं सेतुं तीर्त्वाधस्सन्ननंधो भवति" इति श्रुतिरतिक्रमपरोतानतिक्रमपरेति। अनतिक्रमार्थकत्वे कल्पकं नास्त्युतास्तीति ॥ पूर्वपक्षस्तु ॥ "एतं सेतुमि" ति श्रुतेरन्यार्थपरत्वे कल्पकाभावात् सेतुपदोक्तब्रह्म तीर्त्वातिक्रम्येति ब्रह्मातिक्रमानन्तरमेव स्वरूपाविर्भावरूपमुक्तयुक्तया ब्रह्मप्राप्तस्यामुक्तत्वावगमात् मुक्तस्यैव भोगभोक्तृत्वात् ब्रह्मातिक्रम्य मुक्तः सन् भोगान् भुङ्क्ते इति ॥ सिद्धान्तस्तु ॥ "परंज्योतिरुपसम्पद्य" इति (छां ८-३-४) श्रुतौ ब्रह्मप्राप्तस्यैव स्वरूपाविर्भावरूप-

मुक्तत्वस्योक्तेः "इमां घोरामशिवां नदीं तीर्त्वैतं सेतुमाप्ये" ति स्पष्ट (गौद्गल्य) श्रुत्यनुरोधेन एतं सेतुं गन्तुं अन्यत्तीर्त्वा इत्येव तस्याः श्रुतेरर्थस्य वाच्यत्वात् "आत्मानमभिसम्पद्यैतेनात्मना यथाकामं सर्वान् कामाननुभवती" ति श्रुतिश्च ज्ञानी ब्रह्म प्राप्य तदविहायैव भोगन् भुङ्क्ते इति ॥ फलं तु ब्रह्मणश्चरमप्राप्यत्वाक्षेपसमाधी ॥ २ ॥

**॥ ॐ मुक्तः प्रतिज्ञानात् ॐ ॥ २ ॥**

पूर्वाक्षेपेणात्र शङ्कनात्सङ्गतिः । "परम् ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" "स तत्र पर्यैती" ति पूर्वसूत्रोपात्ते श्रुतिशेषे स इत्युक्तेः किममुक्त उत मुक्त इति चिन्ता । तदर्थं स इति तच्छब्दः किमव्यवहितपूर्वपरामर्शकोथ प्राकरणिकपरामर्शक इति । तदर्थमव्यवहितपरामर्शे पर्यैतीत्यादिनोक्तक्रियावत्त्वं बाधकमुत नेति ॥ पूर्वपक्षस्तु ॥ पूर्वत्र परम् ज्योतिसम्पन्नस्याविर्भूतस्वरूपस्य मुक्तस्यैव "स तत्र पर्यैतीति" वाक्यस्येशानतिक्रमेण भोगे मानत्वमभिप्रेत्य सूत्रे स्वेननेतिश्रुत्युक्तिसयुक्ता । स्वेनेतिपूर्ववाक्ये निर्गुणोपासकस्य स्वरूपाविर्भावोक्तेः । स तत्रत्यत्र पुनः दहरविद्योपासकस्यामुक्तस्यैवेह परामर्शात् । न च प्रकरणभेदे कल्पकाभावः । पर्यटनादिवाक्यशेषोक्तक्रियावत्त्वस्यैव कल्पकत्वात् । न हि क्रियावत्त्वं कृतकृत्यस्य मुक्तस्योपपद्यते । अमुक्तस्य तु अन्यदेतादृशभोगायोगेपि ब्रह्मप्राप्तस्य तादृशभोगसम्भवात् । न च द्वितीये "विहारोपदेशादि" त्यत्र (ब्र.सू.  २-३-३४) मुक्तस्य स तत्र पर्यैतीति विहारोक्तेर्न कर्तृत्वं काल्प-

निकमित्युक्तेस्तद्विरोध इति शङ्क्यं तस्यापीहाक्षेपादिति ॥ सिद्धान्तस्तु ॥ "अहरहरेन" मितिभाष्योक्त(बृहत)श्रुतौ ब्रह्मप्रप्तानां सुप्तानाममुक्ततया दिव्यभोगाभावमुक्तवा मुक्तस्यैव तत्प्राप्त्या तादृशभोगोक्तेः । क्रियावत्त्वस्य कृतिमत्त्वस्य मुक्तेपि सिद्धत्वेन तस्य प्रागुक्त परामर्शकत्वेपि बाधकाभावात् स इति तच्छब्दार्थो मुक्त एवेति । फलं तु मुक्तस्य भोगाक्षेपसमाधिश्चेति ॥ २ ॥

**॥ ॐ आत्मा प्रकरणात् ॐ ॥ ३ ॥**

पूर्वत्र स्वेनेति श्रितिशेषस्थतच्छब्दार्थ उक्तः । अत्र पूर्ववाक्यस्थज्योतिः शब्दार्थ उच्यत इति सङ्गतिः । परम् ज्योतिरित्युक्तज्योतिःशब्दार्थः किमादित्योऽथ ब्रह्मेति चिन्ता । तदर्थं "स तेजसि सूर्ये सम्पन्नः" इति (प.प्र. ५-२) समाख्या बलवत्युत प्रकरणमिति । तदर्थं समाख्या निरवकाशोत सावकाशेति । ज्योतिः शब्दस्य "सूर्यमगन्म ज्योति" रित्यादौ आदित्य इव "ज्योतिश्चरणे" त्यादौ (ब्र.सू. १-१-२४) उक्तदिशा भगवति प्रयोगेपि "स तेजसि सूर्ये सम्पन्न" इति (ष.प्र. ५-५) समाख्यया ऐकार्थ्यलाभात्। ज्योतिरत्र आदित्य एव न विष्णुः प्रकरणस्य च वैष्णवत्वेपि प्रसङ्गादन्योक्तिसम्भवात् निरवकाशसमाख्यया बाधाच्चेति प्राप्ते सिद्धान्तः ॥ "य आत्मापहतपाप्मे" त्यादिना (छा १०-७-१) ब्रह्मासाधारणश्रुतिलङ्गाभ्यां ब्रह्मोपक्रम्य परम् ज्योतिरित्यधीतत्वेनास्य वाक्यस्य ब्रह्मप्रकरणस्थत्वात् प्रकरणस्य च समाख्यातो बलवत्त्वात् समाख्यायाश्च प्रारब्धकर्ममोक्षपरत्वेन ब्रह्मप्राप्तिमार्गे अन्तरादित्यप्राप्तिपरत्वेन चोपपत्त्या सावकाश-

त्वात् "परम् ज्योतिः परम् ब्रह्मे" ति (ब्रह्माण्ड) स्मृत्या परंज्योतिः शब्दस्य परमात्मन्येव मुख्यत्वाच्च ब्रह्मैव परम् ज्येतिः शब्दार्थः इति । फलं तु मुक्तस्य ब्रह्मसमीप एव भोग इति प्रागुक्तस्याक्षेपसमाधिश्चिति ॥ ३ ॥

॥ ॐ अविभागेन दृष्त्वात् ॐ ॥ ४ ॥

एवं त्रिभिर्नयैर्मुक्तौ ब्रह्म प्राप्य भोगान् भुङ्क्ते इति सिद्धे सति स भोगः किम् रूप इति विशेषचिन्तनात्सङ्गतिः । मुक्तेषु सायुज्यभाजां भोगः किं भगवदभुक्तस्याथ भगवद्भुक्तशेषस्येति चिन्ता । तदर्थं भुक्तशेषभोगे मुक्तेः परमपुमर्थत्वं हीयत उत नेति ॥ पूर्वपक्षस्तु ॥ मुक्तेः परमपुमर्थत्वेन भगवदभुक्तस्यापि भोग्यस्य सौलभ्यात् भगवदभुक्तानेवभुङ्क्ते । भगवद्भुक्तशेषनियमे च केषाञ्चित्सञ्जातभोगेच्छानां भोगाभावप्रसङ्गेन मुक्तेः पुमर्थत्वहानिः । ईश्वरस्य नित्यपूर्णानन्दत्वेन कदाचिदभोग-स्यापि सम्भवादिति ॥ सिद्धान्तस्तु ॥ मुक्तेः पुमर्थत्वेन भगवदभुक्त-भोगानां सुलभत्वेपि "यानेवाहं श्रुणोमी" ति (चतुर्वेदशिखा) श्रुतौ भगवता भुज्यमानभोगभोक्तत्व-श्रवणान्मुक्तानां भगवद्भुज्यमानभोग्यभोक्तत्वमेवोपेयम् । न चैवं भावद्भुक्ताशेषभोक्तृत्वस्य यानेवेति श्रुतौ प्रतीतेः भगवत्साम्यापत्तिः शङ्क्या । "मुक्ताः प्राप्य परं विष्णुं" इति (भविष्यत्पुराण) विशेषस्मृत्या "तानेवे" ति सामान्यश्रुतेः सङ्कोचात् । न चोक्तरीत्या कदाचिद्भोगाभावप्रसक्तया मुक्तेरपुमर्थत्वं शङ्क्यम् । "पूर्णानन्दः पूर्णभुक् पूर्णकर्तें" ति श्रुतौ पूर्णानन्दत्वेपि पूर्णभोगश्रवणेन तस्याभोगाप्रसक्तेरिति । फलं तु

"अत्ते" त्यादौ (ब्र.सू. १-२-९) उक्तस्य हरेः सर्वभोक्तृत्वस्या-क्षेपः तत्समाधिश्च ॥ ४ ॥

**॥ ॐ ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॐ ॥ ५ ॥**

॥ ॐ चितिमात्रेण तदात्मकत्वादित्यौडुलोमिः ॐ ॥

॥ ॐ एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॐ ॥

पूर्वाक्षेपेण शङ्कनात्सङ्गतिः । प्रकृतो भोगः किम् मुक्तानां न युक्तः उत युक्त इति चिन्ता । तदर्थं तेषां भोगहेतुशरीरं नास्त्युतास्तीति । तथा भौतिकदेहाभावेपि देहान्तरेण न युक्त उत युक्त इति । पूर्वत्रोक्तोमुक्तानां ब्रह्मानतिक्रमेण भोगो वा भगवद्भुक्तभोगो वा न युक्तः । तेषां सम्सारपारङ्गतत्वेन भोगहेतुदेहाभावात् । तत्सत्त्वे मुक्तत्वव्याघातात् । ब्रह्मदेहादिना भोगस्तु न युक्तः । प्रलयादौ तद्भावेपि भोगाभावादिति प्राप्ते सिद्धान्तः । भौतिकादिसर्वस्वदेहाभावेपि "स वा एष ब्रह्मनिष्ठः" इति (माध्यन्दिनायन श्रुतिः) "आदत्ते हरिहस्तेने" ति भाष्योक्तश्रुतिस्मृतिभ्यां परमात्मानं प्रविष्टस्य तद्देहेनैव देहिवद्भोगावगमात् । "गच्छामि विष्णुपादाभ्यां" इति (बृहत्तन्त्र) स्मृत्युक्तया विष्णववयवैरेव गमनादि करोमीति पूर्वस्मरणबलेन मुक्तौ तदेहप्राप्तिमत्त्वयुक्तया च ब्राह्मदेहेन वा "स वा एष एतस्मान्मर्त्याद्विमुक्तश्चिन्मात्रीभवती" त्यादि (सौपर्ण) श्रुत्या "मर्त्यदेहं परित्यज्ये" त्यादि (नारायणाध्यात्म) स्मृत्या भगवदनुगृहीतैः स्वरूपभूतचिन्मात्रदेहावयवै र्वा मुक्ताः भोगान्भुञ्जते कर्माणि च कुर्वन्ति चेति । फलं तु मुक्तेः पुमर्थत्वाक्षेपसमाधी ॥ ५ ॥

॥ ॐ सङ्कल्पादेव च तच्छ्रुतेः ॐ ॥ ६ ॥

पूर्वत्र भोगेऽलौकिकोपकरणानपेक्षोक्ता। अत्र तु लौकिकसाधनापेक्षा नेत्युच्यत इति सङ्गतिः। प्रकृतमुक्तभोगः किं तत्तदुपायसाध्यसाधनसाध्यः उत सङ्कल्पमात्र साध्य इति चिन्ता। तदर्थं भगवदोकस्थत्वयुक्तिः लोकानुसारसहाया सती साधनसाध्यत्वसाधिका भवत्युत नेति चिन्ता। भगवदोकस्थो मुक्तभोगस्तत्तदुपायसाध्यसाधनसाध्यः ओकस्थत्वात् भूम्याद्योकस्थभोगवदितियुक्तया लोके भोगस्य तत्तदुपायसाध्यसाधनसाध्यत्वदृष्टया लोकानुसाराच्च मुक्तभोगोपि तादृश एवेति प्राप्ते सिद्धान्तः॥ "स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ती" ति (छां ८-२-१) श्रुतेः सङ्कल्पमात्रसाध्योमुक्तभोगो न तत्तदुपायसाध्यसाधनसाध्यः। प्रागुक्तयुक्तिस्तु श्रुतिबाधिता सती न साधिका। लोकविरोधस्तु निर्दोषभगदोकसि गुण एवेति। फलं तु संसारसमानधर्मतापत्त्या मुक्तेः पुमर्थत्वाक्षेपस्तत्समाधिश्चेति ॥ ६ ॥

॥ ॐ अत एव चानन्याधिपतिः ॐ ॥ ७ ॥

अत्र प्रागुक्तहेत्वतिदेशादनन्तरसङ्गतिः। प्रकृतो मुक्तः किं क्लृप्तपतिभ्यो ऽन्यपतिनियतः अथ क्लृप्तपतिनियत एवेति चिन्ता। तदर्थं मुक्तावनपेक्षितमपि भवत्युत नेति। लोके राजगृहप्रविष्टस्य अनपेक्षितस्वावरप्रतिहारादिनियतत्वमिव मुक्तस्यापि परगृहगतत्वात् स्वावरनियतत्वं स्यादन्यता लोकविरोधादिति प्राप्ते सिद्धान्तः। लोके सत्यसङ्कल्पत्वादेव मानपेक्षितप्राप्तियु-

क्तेति क्लृप्तषर्तिनियता एव मुक्ताः। न हि मुक्तानामवरनियतत्वमपेक्षितम्। तथा च (वाराह) स्मृतिः "परमोधिपतिस्तेषां" इत्यादिकेति। फलं तु मुक्तस्य सम्सारसमानधर्मवत्त्वतदभावौ ॥७॥

**॥ ॐ अभावं बादरिराह ह्येवं ॐ ॥ ८ ॥**

॥ ॐ भावं जैमिनिर्विकल्पाम्नानात् ॐ ॥

॥ ॐ द्वादशाहवदुभयविधं बादरायणोऽतः ॐ ॥

॥ ॐ तन्वभावे सन्ध्यवदुपपत्तेः ॐ ॥ ॥ ॐ भावे जाग्रद्वत् ॐ ॥

॥ ॐ प्रदीपवदावेशस्तथा हि दर्शयति ॐ ॥

॥ ॐ स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॐ ॥

सङ्कल्पादेवेत्यत्रोक्तसङ्कल्पमात्राधीनभोगाक्षेपेणात्र शङ्कानतसङ्गतिः। "अत एवे" त्यस्य (ब्र.सू. ४-४-९) प्रागुक्तहेत्वतिदेशकतया प्रसङ्गिकत्वेनाव्यवधायकत्वात् प्रकृतो मुक्तानां भोगः न युज्यते उत युज्यते इति चिन्ता। तदर्थं देहभावाभावयोः भोग उपपादयितुमशक्य उत शक्य इति। तथा मुक्तानां देहभावाभावौ विरोधादयुक्तावुत युक्ताविति ॥ पूर्वपक्षस्तु ॥ मुक्तानां देहस्य भावे दुःखादिप्रसङ्गेन निर्दुखभोगोऽ- नुपपादनः। अभावे च भोगासम्भवः। न च ब्राह्मेणेत्यत्रोक्तदिशा ब्राह्मदेहेन भोगो युक्त इति वाच्यम्। सायुज्यभाजां तत्सम्भवेपि अन्येषां तदभावात्। न च चिच्छरीरेण तेषां भोगोपपत्तिः। सुप्त्यादौ सतोपि तस्य भोगायतनत्वादर्शनात्। अतो देहभावेनाभावेन वा भोग-

स्य दुरुपपादनत्वान्न युज्यते भोगः। विरोधादयुक्तै च देहभाव-भाव पक्षाविति ॥ सिद्धान्तस्तु ॥ युज्यते मुक्तानां भोगः। पक्ष-द्वयेपि भोगस्य सूपपादनत्वात्। बाह्यदेहभावे तस्य ज़डत्वेपि शुद्धसत्त्वात्मकतेजोरूपतया दुःखाद्यनापादकत्वेन तत्र सुखानु-भवमात्रस्योपपत्तेः। प्रदीषो यथा तैलाद्येव भुक्ते न तु तद्गतका-ष्ण्यादि तद्वत्। "तीर्णाहि तदा सर्वान् शोकानि" ति (बृ. ६-३-२२) श्रुतेः। देहाभावपक्षेपि यथा स्वप्नावस्थायां बाह्यदेहभिमा-नाभावेपि भोगः तथा मुक्तौ बाह्यदेहाभावेपि चिच्छरीरेणभोगो-पपत्तेः अनभिमानस्याभावसाम्यात्। सुप्तौ मनस उपरतत्वाद-भोगः देहभावाभावपक्षौ च "चिता वाचितावे" ति (उदालकश्रु-तिः) "अशरीरोवाव तदा भवति" इति च (कौठरव्य) श्रुतिसिद्ध-त्वात्। द्वादशाहस्य यजमानेच्छया एकानेककर्तृत्वाभ्यां अही-नत्वसवत्ववत् मुक्तानां स्वेच्छया तेजोरूपबाह्यदेहभावयोरविरो-धाच्च युक्ताविति। तथा च स्मृतिः "स्वेच्छया वा शरीराण तेजो-रूपाणि कानिचित्। स्वीकृत्य जागरितवद्भुक्तवा त्यागः कदा-चनेति। फलं तु नि र्दुःखभोगाभावन्मुक्तेः पुमर्थत्वाक्षेपस्तत्स-माधिश्चेति ॥ ९ ॥

**॥ ॐ जगद्वयापारवर्जम् ॐ ॥९ ॥**

॥ ॐ प्रकरणादसन्निहितत्वाच्च ॐ ॥

॥ ॐप्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॐ ॥

॥ ॐ विकारावर्ति च तथा हि दर्शयति ॐ ॥

एवमनुपपत्तिनिरासेन मुक्तानां भोगे सिद्धेऽत्र मर्यादोच्यते

इति सङ्गतिः। मुक्ताः किं जगद्व्यापारान् कुर्वान्ति नवेति चिन्ता। तदर्थं "सर्वान् कामानाप्त्वेतिश्रुतौ (ऐ. २-५-१) सर्वशब्दोऽसङ्कुचितवृत्तिरुत सङ्कुचितवृत्तिरिति। तदर्थं तत्सङ्कोचकं नास्त्युतास्तीति। तदर्थं "सर्वेऽस्मै देवा बलिमावहन्तीति" (तै. १-५) सर्वदेवपूज्यत्वश्रुतिः सर्वजीवविषया विरिञ्चिविषया वेति। सर्वेस्मै देवा इति श्रुतेर्जिवमात्र विषयत्वात् सर्वान् कामानितिश्रुतेः "शरीरभेदादूर्ध्वः उत्क्रम्ये" (ऐ. २-५-१) त्यादिजीवप्रकरणगतत्वेपि जीवानां तादृशशक्तिकल्पनेन वा शक्तयभावेपि सत्यकामत्वादेव सर्वैश्वर्यसम्भवेन सर्ववाक्यसङ्कोचकाभावात् कुर्वन्त्येव मुक्ताः जगत्सृष्टयादिव्यापारमिति प्राप्ते सिद्धान्तः॥ "माहाचमस्य" इत्युपक्रमेण "सर्वैऽस्मा" इति श्रुतेः विरिञ्चविषयतया सर्वमुक्तविषयत्वाभावेन जीवानां सृष्टयदौ शक्तिकल्पनाभावेन तत्र सामर्थ्याभावात् सत्यकामत्वस्य "स्वाधिकानन्दसम्प्राप्तौ सृष्टयादिव्यापृतिष्वपि। मुक्तानां नैव कामः स्यात्" इति (वाराह) स्मृत्या सृष्टयाद्यन्यकामनावत्त्वेनोपपत्तेः। जगद्व्यापारवर्जमन्यान् कामान् भुक्ते मुक्त इति। अत्र मुक्तविरिञ्चस्याशेषमुक्तनियमनव्यापारोऽन्यदेवानां स्वावरमुक्तनियमनव्यापार-श्चास्तीतिध्येयम्। फलं तु लक्षणसूत्राक्षेपसमाधी॥ ९॥

**॥ ॐ स्थितिमाह दर्शयतश्चैवं प्रत्यक्षानुमाने ॐ॥१०॥**

॥ ॐ भोगमात्रसाम्यलिङ्गाच्च ॐ॥

पूर्वत्र कामपदोक्तविषयभोगयतोक्ता अत्र तु तदभिव्यम्य-

स्वरूपसुखस्य यथास्थितरूपेयत्तोच्यत इति सङ्गतिः। मुक्तः किमानन्दवृद्धिह्रासवान् उत यथास्थितिमानिति चिन्ता। तदर्थं तेषामुपासनादिकं किं वृद्ध्यादिहेतुर्भवत्युत नेति ॥ पूर्वपक्षस्तु ॥ "एतत्साम गायन्नास्ते" (तै. ३-१०) इत्यादौ मुक्तानामुपासनाश्रवणात् तस्य च वैयर्थ्यान्यथानुपपत्त्या फलत्वावश्यंभावात् मुक्तानां वशित्वरूपैश्वर्यबलेन कामिताशेषभोगविशेषसत्त्वाच्च वृद्धिमान् आनन्दस्तदुपरमे च ह्रासवानिति ॥ सिद्धान्तस्तु ॥ एकप्रकारेणैव स्थितिमान् मुक्तानन्दः। "स एष" इति भाष्योक्त (जाबाल) श्रुतौ वृद्ध्याद्यभावमुक्तवा "दर्शन्नेवात्मान" मित्युपासनावचोपि आपत्तिविपत्तिशब्दितबृद्धिह्रासनिषेधात् महतां प्रत्यक्षेण मुक्तो न वृद्ध्यादिमान् कारणशून्यत्वादित्यनुमानेन च वृद्ध्याद्यभावस्य सिद्धत्वात्। उपासनायाश्च "हरेरुपासना चात्र सदैव सुखरुपिणी" ति (ब्रह्मवैवर्त) स्मृत्या स्वयं फलरूपत्वेन फलान्तरसाधनत्वाभावात्। विशित्वेन कामिताशेषभोगप्राप्तावपि अयोग्ये कामनाविरहात् योग्यस्य च प्राप्तत्वात् भोगविशेषेपि तदुपरमादपि न सुखवृद्धिह्रासहेतुतयापि स भोगविशेषः "अवृद्धिह्रासरूपत्वं मुक्तानां प्रायिकं भवेत्। कादाचित्कविशेषस्तु नैव तेषां निषिध्यते" इति (कौर्मे) उक्तदिशा स्वरूपसुकस्यवैचित्र्यहेतुतया वोपपन्न इति। फलं तु सम्सारसमानधर्मताप्त्या मुक्तेरपुमर्थत्वाक्षेपसमाधी ॥ १० ॥

**॥ ॐ अनावृत्तिश्शब्दादनावृत्तिश्शब्दात् ॐ ॥ ११ ॥**

पूर्वत्र मुक्तानन्दस्य वृद्ध्यादि नेत्युक्तम्। अत्र तु तदनुभवस्यान्तो नास्तीत्युच्यत इति सङ्गतिः। प्रकृतो मुक्तः किं ज-

न्ममृत्यादिप्राप्तिरूपपुनरावृत्तिमानुत नेति चिन्ता। तदर्थं मुक्तस्य समस्तकालवासित्वं पुनरावृत्तावबाधकमिति। तदर्थं समस्तस्यापि कालस्य समाप्तिरस्त्युत नेति ॥ पूर्वपक्षस्तु ॥ स्वर्गादिस्थस्येव मुक्तस्याप्यस्ति पुनरावृत्तिः। मुक्तस्य समस्तकालवासित्वेपि समस्तस्यापि कालस्य कदाचित्समाप्तिसम्भवात्। न च कालस्यानत्यात् समाप्तेरसम्भवः। भारतयुद्धे "चतुर्दशीं पञ्चदशीं भूतपूर्वां तु षोडशीं। इमां तु नाभिजानामि अमावास्यां त्रयोदशीं" इति (महाभारते) त्रयोदश्याः असम्भावितपञ्चदशीत्वदर्शनादिति ॥ सिद्धान्तस्तु ॥ कालस्य समस्तस्यापि समाप्तेः व्याहतत्वेन अनन्तकालावसायित्वात् स्वर्गिणो मन्वन्तराद्यवसायितया पुनरावृत्तावपि न मुक्तस्य पुनरावृत्तिः "न च पुनरावर्तते" इति श्रुतेश्च। "सर्वान् कामानाप्नोति" इति श्रुतौ सर्वकामाप्तेः श्रवणेन श्रुतावपुनरावृत्तेः कामितत्वाच्च न पुनरावृत्तिरिति नित्यनिर्दुःखानन्दानुभववन्त एव मुक्ता इति। फलम् तु मुक्तेः पुमर्थत्वाक्षेपसमाधी ॥ ११ ॥

**कल्याणगुणपूर्णाय दोषदूराय विष्णवे।**
**नमः श्रीप्राणनाथाय भक्ताभीष्टप्रदायिने ॥**

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीमत्सुधीन्द्रगुरुपादशिष्य राघवेन्द्रयतिकृतायां न्यायमुक्तावल्यां चतुर्थाध्यायस्य चतुर्थः पादः ॥ समाप्तोऽयं ग्रन्थः ॥

**॥ श्रीमद्धनुमद्भीममध्वान्तर्गत श्रीरामकृष्णवेदव्यासात्मक श्रीलक्ष्मीनरसिंहः प्रीयताम् ॥ श्री कृष्णार्पणमस्तु ॥**